ನಾಗರಿಲಿಪಿಯಲ್ಲಿರುವ ಅನೇಕ ತಾಳಪತ್ರಗಳನ್ನು ಪ್ರತಿ ತೆಗದು ಸಿದ್ಧಪಡಿಸಿದೆ. ವಿದ್ಯಾವಾಚಸ್ಪತಿ ಪ್ರಭಂಜನಾಚಾರ್ಯರು, ವಿದ್ವತ್‌ಪ್ರವರ ರಾಜಾ ಗಿರಿ ಆಚಾರ್ಯರು, ವಿದ್ವಾನ್ ರಾಜಾ ಪವಮಾನಾಚಾರ್ಯರು, ಡಾ।ವೀರನಾರಾಯಣ ಪಾಂಡುರಂಗಿ, ವಿ। ಮಾಧವ ಪಾಂಡುರಂಗಿ ಮೊದಲಾದ ಮಹನೀಯರು ತಮ್ಮಲ್ಲಿರುವ ಹಸ್ತಪ್ರತಿಗಳನ್ನು ನೀಡಿ ಈ ಕಾರ್ಯಕ್ಕೆ ಸ್ಫೂರ್ತಿ ತುಂಬಿದರು. ನಾನು ಯಥಾಮತಿ ಲೇಖಕದೋಷಗಳನ್ನು ಶೋಧಿಸಿ ಈ ಕೃತಿಗಳನ್ನು ಸುಜನರ ಮುಂದೆ ಇರಿಸಿರುವೆ. ನನ್ನ ಅಜ್ಞಾನದ ಮೂಲಕ ಅನವಧಾನದ ಮೂಲಕ ಉಳಿದ ದೋಷಗಳನ್ನು ವಿದ್ವಾಂಸರು ಗಮನಕ್ಕೆ ತರಬೇಕಾಗಿ ಪ್ರಾರ್ಥನೆ. **ಈ ಕೃತಿಗಳ ಸಂಪಾದನೆಗೆ ಬಳಸಿದ ತಾಳಪತ್ರಗಳು, ಕಾಗದದ ಹಸ್ತಪ್ರತಿಗಳು ಹಾಗೂ ಅವುಗಳ ಪ್ರಾಪ್ತಿಸ್ಥಾನದ ವಿವರಗಳನ್ನು ಗ್ರಂಥದ ಕೊನೆಯಲ್ಲಿ ನೀಡಲಾಗಿದೆ.**

ಶ್ರೀಹರಿವಾಯುಗಳ ತತ್ತ್ವಾಭಿಮಾನಿ ದೇವತೆಗಳ ಕರುಣೆಯ, ಪರಮಾನುಗ್ರಹದ ಫಲವೇ ಈ ಕೃತಿಯ ಆವಿಷ್ಕಾರ. 'ಕ್ರಮಿಯಿಂದ ರಾಜ್ಯವಾಳಿಸಿದ' ಕರುಣಾಮಯ ಶ್ರೀಹರಿಯ ಪದಕಮಲಗಳಿಗೆ ನನ್ನ ಅನಂತಪ್ರಣಾಮಗಳು. ತತ್ತ್ವಾಭಿಮಾನಿ ದೇವತೆಗಳಿಗೂ ವ್ಯಾಖ್ಯಾನ (ಟಿಪ್ಪಣೀ) ಕಾರರಾದ ಎಲ್ಲ ಪ್ರಾಚೀನ ಗುರುವರೇಣ್ಯರಿಗೂ ಸಾಷ್ಟಾಂಗ ನಮಸ್ಕಾರಗಳನ್ನು ಅರ್ಪಿಸುವೆ.

ಪ್ರೇರಣೆ ನೀಡಿದ ಶ್ರೀವಿದ್ಯಾಮಾನ್ಯ ತೀರ್ಥಶ್ರೀಪಾದರು ಮತ್ತು ವಿದ್ಯಾಗುರುಗಳಾದ ಶ್ರೀಪೇಜಾವರ ಮಠದ ಶ್ರೀಶ್ರೀವಿಶ್ವೇಶತೀರ್ಥಶ್ರೀಪಾದರ ಅನುಗ್ರಹ ಬಲದಿಂದ ಕಿಂಚಿತ್ ಸೇವಾಕಾರ್ಯ ನಡೆದಿದೆ. 'ಪರಗುಣ ಪರಮಾಣೂನ್ ಪರ್ವತೀಕೃತ್ಯ' ಎಂಬ ನ್ಯಾಯದಂತೆ ಸುಜನರು ಇದನ್ನು ಸ್ವೀಕರಿಸಿ ಹರಸಬೇಕೆಂದು ಪ್ರಾರ್ಥಿಸುವೆ. ಪರಮಪೂಜ್ಯ ಗುರುದ್ವಯರಿಗೆ ನನ್ನ ಶಿ.ಸಾ. ಪ್ರಣಾಮಗಳನ್ನು ಅರ್ಪಿಸುತ್ತೇನೆ.

ಹಸ್ತಪ್ರತಿಗಳ ಪ್ರತಿ ತೆಗೆದು ಮುದ್ರಣಕ್ಕೆ ಬಳಸಿಕೊಳ್ಳಲು ಅನುಮತಿ ನೀಡಿದ್ದ ಪ್ರಾಚ್ಯ ವಿದ್ಯಾ ಸಂಶೋಧನಾಲಯದ ನಿರ್ದೇಶಕರಾಗಿದ್ದ ಡಾ। ಕೆ.ವಿ. ರಮೇಶ್ ಅವರಿಗೆ ನನ್ನ ಆದರದ ನಮನಗಳು.

ಹಸ್ತಪತ್ರಿಗಳನ್ನು ನೀಡಿ ಬೆನ್ನು ತಟ್ಟಿದ ಎಲ್ಲ ವಿದ್ವಾಂಸರಿಗೂ ನಾನು ಹೃತ್ಪೂರ್ವಕ ವಂದನೆಗಳನ್ನು ಅರ್ಪಿಸುತ್ತೇನೆ. ವಿ। ಹೆಚ್.ಪಿ. ನಾಗರಾಜಾಚಾರ್ಯರು, ವಿ।ಪ್ರದೀಪಸಿಂಹಾಚಾರ್ಯರು, ವಿ। ರಘೂತ್ತಮಾಚಾರ್ಯ ನಾಗಸಂಪಿಗೆ, ವಿ।ಶಂಕರನಾರಾಯಣ ಅಡಿಗ, ವಿ। ರಂಗನಾಥ ಕಟ್ಟಿ ಇವರೂ ಕೆಲವು ಭಾಗ ಕರಡುಪ್ರತಿ ತಿದ್ದುವಲ್ಲಿ ಉಪಕರಿಸಿದ್ದಾರೆ. ಇವರೆಲ್ಲರಿಗೂ ನಾನು ಋಣಿಯಾಗಿದ್ದೇನೆ.

ಇತಿ ಸುಜನವಿಧೇಯ

**ಡಾ। ಎ.ವಿ. ನಾಗಸಂಪಿಗೆ**

# तारतम्यप्रबन्धविषयानुक्रमणिका

## 1. सर्वमूलग्रन्थेषु तारतम्यनिरूपणम्

### I. ब्रह्मसूत्रानुव्याख्यानम् 3.3.35

उषाः स्वाहा च पर्जन्यो मित्रोऽग्निर्वरुणो विधुः ।
प्रवहोऽनिरुद्ध इन्द्रोमे रुद्रो वाणी च मारुतः ।
उत्तरोत्तरतश्चैते गुणैः सर्वैश्च मुक्तिगाः ।
सूर्यधर्मौ यथा सोमो मनुर्दक्षो बृहस्पतिः ।
शची रतिश्चानिरुद्धसमास्तारा च मित्रवत् ।
सोमवच्छतरूपा तु प्रसूतिर्वह्निवद्विराट् ।
पर्जन्यवद् वारुणी च तथा सञ्ज्ञा च रोहिणी ।
धार्मी च मित्रवत्त्वेव प्रावही परिकीर्तिता ।
मित्रपर्जन्यमध्यस्थावश्विनौ विघ्नवित्तपौ ।
भृगुरग्निसमो मित्र तन्मध्ये ब्रह्मपुत्रकाः ।
वरुणाग्न्यन्तरा तत्र नारदः प्राय इन्द्रवत् ।
कामः सुपर्णी चोमावद् वीन्द्रो रुद्रवदीरितः ।
निर्ऋतिर्मित्रसदृशो विश्वामित्रः कसूनुवत् ।
वैवस्वतो मनुश्चाश्विपश्चादन्ये ततोऽवराः ।
च्यवनोचथ्यवैन्याश्च शशिबिन्दुश्च हैहयः ।
तद्वच्च विप्रराजन्यविशेषोऽत्रापि कश्चन ।
तद्वत्प्रियव्रतश्चापि तदन्याः शतदेवताः ।
पर्जन्यमित्रान्तराले तदन्ये तु ततोऽवराः ।
एतेभ्योऽभ्यधिका श्रीस्तु सदा मुक्ता विशेषतः ।
तत्समो नास्ति परमो हरिरेव न चापरः ।

* * * *

ನಾಗರಿಲಿಪಿಯಲ್ಲಿರುವ ಅನೇಕ ತಾಳಪತ್ರಗಳನ್ನು ಪ್ರತಿ ತೆಗದು ಸಿದ್ಧಪಡಿಸಿದೆ. ವಿದ್ಯಾವಾಚಸ್ಪತಿ ಪ್ರಭಂಜನಾಚಾರ್ಯರು, ವಿದ್ವತ್‌ಪ್ರವರ ರಾಜಾ ಗಿರಿ ಆಚಾರ್ಯರು, ವಿದ್ವಾನ್ ರಾಜಾ ಪವಮಾನಾಚಾರ್ಯರು, ಡಾ।ವೀರನಾರಾಯಣ ಪಾಂಡುರಂಗಿ, ವಿ। ಮಾಧವ ಪಾಂಡುರಂಗಿ ಮೊದಲಾದ ಮಹನೀಯರು ತಮ್ಮಲ್ಲಿರುವ ಹಸ್ತಪ್ರತಿಗಳನ್ನು ನೀಡಿ ಈ ಕಾರ್ಯಕ್ಕೆ ಸ್ಫೂರ್ತಿ ತುಂಬಿದರು. ನಾನು ಯಥಾಮತಿ ಲೇಖಕದೋಷಗಳನ್ನು ಶೋಧಿಸಿ ಈ ಕೃತಿಗಳನ್ನು ಸುಜನರ ಮುಂದೆ ಇರಿಸಿರುವೆ. ನನ್ನ ಅಜ್ಞಾನದ ಮೂಲಕ ಅನವಧಾನದ ಮೂಲಕ ಉಳಿದ ದೋಷಗಳನ್ನು ವಿದ್ವಾಂಸರು ಗಮನಕ್ಕೆ ತರಬೇಕಾಗಿ ಪ್ರಾರ್ಥನೆ. **ಈ ಕೃತಿಗಳ ಸಂಪಾದನೆಗೆ ಬಳಸಿದ ತಾಳಪತ್ರಗಳು, ಕಾಗದದ ಹಸ್ತಪ್ರತಿಗಳು ಹಾಗೂ ಅವುಗಳ ಪ್ರಾಪ್ತಿಸ್ಥಾನದ ವಿವರಗಳನ್ನು ಗ್ರಂಥದ ಕೊನೆಯಲ್ಲಿ ನೀಡಲಾಗಿದೆ.**

ಶ್ರೀಹರಿವಾಯುಗಳ ತತ್ತ್ವಾಭಿಮಾನಿ ದೇವತೆಗಳ ಕರುಣೆಯ, ಪರಮಾನುಗ್ರಹದ ಫಲವೇ ಈ ಕೃತಿಯ ಆವಿಷ್ಕಾರ. 'ಕೃಮಿಯಿಂದ ರಾಜ್ಯವಾಳಿಸಿದ' ಕರುಣಾಮಯ ಶ್ರೀಹರಿಯ ಪದಕಮಲಗಳಿಗೆ ನನ್ನ ಅನಂತಪ್ರಣಾಮಗಳು. ತತ್ತ್ವಾಭಿಮಾನಿ ದೇವತೆಗಳಿಗೂ ವ್ಯಾಖ್ಯಾನ (ಟಿಪ್ಪಣೀ) ಕಾರರಾದ ಎಲ್ಲ ಪ್ರಾಚೀನ ಗುರುವರೇಣ್ಯರಿಗೂ ಸಾಷ್ಟಾಂಗ ನಮಸ್ಕಾರಗಳನ್ನು ಅರ್ಪಿಸುವೆ.

ಪ್ರೇರಣೆ ನೀಡಿದ ಶ್ರೀವಿದ್ಯಾಮಾನ್ಯ ತೀರ್ಥಶ್ರೀಪಾದರು ಮತ್ತು ವಿದ್ಯಾಗುರುಗಳಾದ ಶ್ರೀಪೇಜಾವರ ಮಠದ ಶ್ರೀಶ್ರೀವಿಶ್ವೇಶತೀರ್ಥಶ್ರೀಪಾದರ ಅನುಗ್ರಹ ಬಲದಿಂದ ಕಿಂಚಿತ್ ಸೇವಾಕಾರ್ಯ ನಡೆದಿದೆ. 'ಪರಗುಣ ಪರಮಾಣೂನ್ ಪರ್ವತೀಕೃತ್ಯ' ಎಂಬ ನ್ಯಾಯದಂತೆ ಸುಜನರು ಇದನ್ನು ಸ್ವೀಕರಿಸಿ ಹರಸಬೇಕೆಂದು ಪ್ರಾರ್ಥಿಸುವೆ. ಪರಮಪೂಜ್ಯ ಗುರುದ್ವಯರಿಗೆ ನನ್ನ ಶಿ.ಸಾ. ಪ್ರಣಾಮಗಳನ್ನು ಅರ್ಪಿಸುತ್ತೇನೆ.

ಹಸ್ತಪ್ರತಿಗಳ ಪ್ರತಿ ತೆಗೆದು ಮುದ್ರಣಕ್ಕೆ ಬಳಸಿಕೊಳ್ಳಲು ಅನುಮತಿ ನೀಡಿದ್ದ ಪ್ರಾಚ್ಯ ವಿದ್ಯಾ ಸಂಶೋಧನಾಲಯಗ ನಿರ್ದೇಶಕರಾಗಿದ್ದ ಡಾ। ಕೆ.ವಿ. ರಮೇಶ್ ಅವರಿಗೆ ನನ್ನ ಆದರದ ನಮನಗಳು.

ಹಸ್ತಪತ್ರಿಗಳನ್ನು ನೀಡಿ ಬೆನ್ನು ತಟ್ಟಿದ ಎಲ್ಲ ವಿದ್ವಾಂಸರಿಗೂ ನಾನು ಹೃತ್ಪೂರ್ವಕ ವಂದನೆಗಳನ್ನು ಅರ್ಪಿಸುತ್ತೇನೆ. ವಿ। ಹೆಚ್.ಪಿ. ನಾಗರಾಜಾಚಾರ್ಯರು, ವಿ।ಪ್ರದೀಪಸಿಂಹಾಚಾರ್ಯರು, ವಿ। ರಘೂತ್ತಮಾಚಾರ್ಯ ನಾಗಸಂಪಿಗೆ, ವಿ।ಶಂಕರನಾರಾಯಣ ಅಡಿಗ, ವಿ। ರಂಗನಾಥ ಕಟ್ಟಿ ಇವರೂ ಕೆಲವು ಭಾಗ ಕರಡುಪ್ರತಿ ತಿದ್ದುವಲ್ಲಿ ಉಪಕರಿಸಿದ್ದಾರೆ. ಇವರೆಲ್ಲರಿಗೂ ನಾನು ಋಣಿಯಾಗಿದ್ದೇನೆ.

ಇತಿ ಸುಜನವಿಧೇಯ

**ಡಾ। ಎ.ವಿ. ನಾಗಸಂಪಿಗೆ**

## II. महाभारततात्पर्यनिर्णये प्रथमोऽध्यायः

क्षितिपा मनुष्यगन्धर्वा दैवाश्च पितरश्चिराः ।
आजानजाः कर्मजाश्च देवा इन्द्रः पुरन्दरः ।।

रुद्रः सरस्वती वायुर्मुक्ताः शतगुणोत्तराः ।
एको ब्रह्मा च वायुश्च वीन्द्रो रुद्रसमस्तथा ।
एको रुद्रस्तथा शेषो न कश्चिद् वायुना समः ।।

मुक्तेषु श्रीस्तथा वायोः सहस्रगुणिता गुणैः ।
ततोऽनन्तगुणो विष्णुर्न कश्चित् तत्समः सदा ।।

**1.72-74**

* * * *

# III. बृहदारण्यकभाष्ये तृतीयोऽध्यायः

**अव्याकृतब्राह्मणे –**

मत्स्यकूर्मक्रोडसिंहबटुभार्गवराघवाः ।
कृष्णबुद्धौ कल्किदत्तहयशीर्षैतरेयकाः ।
पाराशर्यश्च कपिलो वैकुण्ठो वृषभस्तथा ।
यज्ञो धन्वन्तरिश्चैव स्त्रीरूपस्तापसो मनुः ।
नारायणो हरिः कृष्ण उपेन्द्राः सर्व एव च ।
एवमाद्या हरेः साक्षात्प्रादुर्भावाः प्रकीर्तिताः ।
श्रीर्भूर्दुर्गाऽम्भ्रिणी ह्रीश्च महालक्ष्मीश्च दक्षिणा ।
सीता जयन्ती सत्या च रुग्मिणीयादिभेदिता ।
प्रकृतिस्तेन चाऽविष्टा तद्वशा न हरिः स्वयम् ।
ततोऽनन्तांशहीना च बलज्ञप्तिसुखादिभिः ।
गुणैः सर्वैस्तथाऽप्यस्य प्रसादाद्दोषवर्जिता ।
सर्वदा सुखरूपा च सर्वदा ज्ञानरूपिणी ।
प्राणः सूत्रं महान् ब्रह्मा चित्रं वायुर्बलं धृतिः ।
स्थितिर्योगच वैराग्यं ज्ञानं प्रज्ञा स्मृतिः सुखम् ।
मेधा मुक्तिर्विष्णुभक्तिरादिगोपो महाप्रभुः ।
ऋजुः समानो विज्ञाता महाध्याता महागुरुः ।
हनूमान् भीम आनन्द इत्यादिबहुरूपिणः ।
हिरण्यगर्भा येऽतीता ये भाव्या यश्च वर्तते ।
सर्वे विष्णुवशा नित्यं विमुक्तेरप्यनन्तरम् ।
एभ्यः श्रीस्तु विमुक्तेभ्यो गुणैः कोटिगुणोत्तरा ।
ज्ञानानन्दबलादिभ्यः सर्वेभ्यः सर्वदैव हि ।

# तारतम्यप्रबन्धविषयानुक्रमणिका

भिन्नाभिन्नाश्च ते सर्वे ब्रह्मणस्तु परस्परम् ।
अभिमानः पृथक् तेषामानन्दः सह भुज्यते ।
ते तु भिन्ना हरेर्नित्यं श्रियोऽन्येभ्यस्तथैव च ।
आविष्टो विष्णुरेतेषु न विष्णुस्तत्स्वरूपकः ।
विष्णोरतिप्रियत्वात्ते ह्यध्यर्धा इति चोदिताः ।
विष्णोः केवलभेदेऽपि शेषादिभ्यः प्रिया यतः ।
विष्णोः प्रियत्वे तद्भक्तौ तज्ज्ञाने च श्रियस्तु ते ।
मुक्ता अप्यवरा नित्यं सर्वे कोटिगुणेन च ।
सरस्वती च गायत्री श्रद्धाया प्रीतिरेव च ।
सर्ववेदात्मिका बुद्धिरनुभूतिः सुखात्मिका ।
गुरुभक्तिर्हरौ प्रीतिः सर्वमन्त्रात्मिका भुजिः ।
शिवकन्येन्द्रसेना च द्रौपदी काशिजा तथा ।
चन्द्रेत्यादिस्वरूपायास्तेभ्यः शतगुणावराः ।
विष्णुभक्तौ च तत्प्रीतौ ज्ञानानन्दादिकेष्वपि ।
मुक्तेः पश्चादपि गुणैः सर्वैर्ब्रह्मभ्य ईरिताः ।
शेषः सदाशिवश्चोर्ध्वस्तपोऽहङ्कार एव च ।
नरोऽपटो लक्ष्मणश्च रौहिणेयः शुकस्तथा ।
सद्योजातो वामदेवश्चाघोरस्तत्पुमानपि ।
दुर्वासा द्रौणिरौर्वश्च जैगीषव्यादिरूपकाः ।
पूर्वोक्तैश्च गुणैः सर्वैस्ताभ्यः शतगुणावराः ।
मुक्तेः पश्चादपि सदा अतीतानागताश्च याः ।
अतीतानागता ये च सर्वशोऽप्यवराः सदा ।
एवं सुपर्णाः सर्वेऽपि समाः शेषैः सदैव तु ।
सर्वैर्गुणैस्तथा मुक्तौ तद्भार्यास्तच्छतावराः ।

ताभ्यः शतावरास्त्विन्द्राः पुरन्दर इतीरिताः ।
तेभ्यः शतावरास्त्वन्ये इन्द्राश्चान्याश्च देवताः ।
द्वित्रिपञ्चादिगुणतः परस्परविशेषिणः ।
सनत्कुमारास्तु सदा पुरन्दरसमा मताः ।
सनकाद्या नारदश्च दक्षभृग्वादयोऽपि च ।
देवावरा यथा तद्वन्मनवोऽपि प्रकीर्तिताः ।
त्रिचतुर्भागभेदेन तेऽप्यन्योऽन्यविशेषिणः ।
वाली गाधिर्विकुक्षिश्च पार्थ इन्द्रः पुरन्दरः ।
सुदर्शनश्च भरतः प्रद्युम्नः स्कन्द एव च ।
सनत्कुमारः कामश्चेत्येक एव व्यवस्थितः ।
स्वायम्भुवो मनुर्दक्षो वायुः स्पर्शाधिपस्तथा ।
बृहस्पतिश्चानिरुद्ध एते सूर्यादितोऽधिकाः ।
सूर्यश्च चन्द्रमाश्चैव यमश्चैते त्रयः सुराः ।
प्रोक्तेभ्यस्त्ववराश्चान्यदेवेभ्योऽपि सदाऽधिकाः ।
कार्तवीर्यः पृथुश्चैव दौष्यन्तिर्भरतस्तथा ।
शशबिन्दुश्च मान्धाता ककुत्स्थाद्यास्तथाऽपरे ।
सर्वे ते विष्णुनाऽऽविष्टा विष्णोर्भिन्नाः सदैव तु ।
शतावराश्च देवेभ्यः कर्मदेवा इति स्मृताः ।
तुम्बुरुप्रमुखा ये च तथोर्वश्यादिका अपि ।
विश्वामित्रब्रह्मपुत्रानृते चाप्यृषयोऽखिलाः ।
सूर्यादिभ्योऽधमाश्चैव मन्वादिभ्यस्तथैव च ।
वैवस्वतो मनुर्नित्यं विष्ण्वावेशी ततोऽधिकः ।
कार्तवीर्यादिराजभ्यो देवभृत्याः शतावराः ।
आजानदेवास्ते प्रोक्तास्तेभ्यश्च पितरश्चिराः ।

पितृणां सप्तकं यत्तत्कर्मदिवसमं मतम् ।
विश्वामित्रो ब्रह्मपुत्रैः समो मुनिरुदाहृतः ।
आचार्यः पितृणां चासौ पितृभिः सह पठ्यते ।
आजानेभ्यस्तु पितरो ह्यष्टभ्योऽन्ये शतावराः ।
कर्मदेवगणा अष्टगन्धर्वास्तत्परे शतम् ।
आजानदेवास्तेभ्योऽन्ये पितृभ्यश्च शतावराः ।
स्वमुखेनैव देवैर्ये आज्ञाप्याः सर्वदा गणाः ।
आख्याता देवगन्धर्वा ये त्वन्यमुखगोचराः ।
मानुषास्ते तु गन्धर्वास्तेभ्यस्ते च शतावराः ।
तेभ्यः शतावराश्चैव मनुष्येषूत्तमा गणाः ।
देवादिष्वेषु सर्वेषु प्रोक्ता अपि विशेषिणः ।
पञ्चांशतो दशांशाद्वा स्वस्वजात्यां परस्परम् ।
देवस्त्रियो दशांशोनाः स्वपतिभ्यस्तथाऽपराः ।
अष्टांशोनाः प्रविज्ञेया यासां मुक्तौ सह स्थितिः ।
अनादिश्च विशेषोऽयं सर्वेषां मानुषादिनाम् ।
इयं नीचोच्चता क्वापि न केनापि ह्यपोदितुम् ।
शक्यते योऽन्यथाकर्तुमिच्छेत्सोऽपि तमो व्रजेत् ।
योऽपि वेद समत्वेन सर्वान्नीचोच्चतः स्थितान् ।
सोऽपि याति तमो घोरं यश्च साम्यमुदीरयेत् ।
मानुषोत्तममारभ्य ब्रह्मान्तानां प्रयत्नतः ।
विष्णोर्भक्तिज्ञानपूर्वं भवेन्मुक्तिं प्रसादतः ।
भक्तिज्ञानादयः सर्वे सर्वेषामप्यनादयः ।
अनादिकालादारभ्य वृद्धानामुत्तरोत्तरम् ।
तत्तद्योग्यतया पूर्तौ विष्णोर्दृष्टिः प्रजायते ।

**यथोदञ्चनकुम्भादेः सरित्सागरयोरपि ।**
**अल्पेन महता वाऽपि पूर्तियोग्यतया भवेत् ।**
**एवं नरादिब्रह्मान्तजीवानां साधनैरपि ।**
**अनादिसिद्धैर्भक्त्याद्यैः पूर्तिर्योग्यतया भवेत् ।**
**अल्पैः पूर्तिस्तथाऽल्पानां महद्भिर्महतामपि ।**
**भक्त्याद्यैर्जायते तेषां साधनैर्नान्यथा क्वचित् ।**

* * * *

## IV. छान्दोग्यभाष्ये सप्तमोऽध्यायः

**"प्राण इत्युच्यते वायुः सर्वे त्वेते दशोत्तराः ।**
**पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च ।**
**द्विगुणा एवानिरुद्धोऽनिलात्पञ्चगुणाधिकः ।**
**पादोनो वरुणादग्निरध्यर्धोनः समो मतः ।**
**शिवादाशा तथैवास्या मुख्यवायुः शतोत्तरौ ।**
**सङ्ख्यान्यथात्वं यत्र स्यात् तत्राऽवेशविशेषतः ।**
**अवराणां गुणस्यापि परमीयत्वतस्तथा ।**
**प्राणात्तु भगवान् विष्णुरनन्तगुणतोऽधिकः ।**
**नित्यमुक्तो नित्यशक्तिर्नित्योद्रिक्तगुणः प्रभुः ।"**

इति तत्त्वविवेके ।

'सैषाऽऽनन्दस्य मीमांसा भवति' इत्यादेश्च ।

'अथातः सम्भूतिः परमाद् विद्या विद्यायाः प्राणः प्राणाच्छ्रद्धा श्रद्धायाः शिवः शिवाद् बुद्धिर्बुद्धेरिन्द्र इन्द्रात्तैजसः प्राणस्तैजसाद-निरुद्धोऽनिरुद्धात् स्पर्शवातः स्पर्शवातात्सोमस्सोमाद् वरुणो वरुणादग्निरग्नेर्मित्रो मित्रात्पर्जन्यः पर्जन्यात्स्वाहा स्वाहाया उषा जायते तेषां परः परोज्यायान् गुणैरुत्तर उत्तरः प्रत्यवरः परस्मात्परमादुत्तर उत्तरो मुच्यते स्वं स्वं भावमापद्यते । नैषां पारवर्यमुच्छिद्यते कदाचन नैषां पारावर्यमुच्छिद्यते कुतश्चन पारावर्येणैव ब्रह्मोपयन्ति पारावर्येण मुक्ताः सञ्चरन्ति' इत्यादि श्रुतेश्च ।

* * * *

## V. कठोपनिषद्भाष्यम्

ऋतं पिबन्तौ सुकृतस्य लोके - इति मन्त्रे अ.१. ब्रा.७. मं.१.

### देवतातारतम्यविचारः

देवेभ्य इन्द्रियात्मभ्यो जायांसोऽर्थाभिमानिनः ।
सोमवित्तपसूर्याऽप्या अश्व्यग्नीन्द्रेन्द्रसूनवः ।
यमो दक्षश्चेन्द्रियेशाः सुपर्णी वारुणी तथा ।
उमेति चार्थमानिन्यस्तिस्रो द्विद्व्येकदेवताः ।
मनोऽभिमानिनो रुद्रवीन्द्रशेषास्त्रयोऽपि तु ।
ते श्रेष्ठा अर्थमानिभ्यस्तेभ्यो बुद्धिः सरस्वती ।
तस्या ब्रह्मा महानात्मा ततोऽव्यक्ताभिधा रमा ।
तस्यास्तु पुरुषो विष्णुः पूर्णत्वान्नैव तत्समः ।
कश्चित् कुतश्चिच्छ्रेष्ठस्तु नास्तीति किमु सा कथा ।
तस्माद्वागात्मिका देवीरुमाद्यास्तु शिवादिषु ।
शिवादीन् ब्रह्मवाय्वोस्तु नियच्छेन्महदात्मनोः ।
तौ रमायां परानन्दे तां विष्णौ परमात्मनि ।
तद्वशत्वेन तद्ध्यानं नियमो नामः चापरः ।

* * * *

## 2. **न्यायसुधायाम्**
## **इयदामननाधिकरणे तारतम्यनिरूपणम्**

सु — ॐ इयदामननात् ॐ ।। **येषां ज्ञानयोग्यानामिदं मुक्तिसंसारयोस्तारतम्यं समर्थितम् । ते छन्दोगानामुपनिषदि नामवागादिक्रमेण प्राणान्ता उक्ताः । तत्र किं प्राण एवाधिकारि-तारतम्यस्यावधिः उताधिकोऽप्यस्तीति संशये सतीयदेव देवता तारतम्यमिति सिद्धान्तितम् । तत्र न ज्ञायते कास्ता नामाद्या देवता इति । कथं च पञ्चदशैव अधिकानामपि भावादित्याशङ्कानिरासार्थं वृहत्संहितावचनमेव पठति -** ***उषा इति* ।**

**अनु —** **ॐ इयदामननात् ॐ ।।**
उषास्स्वाहा च पर्जन्यो मित्रोऽग्निर्वरुणो विधुः ।।
प्रवहोऽनिरुद्ध इन्द्रोमे रुद्रो वाणी च मारुतः ।।
उत्तरोत्तरतस्त्वेते गुणैस्सर्वैश्च मुक्तिगाः ।।

**उषा अश्विनोर्भाया । स्वाहाऽग्नेर्भार्या । पर्जन्यो मित्रश्चाऽदित्यौ। प्रवहो मरुत् । अनिरुद्धः कामसुतः । एते मुक्तिगा संसारगाश्च सर्वैर्गुणैरुक्तक्रमेणोत्तरोत्तरत एव वर्तन्त इत्यर्थः ।**

**सु — अधिकसद्भावशङ्कानिरासायैतेषां समानन्तरावस्थितांश्चाऽह सूर्येत्यादिना ।**

**अनु —** सूर्यधर्मौ यथा सोमो मनुर्दक्षो वृहस्पतिः ।।
शची रतिश्चानिरुद्धसमास्तारा च मित्रवत् ।।
सोमवच्छतरूपा तु प्रसूतिर्वह्निवद्विराट् ।।
पर्जन्यवद्वारुणी च तथा सञ्ज्ञा च रोहिणी ।।
धार्मी च मित्रवत्त्वेव प्रावही परिकीर्तिता ।।

मित्रपर्जन्यमध्यस्थावश्विनौ विघ्नवित्तपौ ।।
भृगुरग्निसमो, मित्रतन्मध्ये ब्रह्मपुत्रकाः ।।
वरुणाग्न्यन्तरा तत्र नारदः प्राय इन्द्रवत् ।।
कामः सुपर्णी चोमावद्वीन्द्रो रुद्रवदीरितः ।।
निर्ऋतिर्मित्रसदृशो विश्वामित्रः कसूनुवत् ।।
वैवस्वतो मनुश्चाश्विपश्चादन्ये ततोऽवराः ।।
च्यवनोचथ्यवैन्याश्च शशबिन्दुश्च हैहयः ।।
तद्वच्च विप्रराजन्यविशेषोऽत्रापि कश्चन ।।
तद्वत्प्रियव्रतश्चापि तदन्याः शतदेवताः ।।
पर्जन्यमित्रान्तराले तदन्ये तु ततोऽवराः ।।

**तथेति शेषः । सूर्यधर्मौ सोमसमानौ । मन्वादयः पञ्चानिरुद्धसमानाः । मनुरत्र स्वायम्भुवो विवक्षितः । तारा बृहस्पतिभार्या । चस्त्वर्थः । मित्रेण तुल्यं वर्तत इति मित्रवत् । शतरूपा स्वायम्भुवस्य पत्नी सोमवत् । सूर्यधर्माविव्यत्रैवेयं वक्तव्या । सत्यम्। पतीनामुक्तौ इदानीमासां प्रस्तुतत्वात्पृथगुक्तिः । प्रसूतिर्दक्षपत्नी वह्निवत् । विराडनिरुद्धभार्या पर्जन्यवत् । वरुणस्येयं वारुणी । पुंयोगे तु वरुणानीति स्यात् । इन्द्रवरुणेति स्मरणात् । संज्ञा सूर्यभार्या । रोहिणी सोमभार्या । धर्मस्येयं धार्मी । वारुणी संज्ञा रोहिणी धार्मी च तथैव पर्जन्यवदेव । प्रवहस्येयं प्रावही तु मित्रवदेव प्रकीर्तिता । अश्विनौ विघ्नपवित्तपौ मित्रपर्जन्यमध्यस्थाविति प्रत्येकं सम्बन्धः । एते चत्वारः परस्परं समा मित्रादधमाः । पर्जन्यादुत्तमा इत्यर्थः । भृगुरग्निसम इति वक्ष्यमाणस्यापवादः । ब्रह्मपुत्रा मरीच्याद्या मित्रतन्मध्ये मित्राग्न्योर्मध्ये । परस्परं समा मित्रादुत्तमा अग्नेरधमा इत्यर्थः । तत्र तेषु ब्रह्मपुत्रेषु नारदो वरुणाग्न्यन्तरा वरुणादधमोऽग्नेरुत्तम इत्यर्थः । तथा च दक्षभृगुनारदानां पृथगुक्तत्वाद् ब्रह्मपुत्रका मरीच्याद्याः**

सप्तैव । प्रायग्रहणेनेषन्न्यूनः । सुपर्णी गरुडभार्या । विश्वामित्रः कसूनुवत् ब्रह्मपुत्रैर्मरीच्याद्यैः समानः । वैवस्वतो मनुश्च कसूनुवदिति सम्बन्धः । स्वायम्भुवाद्वैवस्वताद्भगवदवतारात् तापसाच्चान्ये मनवस्ततो वैवस्वतादवराः । तेऽश्विभ्यां पश्चात् पर्जन्यादुत्तमाः । च्यवनाद्याश्च तद्वत् । एकादशमनुसमानाः । अत्रैतेष्वपि विप्रराजन्यत्वनिमित्तः कश्चन विशेषोऽस्ति । मुक्तावपि विप्रत्वादेर्भावात् । अत्र च्यवनोचथ्यौ विप्रौ । अन्ये राजन्याः प्रियव्रतोऽपि तत् अवरमनुवदेव ।

तदन्या उक्तेभ्योऽन्याः शतदेवताः सोमार्हदेवताः शतान्तरगताः पर्जन्यमित्रान्तराले । पर्जन्यादुत्तमा मित्रादधमा अश्विनोः समाना इत्यर्थः ।

तदन्ये उक्तेभ्योऽन्ये तु देवास्ततः शतान्तर्गतदेवताभ्योऽवराः । अवरमनुसमाना इत्यर्थः ।

सु — ननु महालक्ष्मीः प्राणादप्युत्तमाऽस्ति । तत्कथं प्राणावसानत्वमधिकारिणामित्यत आह एतेभ्य इति ।

अनु — एतेभ्योऽभ्यधिका श्रीस्तु सदा मुक्ता विशेषतः ।।
तत्समो नास्ति परमो हरिरेव न चापरः ।
संहितायां बृहत्यां तु स्वयं भगवतोदितम् ।।
तदेतदखिलं

यद्यपि श्रीरेतेभ्यो विशेषतोऽभ्यधिका । तथाऽपि सदा मुक्ता बन्धरहितेति नाधिकारिवर्गे गृह्यते । तस्याः समो नास्तीति स्वरूपकथनम् ।

एतेन 'कामादितरत्र तत्र चायतनादिभ्यः' इत्यधिकरणस्य तात्पर्यमुक्तं भवति ।

'परमो हरिरेव न चापर' इत्यनेन 'व्यतिहारो विशिंषन्ति हीतरवत्' 'सैव हि सत्यादयः' इत्यधिकरणद्वयस्य तात्पर्यमुक्तं वेदितव्यम् ।

सु — ननूपनिषदि नामाद्याः प्राणान्ताः पञ्चदशोक्ताः । अत्र चोषाः स्वाहेत्यादिना चतुर्दशैव । तत्कथं न विसंवाद इत्यतो बृहत्संहितावचनेनानुक्तमेकं स्वयमाह प्राण इति ।

अनु — प्राण आहङ्कारिक एव च ।।
इन्द्रादनन्तरो ।। ३ - ३ - ३५ ।।

तैजसाहङ्कारादुत्पन्नः प्राणश्चापरोऽस्ति । स चेन्द्रादनन्तर एवानिरुद्धादुत्तमो ज्ञातव्यः । परप्राणव्यावृत्त्यर्थमाहङ्कारिक एवेत्युक्तम् ।

सु — अयमत्र सङ्ग्रहः । पुष्करो नाम सर्वावरो देवः । 'कलाभ्यश्चान्यदेवेभ्यः कर्म प्रत्यवरं यतः । कलाभ्यः पृथगुक्तं तत्पुष्करः कर्म चोच्यते' इत्यन्यत्रोक्तत्वात् । ततश्शनैश्चरोऽधिकः । 'पृथिव्यात्मा शनिश्च' इति वचनात् । ततः उषाः । ततो बुधः । 'उदकात्मको बुधश्च' इति वचनात् । ततः स्वाहा । ततः पर्जन्यो वारुणी संज्ञा रोहिणी धार्मी विराट् । तत एकादश मनवश्च्यवनोचथ्यवैन्यशशबिन्दुहैहयप्रियव्रतादयः अनुक्तदेवाश्च । 'प्रियव्रतो गयश्चैव कर्मदेवसमौ मतौ' इत्यन्यत्रोक्तत्वात् । ततोऽश्विनौ विघ्नेशवित्तपौ विष्वक्सेनश्च । 'विष्वक्सेनो वायुजः खेन तुल्यः' इति वचनात् । ततो मित्रो निर्ऋतिस्तारा प्रावहीति च । ततो मरीचिरत्र्यङ्गिराः पुलस्त्यः पुलहः क्रतुर्वसिष्ठो विश्वामित्रो वैवस्वतमनुश्च । ततोऽग्निर्भृगुः प्रसूतिश्च । ततो नारदः । ततो वरुणः । ततश्चन्द्रसूर्यधर्माः शतरूपा च । ततः प्रवहः । ततोऽनिरुद्धस्वायम्भुवबृहस्पतिदक्षाः

शची रतिश्च । तत आहङ्कारिकः प्राणः । तत इन्द्रकामौ । तत उमा सुपर्णी उमात्मकत्वाच्छेषभार्या च । ततो जाम्ववत्याद्या भगवन्महिष्यष्ट् । अन्यत्रोक्तत्वात् । ततो रुद्रात्मकत्वाच्छेषश्च । ततो भारती तदात्मकत्वात्सरस्वती च । ततो मुख्यवायुस्तदात्मकत्वाद् ब्रह्मा च । ततो महालक्ष्मीः । ततो भगवानिति ।। ३ - ३ - ३५ ।।

* * * *

## तारतम्यपञ्चश्लोक्युक्तदिशा कक्ष्याः निरूप्यन्ते

१. सर्वोत्तमः विष्णुः

२. लक्ष्मीः

३. ब्रह्मवायू

४. सरस्वतीभारत्यौ

५. गरुड-शेष-रुद्राः

६. कृष्णपत्न्यः षट्

७. सौपर्णी वारुणी पर्वतपतितनया

८. इन्द्रकामौ

९. आहङ्कारिकप्राणः

१०. अनिरुद्धः - रतिः - शची - स्वायम्भुवो मनुः - दक्षः - गुरुः

११. प्रवहः

१२. यमः - शतरूपा - सूर्यः - चन्द्रः

१३. वरुणः

१४. नारदः

१५. अग्निः - प्रसूतिः - भृगुः

१६. वैवस्वतमनुः - विश्वामित्रः - सप्तर्षयः

१७. मित्रः - तारा - निर्ऋतिः - प्रावही

१८. सोमपानार्हाः देवाः - विष्वक्सेनः- धनपः - गणेशः - वसवः

१९. इतरे देवाः - एकादशमनवः - च्यवनः - उचथ्यः
पृथुः - कार्तवीर्यः - शशबिन्दुः - प्रियव्रतः

२०. गङ्गा - पर्जन्यः - सञ्ज्ञा - रोहिणी - शामला - विराट्

२१. कूर्मादि अनाख्यातदेवाः

२२. स्वाहा

२३. बुधः

२४. उषा

२५. शनिः

२६. पुष्करः

## 3. तारतम्यपञ्चश्लोकी

* [1]विष्णुः सर्वोत्तमोऽथ [2]प्रकृतिरथ [3]विधिप्राणनाथावथोक्ते
[4]ब्रह्माणी भारती च [5]द्विजफणिपमृडाश्च [6]स्त्रियः षट् च विष्णोः ।
[7]सौपर्णी वारुणी पर्वतपतितनया, [8]चेन्द्रकामावथाऽस्मान्
[9]प्राणोऽथो [10]योऽनिरुद्धो रतिमनुगुरवो दक्षशच्यौ च पान्तु ।। 1 ।।

त्रायन्तां नः सदैते [11]प्रवह उत, [12]यमो मानवी चन्द्रसूर्यौ,
[13]चाप्पोऽथो [14]नारदोऽथो [15]भृगुरनलकुलेन्द्रः प्रसूतिश्च नित्यम् ।
[16]विश्वामित्रो मरीचिप्रमुखविधिसुताः सप्त वैवस्वताख्यः
चैवं वै, [17]मित्रतारे वरनिर्ऋतिनामा प्रावही च प्रसन्नाः ।। 2 ।।

[18]विष्वक्सेनोऽश्विनौ तौ गणपतिधनपावुक्तशेषाः शतस्था,
[19]देवाश्चोक्तेतरे ये तदवरमनवश्च्यावनोचथ्यसंज्ञौ ।
वैन्यो यः कार्तवीर्यः क्षितिपतिशशबिन्दुः प्रियादिव्रतोऽथो,
[20]गङ्गा पर्जन्यसंज्ञे शशियमदयिते मा विराट् चाऽशु पान्तु ।। 3 ।।

[21]एभ्योऽन्ये [22]चाग्निजाया च [23]जलमयबुधश्चापि [24]नामात्मिकोषा
चैवं भूमौ ततात्मा [25]शनिरपि कथितः [26]पुष्करः कर्मपोऽपि ।
येऽथाथो चाप्युतानामिह कथितसुरा मध्यभागे समास्ते
विष्वाद्या नः पुनन्तु क्रमगदितमहातारतम्येन युक्ताः ।। 4 ।।

वन्दे विष्णुं नमामि श्रियमथ च भुवं ब्रह्मवायू च वन्दे
गायत्रीं भारतीं तामपि गरुडमनन्तं भजे रुद्रदेवम् ।
देवीं वन्दे सुपर्णीमहिपतिदयितां वारुणीमप्युमां तानिन्द्रादीन्
काममुख्यान् अपि सकलसुरान् तद्गुरून् मद्गुरूंश्च ।। 5 ।।

---

* उपरि निर्दिष्टसङ्ख्या कक्ष्याविशेषद्योतिका । पञ्चश्लोकीयं कल्याणीदेवीकृता इति ऐतिह्यमस्ति । अत्र महान्तः प्रमाणम् ।

# 4. श्रीरघूत्तमतीर्थकृतं सङ्ग्रहतारतम्यस्तोत्रम्

* [1]सर्वोत्तमो विष्णुरथो [2]श्रीस्ततो [3]ब्रह्ममारुतौ ।
[4]अथ वाणी भारती च ततः [5]शेषविपेश्वराः ।। १ ।।
अनन्तरं [6]जाम्बवती कालिन्दी लक्षणा तथा ।
नीला भद्रा मित्रविन्दा षट् स्त्रियः शार्ङ्गधन्वनः ।। २ ।।
[7]अथोमा[१] वारुणी वीशपत्न्यथेन्द्रमनोभवौ[8] ।
[9]अथाहङ्कारिकप्राणोऽ[10]थानिरुद्धो बृहस्पतिः ।। ३ ।।
स्वायंभुवो रतिर्दक्षः शच्युत [11]प्रवहस्ततः ।
[12]शतरूपा चन्द्रसूर्यौ यमोऽथ [13]वरुणस्ततः ।। ४ ।।
[14]नारदोऽथ[२] [15]भृगुर्वह्निः प्रसूतिस्तदनन्तरम् ।
[16]विश्वामित्रो वसिष्ठोऽत्रिः मरीचिः पुलहः क्रतुः ।। ५ ।।
पुलस्त्याङ्गिरसौ सूर्यसूनुर्मनुरतः परम् ।
[17]प्रावही निर्ऋतिर्मित्र[३]स्तारातारा[18]थाऽश्विगणेश्वराः ।।६।।
वसवः[४] पावकादन्ये विष्वक्सेनधनाधिपौ ।
चत्वारिंशत्तथा सप्त मरुतः पितरस्त्रयः ।। ७ ।।
ऋभवश्च त्रयो विश्वेदेवा रुद्रास्तथा दश ।
द्यावापृथिव्यावुक्तान्ये षडादित्याः प्रकीर्तिताः ।। ८ ।।
[19]एकादशान्ये मनव उक्तेभ्यः पितृसप्तकम् ।
च्यवनश्च पृथूचथ्यौ प्रियव्रतमुखाश्च ये ।। ९ ।।

---

* उपरि निर्दिष्टा सङ्ख्या कक्ष्या द्योतिका ।

1. उतोमा - क.
2. अथ इति नास्ति - क.
3. राथ - क.
4. अयं श्लोकः नास्ति - क.

उक्तान्यादिन्द्रषट्कं च गन्धर्वाष्टकमुत्तमम् ।
शशबिन्दुः कार्तवीर्यबल्याद्याः कर्मदेवताः ।। १० ।।
प्रह्लादोऽथ [20]विराड् गङ्गे सञ्ज्ञापर्जन्यश्यामलाः ।
रोहिण्यनन्तरं * [21]स्वाहा ततो [22]जलपतिर्बुधः ।। ११ ।।
[23]अथोषा अश्विभार्याऽतः [24]पृथिव्यात्मा शनैश्चरः ।
[25]अथ कर्माधिपः प्रोक्तः पुष्करस्तदनन्तरम् ।। १२ ।।
[26]गन्धर्वास्तुम्बुरुमुखाश्शतमप्सरसश्शतम् ।
ऊर्वशीप्रमुखा वह्निपुत्राश्चाजानदेवताः ।। १३ ।।
[27]ऋषीणां नवतिश्चातः शतोनशतकोटयः ।
ऋषयो देवगन्धर्वाः शतोनाप्सरसस्तथा ।। १४ ।।
[28]ततो मनुष्यगन्धर्वास्ततोऽन्ये [29]चक्रवर्तिनः ।
पुण्यश्लोकाश्च राजानस्तत [30]उत्तममानुषाः ।। १५ ।।
इत्येतत्तारतम्यं यो जानीयादथवा पठेत् ।
तस्मिन् श्रद्दधते विष्णुः प्रीयते भगवान् परः ।। १६ ।।

।। इति श्रीरघुवर्यतीर्थपूज्यपादशिष्येण रघूत्तममुनिना
कृतं सङ्ग्रहतारतम्यस्तोत्रं सम्पूर्णम् ।।

---

* कूर्माद्यनाख्यातदेवाः एकविंशति कक्ष्यायां क्वचिदाम्नाताः ।

### श्रीव्यासराजप्रशिष्यविट्ठलाचार्यप्रणीता

## तारतम्यसद्रत्नमालायाः विषयसूची

# 5. तारतम्यसद्रत्नमाला

## श्रीव्यासराजप्रशिष्यविट्ठलाचार्यप्रणीता

(मङ्गलाशंसनम्)

नत्वा नारायणं विष्णोरावेशं च दिवौकसाम् ।
अवतारं तारतम्यं दर्शयिष्येऽन्यतः स्थितम् ।। १ ।।

### अथ प्रथमकक्ष्या

(अनन्तगुणोऽनन्तरूपश्च विष्णुः सर्वोत्तमः)

मत्स्यः कूर्मः क्रोडसिंहौ वटुरामौ च भार्गवः ।
कृष्णबुद्धौ दत्तकल्की हयग्रीवैतरेयकौ ।। २ ।।
वेदव्यासश्च वैकुण्ठः कपिलो ऋषभस्तथा ।
नारायणी तापसश्च यज्ञो धन्वन्तरिस्तथा ।। ३ ।।
नारायणः कृष्णहरी उपेन्द्रः सर्व एव च ।
एवमाद्या हरिः साक्षादनन्तगुण उच्यते ।। ४ ।।

### अथ द्वितीयकक्ष्या

(विष्णोरनन्तांशहीना रमा, विष्णोरावेशयुता, सर्वज्ञाऽनन्तरूपा च)

श्रीभूदुर्गाऽम्भ्रिणी ह्रीश्च महालक्ष्मीश्च दक्षिणा ।
जयन्ती जानकी सत्या रुक्मिणीत्यादिका रमा ।। ५ ।।
विष्ण्वावेशयुताऽनन्तगुणैर्हीना हरेः स्मृता ।
सर्वदा सुखरूपा च सर्वदा ज्ञानरूपिणी ।। ६ ।।

### अथ तृतीयाकक्ष्या

(विष्ण्वाविष्टौ ब्रह्मवायू बहुरूपिणौ । योग्यतासाम्येऽपि पदकृतन्यूनताविशिष्टो वायुरेष्यत्कल्पे ब्रह्मत्वमाप्य मुक्तो भवति । उभौ श्रियः कोटिगुणाधमौ)

विरिञ्चश्च महान् ब्रह्मा प्राणः सूत्रं धृतिः स्मृतिः ।
मेधा मुक्तिः विष्णुभक्तिः चित्तं वायुर्महाप्रभुः ।। ७ ।।
बलं स्थितिः ऋजुर्योगः प्रज्ञा ज्ञानं महागुरुः ।
महाज्ञाता च विज्ञाता वैराग्यं रोचनः सुखम् ।। ८ ।।
हनूमान् भीम आनन्द इत्यादिबहुरूपिणौ ।
विष्ण्वाविष्टौ ब्रह्मवायू श्रियः कोटिगुणाधमौ ।
तत्रेदानीं किञ्चिदूनो वायुर्ब्रह्मत्वमेष्यति ।। ९ ।।

### अथ चतुर्थकक्ष्या

(ब्रह्मवाय्वोः शताधमे सरस्वती भारती च)

सरस्वती हरिप्रीतिः सर्ववेदात्मिका भुजिः ।
गायत्री गुरुभक्तिश्च श्रद्धा प्रीतिः सुखात्मिका।। १० ।।
शिवकन्येन्द्रसेना च द्रौपदी काशिजा तथा ।
चन्द्रेति ब्रह्मवाय्वोस्तु भार्ये भर्तुः शताधमे ।। ११ ।।

### अथ पञ्चमकक्ष्या

(भारत्याः शतावराः गरुड-शेष-रुद्रदेवाः)

हरीरयुङ् नरः शुक्लकेशयुक्तो बलस्तथा ।
सङ्कर्षणावेशयुतो लक्ष्मणः परिकीर्तितः ।। १२ ।।

सदाशिवस्तपोऽहङ्कृद् वाय्वाविष्टः शुकस्तथा ।
[1]ऊर्ध्वोऽर्पटो वामदेवः सद्योजातो ह्यघोरकः ।। १३ ।।

तत्पुमान् द्रौणिरौर्वश्च दूर्वासमुनिरेव च ।
जैगीषव्यादिरूपेण शेषरुद्रौ प्रकीर्तितौ ।
गरुडश्च त्रयश्चैते सरस्वत्याः शतावराः ।। १४ ।।

## अथ षष्ठकक्ष्या

(कृष्णस्य षण्महिष्यः लक्ष्म्यावेशयुताः । जाम्ववत्यां लक्ष्म्यावेशाधिक्ये तस्याः शेपसमता भवति । लक्ष्म्यावेशह्लासकाले प्रद्युम्नतो विंशगुणाधिका । षण्महिष्यः। जाम्ववत्याः किञ्चिदूनाः)

जाम्ववत्यधिकावेशे लक्ष्म्याः शेषसमानता ।
नीला भद्रा मित्रविन्दा कालिन्दी लक्षणा तथा ।। १५ ।।

जाम्ववत्याः किञ्चिदूना देव्यावेशयुता अपि ।
देव्यावेशह्लासकाले प्रद्युम्नाद् द्विदशाधिकाः ।। १६ ।।

## अथ सप्तमकक्ष्या

(सौपर्णी - वारुणी - उमा च स्वपतिभ्यः शतावराः)

रेवती श्रीयुता श्रीश्च पेयरूपा च वारुणी ।
सौपर्णी पार्वती चैव तिस्रः शेपाच्छतावराः ।। १७ ।।

---

1. ऊर्ध्वजटो

## अथ अष्टमकक्ष्या

(हरीरनरयुगिन्द्रः सौपर्ण्यादिभ्यः शतावरः । प्रद्युम्नावेशयुक्तः कामः इन्द्रात् अधमोऽल्पतः)

पुरन्दरो मन्द्रद्युम्नोऽर्जुनो नरहरीरयुक् ।
वाली गाधिर्विकुक्षिश्च कुशाद्या इन्द्र उच्यते ।। १८ ।।
प्रद्युम्नयुक्तः प्रद्युम्नभरतौ च सुदर्शनः ।
ब्रह्मयुक् साम्बस्कन्दश्च कुमारः काम उच्यते ।
शतावरा उमायाश्च काम इन्द्राधमोऽल्पतः ।। १९ ।।

## अथ नवमकक्ष्या

(आहङ्कारिकप्राणः शर्वोत्तुङ्गगजाख्यावतारद्वययुतः)

अहङ्कार[1]भवप्राणवायुर्गुर्विन्द्रमध्यगः ।
[2]शर्वोत्तुङ्गगजौ चास्य (रूपभेदौ प्रकीर्तितौ) ।।२०।।

## ।। अथ दशमकक्ष्या ।।

(अनिरुद्धः - रतिः - मनुः गुरुः - दक्षः शची चेति षट् प्रवहात् पञ्चगुणाधिकाः इन्द्रात्तु शतावराः)

तारो ब्रह्मांशयुग् द्रोणो वायुयुक्तोद्धवो गुरुः ।। २१ ।।
अनिरुद्धयुक् शत्रुघ्नोऽनिरुद्धो कामनन्दनः ।
कामभार्या रुग्मवती लक्षणेत्यादिरूपिणी ।। २२ ।।

---

1. प्राणः शक्रादेर्यो दशावरः - क. अयमपि पाठः युक्त एव ।
2. इमौ द्वौ पादौ क. ख. कोशयोर्न विद्येते ।

तारा चित्राङ्गदेत्यादिरूपा शच्यपि हि स्मृता ।
स्वायम्भुवमनुर्दक्षः षडन्योन्यं समा मताः ।
प्रवहात् पञ्चगुणतोऽधिका इन्द्राच्छतावराः ।। २३ ।।

अथ एकादशकक्ष्या

(पूर्वोक्तेभ्यः पञ्चगुणावमो प्रवहः भूताभिमानी वक्ष्यमाणसूर्यादिभ्यो द्विगुणाधिकः)

भूताभिमानी प्रवहः सूर्यात्तु द्विगुणाधिकः ।

अथ द्वादशकक्ष्या

(यमः - सूर्यः - चन्द्रः - शतरूपा चेति चत्वारः प्रवहाद् द्विगुणाधमाः)

जाम्ववान् वायुयुग् धर्मो विदुरः सत्यजिद् यमः ।
व्रह्माविष्टश्च सुग्रीवो हरियुक् कर्ण एव च ।। २४ ।।
एवं द्विरूपः सूर्यः स्याद् इन्द्राविष्टोऽङ्गदः शशी ।
शतरूपा च चत्वारः प्रवहाद् द्विगुणाधमाः ।। २५ ।।

अथ त्रयोदशकक्ष्या

(महाभिषक् - सुषेण - मण्डूकादिरूपी वरुणः चन्द्रात् पादपादार्धतोऽधमः)

महाभिषक् सुषेणश्च मण्डूकः शन्तनुस्तथा ।
एते प्राग् वरुणश्चन्द्रात् पादपादार्धतोऽधमाः ।। २६ ।।

।। अथ चतुर्दशकक्ष्या ।।

(वरुणात् नारदो न्यूनः । अनलादभ्यधिकः)

वरुणान्नारदो न्यूनो वन्हेरभ्यधिको मतः ।

## ।। अथ पञ्चदशकक्ष्या ।।

( भृगुः - अग्निः - प्रसूतिश्च दक्षाच्छतावराः )

धृष्टद्युम्नो लवो नील इत्याद्यग्नेः प्रसूतिकाः ।। २७ ।।
जराव्याधो भृगुः प्राक् च [1]त्रयो दक्षाच्छतावराः ।
वरुणात् पादतो न्यूना मित्रात्तु द्विगुणाधिकाः ।। २८ ।।
[2]वायुयुक् बाल्हिकः पूर्वं प्रह्लादो नारदाधमः ।
कर्मजेभ्यः स देवेभ्यो गुणाधिक इतीरितः ।। २९ ।।

## अथ षोडशकक्ष्या

(सप्तर्षयः विश्वामित्रः वैवस्वतो मनुश्च वन्हेर्द्विगुणाधमाः)

मरीचिरत्र्यङ्गिरसः पुलस्त्यः पुलहः क्रतुः ।
विश्वामित्रो वसिष्ठश्च वैवस्वतमनुस्तथा ।
नव वन्ह्यवरा नित्यं मित्राद् किञ्चिद् गुणाधिकाः
।। ३० ।।

## अथ सप्तदशकक्ष्या

(मित्रः - निर्ऋतिः - तारा - प्रावही च पूर्वोक्तेभ्यः किञ्चिदवराः)

मित्रतारे निर्ऋतिप्रावह्यौ पूर्वोक्तेभ्यः किञ्चिदवराः ।
राहुयुक् भीष्मको मित्रः कृपी तारा प्रकीर्तिता ।
महावली दुर्मुखश्च रुद्रयुक्तो घटोत्कचः ।। ३१ ।।
द्वावेतौ निर्ऋतिः पूर्वं प्रावही च तथा मता ।
चत्वार एते पर्जन्याद् द्विगुणेनाधिकाः स्मृताः ।। ३२ ।।

---

1. त्रय एते सदैव हि - ग.
2. अयं श्लोकः क. कोशे अधिकं दृश्यते ।

## अथ अष्टादशकक्ष्या

(विष्वक्सेनः गणपतिः धनपतिः । अश्विनौ शतस्थान्तर्गताः षडशीतिसङ्ख्याका शतस्थाः देवाः मित्रापेक्षया किञ्चिदवराः)

[1]नवकोट्यस्तु देवानां तासां मध्ये शतस्य तु ।
सोमाधिकारो वेदोक्तो ब्रह्मणी द्वे शताधिके ।। ३३ ।।
आदित्यरुद्रावसुरश्विनौ च विश्वेदेवा मरुतो बृहस्पतिः ।
प्रधानवायुः पितृत्रयं च द्यावापृथिव्यौ ऋभवः शतोऽथ ।। ३४ ।।
चारुदेष्णो विघ्नपः प्राक् विष्वक्सेनस्तथैव च ।
रुद्रयुक् भगदत्तश्च कत्थनौ द्वौ धनेश्वरः ।। ३५ ।।

।। अष्टौ वसवः ।।

द्रोणः प्राणो ध्रुवोऽर्कोऽग्निः दोषावस्तुर्विभावसुः ।
वसुष्वेतेषु भीष्मः प्राक् ब्रह्मयुक्तो द्युनामकः ।। ३६ ।।
शतवलिश्च पनसौ वानरौ वसुरूपिणौ ।
नन्दगोपः पुरा द्रोणो वन्ह्यन्ये सप्त कीर्तिताः ।। ३७ ।।

।। एकादशरुद्राः ।।

रैवतोऽजो भवो भीमो वाम उग्रो वृषाकपिः ।
अजैकपात् अहिर्बुध्निर्विरूपाक्षो महानिति ।। ३८ ।।
रुद्रा एकादशैतेषु भूरिः पूर्वमजैकपात् ।
भूरिश्रवाः सर्वरुद्रयुक्तोऽहिर्बुध्निरुच्यते ।। ३९ ।।

---

1. अयं श्लोकः क. कोशे अधिकं पठ्यते ।

मूलरुद्रं भवमृते दशरुद्राः प्रकीर्तिताः ।
शालः पूर्वं विरूपाक्षः कृपो विष्कम्भ उच्यते ।।४०।।
सहदेवः सोमदत्तः एतौ प्राक् पत्रतापकौ ।
विरूपाक्षादयो नामभेदा रुद्रस्य कीर्तिताः ।। ४१ ।।

।। द्वादशादित्याः ।।

विवस्वान् अर्यमा पूषा त्वष्टाऽथ सविता भगः ।
धाता पर्जन्यवरुणौ मित्रश्शक्र उरुक्रमः ।। ४२ ।।
एतेषु कृष्णजो भानुः सवित्रंश उदाहृतः ।
वीरसेनोऽर्यमाविष्टस्त्वष्टा वै परिकीर्तितः ।। ४३ ।।
एते हि द्वादशादित्याः मित्रं शक्रमुरुक्रमम् ।
विवस्वन्तं च वरुणं पर्जन्यं च विना षट् *।। ४४ ।।

(मरुताम् अवतारनिरूपणम्)

वायुयुक्तः पाण्डुराजः परावह उदीरितः ।
सम्पाती केसरी श्वेतस्त्रयो मरुत एव हि ।। ४५ ।।
चेकितानः प्राक् प्रतिभो विपृथुः सौम्य उच्यते ।
[1]शर्वोत्तुङ्गराजश्चापि प्राणवायुरुदाहृतः ।
गवाक्षस्तु प्रागपानः मरुच्छ्रेष्ठः प्रकीर्तितः ।। ४६ ।।
गवयः प्राग् व्याननामा वृषः पूर्वमुदानकः ।
शर्वत्रातो गन्धमादो द्वौ समानावुदाहृतौ ।। ४७ ।।
नागः कूर्मश्च कृकलो देवदत्तो धनञ्जयः ।
कुन्तिभोजो पुरा कूर्म उद्वहश्च परावहः ।। ४८ ।।

---

* षट्सङ्ख्याकाः मित्राधमा इत्यर्थः ।
1. श्लोकार्धोऽयं ग. कोशे दृश्यते ।

आवहो विवहश्चैव संवहश्च तथाऽपरे ।
विना प्राणं च प्रवहं मरुतोऽन्ये प्रकीर्तिताः ।। ४९ ।।
मरुतां पञ्चकं चेति मित्रात् किञ्चिद्गुणाधमाः * ।

(विश्वेदेवानामवतारनिरूपणम्)

प्रतिविन्ध्यः श्रुतसोमः श्रुतकीर्तिस्तथैव च ।। ५० ।।
शतानीकः श्रुतकर्मा पञ्चैते द्रौपदीसुताः ।
समाविष्टाश्चित्ररथाऽभिताम्राभ्यां तथैव च ।। ५१ ।।
किशोरगोपालवलैर्धर्मभीमार्जुनादिजाः ।
द्रौपदेयाः कैकयाः प्राक् विश्वेदेवा दश स्मृताः ।। ५२ ।।
सत्यो वसुः क्रतुर्दक्षः कामः कालो धनुर्धरः ।
पुरूरवा आर्द्रवश्च विश्वेदेवा दश स्मृताः ।। ५३ ।।
इन्द्रयुग् विविदो मैन्दो नकुलः सहदेवकः ।
त्रिशिखो विभुरित्येते ह्यश्विनौ परिकीर्तितौ ।। ५४ ।।
द्यावापृथिव्यामृभवः पितॄणां पतयस्तथा ।
विघ्नेशप्रमुखाः सर्वा मित्राद् किञ्चिद् गुणाधमाः ।। ५५।।

## अथ एकोनविंशकक्ष्या

(अग्निपुत्रः पावकः इन्द्रजो जयन्तः उचथ्यच्यवनादयः प्राक्तनेभ्यः किञ्चिदवराः)

पावकोऽग्नेः प्रथमजः उचथ्यः च्यवनस्तथा ।
रैवतश्चाक्षुपश्चैव स्वारोचिप उतोत्तमः ।। ५६ ।।

---

* मरुतां पञ्चकाच्चान्ये मरुतोऽल्पगुणाधमाः इति ख.

सावर्णिर्ब्रह्मसावर्णिः रुद्रसावर्णिरेव च ।
देवेन्द्रदक्षधर्माश्च सार्वर्ण्यन्ताः पितृसप्तकम् ।। ५७ ।।
कार्तवीर्यः पृथुश्चैव शशबिन्दुः प्रियव्रतः ।
दौष्यन्तिर्भरतश्चैव ककुस्थो गय एव च ।। ५८ ।।
ऋषभाद्धरिणाद् विप्राद् त्रिजन्मा भरतस्तथा ।
मान्धातेत्यादिराजानो विष्ण्वावेशयुता सदा ।। ५९ ।।
बलिरद्भुतशम्भू च विधृतस्त्वृतधामकः ।
दिवस्पतिः शुचिश्चैव गन्धर्वेष्वष्टकं तथा ।। ६० ।।
वल्याद्याः कार्तवीर्याद्याः कर्मदेवाः प्रकीर्तिताः ।
पावकाद्याः कर्मजाश्च वन्हेः शतगुणाधमाः ।
विघ्नेशादवमाः प्रोक्ताः पर्जन्यादुत्तमा मताः ।। ६१ ।।

## अथ विंशकक्ष्या

(गङ्गा - पर्जन्यः - संज्ञा - रोहिणी - शामला - उषा चेति
षट्सङ्ख्याकाः प्राक्तनेभ्यः किञ्चिदवमाः)

शरभः प्राक् च पर्जन्यो देवकी शामला पुरा ।
चन्द्रस्त्री रोहिणी चैव सूर्यभार्या च सञ्ज्ञिका ।। ६२ ।।
अनिरुद्धस्य भार्योषा गङ्गा वरुणभार्यका ।
पावकादधमाः षट् स्युः स्वाहाया द्विगुणाधिकाः ।। ६३ ।।

## अथ एकविंशकक्ष्या

(अप्रसिद्धाधिकारिका देवाः कूर्मादयश्च प्राक्तनेभ्योऽवराः)

पर्जन्यादधमाः केचित् ।

अथ द्वाविंशकक्ष्या

(स्वाहा कूर्माद्यपेक्षया किञ्चिदधमा)

तेभ्यः स्वाहाऽधमा मता ।
स्वाहोषसा दशगुणा पर्जन्याद् द्विगुणाधमा ।। ६४ ।।

अथ त्रयोविंशकक्ष्या

( स्वाहापेक्षया वुधः किञ्चिदवमः )

अभिमन्युः कृष्णचन्द्रधर्मेन्द्राश्वियुग् बुधः ।
उषसश्चाधिकः प्रोक्तः स्वाहाया अधमो मतः ।। ६५ ।।

अथ चतुर्विंशकक्ष्या

(अश्विभार्योषा वुधादवमा)

जरासन्धस्य पुत्री च शल्यस्य च तथाऽत्मजा ।
उभे अश्विभार्योषा

अथ पञ्चविंशकक्ष्या

(भूम्यभिमानी शनैश्चरः उषायाः किञ्चिदवमः)

तस्या अप्यवरः शनिः ।। ६६ ।।

अथ षड्विंशकक्ष्या

(शनैश्चरादधमः पुष्करः)

शनेश्च पुष्करो न्यूनः उषसस्तु दशाधमः ।

## अथ सप्तविंशकक्ष्या

(गन्धर्वाः - अप्सरस्त्रियः प्रतीकालम्बला ऋषयः प्राक्तनेभ्योवराः)

विराधश्चोद्वाहाविष्टः सञ्जयो द्वौ च तुम्बुरुः ।। ६७ ।।
जनमेजय आविष्टस्त्वष्टा चित्ररथः पुरा ।
दमघोषकबन्धौ द्वौ दनुर्गन्धर्व उच्यते ।। ६८ ।।
ब्रह्मस्वायम्भुवाविष्टो ह्यक्रूरः प्राक् किशोरकः ।
वायुयुक् धार्तराष्ट्रस्तु धृतराष्ट्राभिधः पुरा ।। ६९ ।।
नक्रस्तथावहाविष्टो द्रुपदो द्वौ हुहूः पुरा ।
विराटः प्राग्विवहयुक् हाहा देवस्य गायकः ।। ७० ।।
नन्ददंशी ह्यजगरो विद्याधर उदाहृतः ।
उग्रसेनस्तूग्रसेनगन्धर्वः समुदाहृतः ।। ७१ ।।
युधामन्युर्धातृयुक्तो विश्वावस्वभिधः पुरा ।
उत्तमौजास्त्वर्यमांशयुक्तश्चैव परावसुः ।। ७२ ।।
सत्यजित् प्राङ्मित्रयुक् चित्रसेनो महावलः ।
अथापरे च गन्धर्वाः गोपालबलपूर्वकाः ।। ७३ ।।
तथोर्वश्याद्यप्सरसः सैरन्ध्री पिङ्गला पुरा ।
नकुलस्त्री पार्वती या सा पूर्वं तु तिलोत्तमा ।। ७४ ।।
कृष्णाङ्गसङ्गा गोप्यः प्राक् शबरी चाप्सरस्त्रियः ।
विश्वामित्रवसिष्ठादिवर्जिता ऋषयोऽखिलाः ।। ७५ ।।
श्रीयुक्षोडशसाहस्रस्त्रियः प्राक् वह्निपुत्रकाः ।
कशेरुस्त्वष्ट्रपुत्री या तासां मध्ये गुणाधिका ।। ७६ ।।
पवमानक्रथौ द्वौ प्राक् पवमानोऽग्निजः स्मृतः ।
कौशिकोऽप्यग्निजः भुन्ध्युः शुचिः प्राक् शुचिरग्निजः
।। ७७ ।।

तुम्बुर्वादिशतं चैवोर्वश्याद्यप्सरसस्तथा ।
ऋषयश्च वसिष्ठादीन् ऋते आजानजाः स्मृताः
।। ७८ ।।
कार्तवीर्यादिराजभ्यो आजानेयाः शतावराः ।
आजानेया अनाख्याता देवा देवकुलोद्भवाः ।। ७९ ।।

## अथ अष्टाविंशकक्ष्या

(पितरः प्राक्तनकक्ष्यास्थेभ्यः शतावराः)

आजानेभ्यस्तु पितरः सप्तभ्योऽन्ये शतावराः ।

## अथ एकोनत्रिंशकक्ष्या

(प्राक्तनेभ्यो देवगन्धर्वाः शतावराः)

पितृभ्यो देवगन्धर्वा अष्टोत्तरशतं विना ।। ८० ।।

## अथ त्रिंशकक्ष्या

(देवगन्धर्वेभ्यो मनुष्यगन्धर्वाः शतावराः)

तेभ्यो मानुषगन्धर्वा

## अथ एकत्रिंशकक्ष्या

(मनुष्यगन्धर्वेभ्यः राजानः शतावराः)

तेभ्यः स्युश्चक्रवर्तिनः ।

## अथ द्वात्रिंशकक्ष्या

(राजभ्यो मनुष्योत्तमाः शतावराः)

तेभ्यस्तु मानुषाः श्रेष्ठाः क्रमात् शतगुणाधमाः ।। ८१ ।।
[1]श्रीविष्णुब्रह्मवाणीशा नीलो मेन्द्रा असुर्गुरुः ।
प्रवहस्सूर्यवरुणा नारदाग्निवसिष्ठकाः ।। ८२ ।।
मित्रविघ्नेश्वरौ चैव पृथुर्गङ्गा च केवराः? ।
[2]स्वाहा वुधोषाश्शनयः पुष्कराजानदेवताः ।। ८३ ।।
पितरो देवमनुजगन्धर्वाश्चक्रवर्तिनः ।
[3]मनुष्योत्तमपर्यन्ताः प्रीयन्तां गुरवो मम ।। ८४ ।।
सर्वोत्तमो विष्णुरथो रमा च
व्रह्मा च वायुश्च तदीयपत्न्यौ ।
अन्ये च देवाः सततं प्रसन्नाः
हरौ सुभक्तिं मयि सन्दिशन्तु ।। ८५ ।।
दशप्रमतिशास्त्रसज्जलधितोऽमराणां हरेः
प्रवेशनसुतारतम्यजनिजातिरत्नानि च ।
विमृग्य विनिमृश्य सज्जनपरीक्षया व्यासराट्
प्रशिष्य इति विठ्ठलोऽनुपमकण्ठमालां व्यधात् ।। ८६ ।।
[4]श्रीतारतम्यसद्रत्नमाला मुक्तिसुखप्रदा ।
पायते तैश्च विद्वद्भिः धार्येयं हृदि सर्वदा ।। ८७ ।।

।। इति श्रीव्यासराजप्रशिष्यविठ्ठलाचार्यप्रणीता
श्रीतारतम्यसद्रत्नमाला सम्पूर्णा ।।

---

1. ख कोशे न दृश्यते । 2. ख कोशे न दृश्यते ।
3. ख कोशे न दृश्यते । 4. ख कोशे न दृश्यते ।

* x x x

श्रीव्यासराजप्रशिष्यविट्ठलाचार्यप्रणीता

(स्वकृततारतम्यसद्रत्नमालाव्याख्या)

# तारतम्यसद्रत्नमालादीपिकाविषयसूची

श्रीव्यासराजप्रशिष्यविठ्ठलाचार्यप्रणीता

(स्वकृततारतम्यसद्रत्नमालाव्याख्या)

# तारतम्यसद्रत्नमालादीपिकाविषयसूची

# 6. तारतम्यसद्रत्नमालादीपिका

श्रीव्यासराजप्रशिष्यविट्ठलाचार्यप्रणीता

(स्वकृततारतम्यसद्रत्नमालाव्याख्या)

**व्यासतीर्थमनोमञ्चे मध्वमानसतल्पके ।**
**शयानौ नौमि [1]मत्यर्थं लक्ष्मीनारायणौ प्रभू ।।**
**तारतम्यस्तवव्याख्यां पाठार्थं श्लोकरूपतः ।**
**कृत्वा तां व्याकरिष्येऽहं विट्ठलो मानपूर्वकम् ।।**

अथेष्टानिष्टप्राप्तिपरिहारार्थं सर्वदेवानां लक्ष्मीनारायणयोश्चावतारावेशतारतम्यज्ञानमावश्यकम् । तदुक्तं तात्पर्यनिर्णये -

**अवतारान् हरेर्ज्ञात्वा नावतारा हरेश्च ये।**
**तदावेशान् तथा सम्यक् ज्ञात्वा मुक्तिर्न चान्यथा ।।**
**तारतम्यं ततो ज्ञेयं सर्वोच्चत्वं हरेस्तथा ।**
**एतद् विना न कस्याऽपि विमुक्तिः स्यात् कथञ्चन ।।**

[2]एतदर्थं आनन्दतीर्थैः तत्र तत्र बृहदारण्यकभाष्यादौ कथितम्।

**'उषा स्वाहा च पर्जन्यो मित्रोऽग्निर्वरुणो विधुः ।**
**प्रवहोऽनिरुद्ध इन्द्रोमे रुद्रो वाणी च मारुतः ।।'**

इत्याद्यनुव्याख्यानस्य व्याख्यानानन्तरं तत्रायं सङ्ग्रह इति जयतीर्थाचार्यैः देवतातारतम्यस्य सङ्ग्रहः कृतः । तत्सर्वं तारतम्यं कैश्चिन्मध्वशास्त्राभिज्ञैः श्लोकचतुष्टये सङ्ग्रहीतम् । [3]तान् श्लोकान्

1. मत्यर्थे क. मतये ख.
2. एतदर्थो आनन्दतीर्थैः तत्र तत्र बृहदारण्यके भायादौ कथितः - क ।
3. तत् शास्त्रं ।

अर्थतो व्याचिख्यासुः मङ्गलाचरणपूर्वकमवतारादित्रयं सन्दर्शयिष्य इति प्रतिजानीते - नत्वेति ।।

तारतम्यसद्रत्नमाला श्रीविट्ठलाचार्यप्रणीता

(प्रथमकक्ष्यास्थो विष्णुः मत्स्यकूर्मकपिलाद्यनन्तरूपोऽनन्तगुणश्च)

**नत्वा नारायणं विष्णोरावेशं च दिवौकसाम् ।**
**अवतारं तारतम्यं दर्शयिष्येऽन्यतः स्थितम् ।। १ ।।**

अवतारं तारतम्यं जात्येकवचनम् । विष्णोरवतारान् आवेशं च दिवौकसां श्रीब्रह्मादीनां तदुभयं परस्परं च दर्शयिष्य इत्यन्वयः । अन्यतः अन्यत्र ग्रन्थान्तरे ।। १ ।।

**तारतम्यसद्रत्नमाला**

**।। प्रथमकक्ष्या ।।**

(अनन्तगुणोऽनन्तरूपश्च विष्णुः)

**मत्स्यः कूर्मः क्रोडसिंहौ वटुरामौ च भार्गवः ।**
**कृष्णबुद्धौ दत्तकल्की हयग्रीवैतरेयकौ ।। २ ।।**
**वेदव्यासश्च वैकुण्ठः कपिलो ऋषभस्तथा ।**
**नारायणी तापसश्च यज्ञो धन्वन्तरिस्तथा ।। ३ ।।**
**नारायणः कृष्णहरी उपेन्द्रः सर्व एव च ।**
**एवमाद्या हरिः साक्षादनन्तगुण उच्यते ।। ४ ।।**

तारतम्यसद्रत्नमालाव्याख्या

विष्णुः सर्वोत्तम इत्यस्य भावमाह - **मत्स्य इति ।** क्रोडो वराहः। सिंहो नृसिंहः । वटुर्वामनः । रामो दाशरथिः । भार्गवः परशुरामः। ऐतरेयः महिदासः ।। २ ।।

तापसः चतुर्थो मनुः यज्ञ आद्येन्द्रः ।। ३ ।।

नारायणः कृष्णहरी एते धर्मान्मूर्त्यां[1] जाताः । उपेन्द्रः सर्वे त्रयोदश। [2]पृथ्वादिवदावेशावतारत्वं निराकरोति - *हरिः साक्षात्* इति । अत्र

**'मत्स्यः कूर्मः क्रोडसिंहौ वटुरामौ च भार्गवः ।**
**कृष्णबुद्धौ दत्तकल्की हयग्रीवैतरेयकः ।।**
**पराशरश्च कपिलो वैकुण्ठो ऋषभस्तथा ।**
**यज्ञो धन्वन्तरिश्चैव स्त्रीरूपस्तापसो मनुः ।।**
**नारायणः कृष्णहरी उपेन्द्राः सर्व एव च ।**
**एवमाद्याः हरेः साक्षात् प्रादुर्भावाः प्रकीर्तिताः ।।'**

इति बृहद्भाष्यं मानम् ।

सर्वोत्तमत्वं गुणपूर्त्यैव । देशकालपूर्णत्वयोः लक्ष्म्या अपि सत्त्वस्य 'समना च' इति सूत्रे निर्णीतत्वात् । तदेतदभिप्रेत्योक्तं अनन्तगुण इति । प्रमाणवाक्यक्रमोल्लङ्घनं स्त्रीशूद्रादीनां पाठार्थम् ।। ४ ।।

**।। तारतम्यसद्रत्नमाला ।।**

**।। द्वितीयकक्ष्या ।।**

**(द्वितीयकक्ष्यास्था रमा श्रीभूदुर्गाम्भ्रिणी ह्रीर्दक्षिणा सत्यादिरूपा सुखसार्वज्ञ्यादिपूर्णाऽनन्तांशहीना च विष्णोः)**

**श्रीभूदुर्गाऽम्भ्रिणी ह्रीश्च महालक्ष्मी च दक्षिणा ।**
**जयन्ती जानकी सत्या रुग्मिणीत्यादिका रमा ।। ५ ।।**

---

1. मूर्त्याख्यायां तत्पत्न्याम् ।
2. पृथ्वादिवत् आवेशत्वम् ।

**विष्ण्वावेशयुताऽनन्तगुणैर्हीना हरेः स्मृता ।**
**सर्वदा सुखरूपा च सर्वदा ज्ञानरूपिणी ।। ६ ।।**

तारतम्यसद्रत्नमालाव्याख्या

दक्षिणा यज्ञभार्या । जयन्ती ऋषभभार्या । अत्र

**'श्रीभूदुर्गाम्भ्रिणीह्रीश्च महालक्ष्मीश्च दक्षिणा ।**
**सीता जयन्ती सत्या च रुग्मिणीत्यादिभेदिता' ।।**

**'प्रकृतिस्तेन चाविष्टा तद्वशो न हरिः स्वयम् ।**
**ततोऽनन्तविहीना च बलज्ञप्तिसुखादिभिः' ।।**

इति बृहद्भाष्यं मानम् ।। ५. ६. ।।

**।। तृतीयकक्ष्या ।।**

**(विष्ण्वाविष्टौ ब्रह्मवायू बहुरूपिणौ । योग्यतासाम्येऽपि पदकृतन्यूनताविशिष्टो वायुरेष्यत्कल्पे ब्रह्मत्वमाप्य मुक्तो भवति । उभौ श्रियः कोटिगुणाधमौ)**

**विरिञ्चश्च महान् ब्रह्मा प्राणः सूत्रं धृतिः स्मृतिः ।**
**मेधा मुक्तिर्विष्णुभक्तिः चित्तं वायुर्महाप्रभुः ।। ७ ।।**
**बलं स्थितिः ऋजुर्योगः प्रज्ञा ज्ञानं महागुरुः ।**
**महाज्ञाता च विज्ञाता वैराग्यं रोचनः सुखम् ।। ८ ।।**
**हनूमान् भीम आनन्द इत्यादिबहुरूपिणौ ।**
**विष्ण्वाविष्टौ ब्रह्मवायू श्रियः कोटिगुणाधमौ ।**
**तत्रेदानीं किञ्चिदूनो वायुर्ब्रह्मत्वमेष्यति ।। ९ ।।**

अथ विधिप्राणनाथावित्यस्य भावमाह - विरिञ्चश्चेति । विरिञ्चः सूक्ष्मसृष्टौ । अत्र 'रूपेण पूर्वेण स वासुदेवनाम्ना विरिञ्चं सुषुवे च सातः' इति मानम् । महानिति स्थूलसृष्टौ । अत्र 'ततो

महत्तत्त्वतनुर्विरिञ्चः स्थूलात्मनैवाजनि वाक् च देवी' इति वचनं मानम् । ब्रह्मेत्यनन्तरसृष्टौ । इति त्रयोऽवताराः ब्रह्मणः । अन्ये वायोः । रोचनः । इन्द्रेषु द्वितीयः । स च अष्टमस्कन्धे प्रसिद्धः । एवमिन्द्रद्युम्नपुरन्दरसत्यजित् त्रिशिखविश्वादीन्द्रा अपि तत्रैव प्रसिद्धाः। आदिशब्देन आदिगोपादयः उच्यन्ते ।

अत्र -

**प्राणसूत्रे महान् ब्रह्मा चित्तं वायुर्बलं धृतिः।**
**स्थितिर्योगं च वैराग्यं ज्ञानं प्रज्ञा स्मृतिः सुखम् ।।**
**मेधा मुक्तिर्विष्णुभक्तिरादिगोपो महाप्रभुः ।**
**ऋजुः समानो विज्ञाता महाध्याता महागुणः ।।**
**हनुमान् भीम आनन्द इत्यादि बहुरूपिणः ।**
**आविष्टो विष्णुरेतेषु न विष्णुस्तत्स्वरूपकः ।**
**विष्णोः प्रियत्वे तद्भक्तौ तद्ज्ञाने च श्रियश्च ते ।**
**मुक्ता अप्यवरा नित्यं सर्वे कोटिगुणेन च ।।**

इति वृहद्भाष्यं मानम् ।

[1]धृत्यादिशब्दास्तदभिमानिनि ज्ञेयम् ।। ७-९ ।।

**।। तारतम्यसद्रत्नमाला ।।**

**।। चतुर्थकक्ष्या ।।**

ब्रह्माणी भारती चेत्यस्य भावमाह - सरस्वतीत्यादिना ।

**सरस्वती हरिप्रीतिः सर्ववेदात्मिका भुजिः ।**
**गायत्री गुरुभक्तिश्च श्रद्धा प्रीतिः सुखात्मिका।। १० ।।**

---

1. धृत्यादिशब्दाः तदभिमानिवाचका इति पाठः स्यात् ।

**शिवकन्येन्द्रसेना च द्रौपदी काशिजा तथा ।**
**चन्द्रेति ब्रह्मवाय्वोस्तु भार्ये भर्तुः शताधमे ।।११।।**

काशिजा काली । इतिशब्दः आद्यर्थकः । तेन बुद्ध्यादीनां सङ्ग्रहः । शताधमत्वमत्र आनन्दमीमांसोक्तक्रमेण । सरस्वत्या आनन्दानां शतं ब्रह्मण एकानन्दः । एतादृश शतानन्दो ब्रह्मेत्यर्थः । एवमुत्तरत्रापि ज्ञातव्यम् । अत्र -

**"सरस्वती च गायत्री श्रद्धाद्याः प्रीतिरेव च ।**
**सर्ववेदात्मिका बुद्धिरनुभूतिः सुखात्मिका ।**
**गुरुभक्तिः हरौ प्रीतिः सर्वमन्त्रात्मिका भुजिः ।**
**शिवकन्येन्द्रसेना च द्रौपदी काशिजा तथा ।**
**चन्द्रेत्यादिस्वरूपायाः तेभ्यः शतगुणाधमाः ।"**

इति बृहद्भाष्यं मानम् ।। १०-११ ।।

**।। तारतम्यसद्रत्नमाला ।।**

**।। पञ्चमकक्ष्या ।।**

द्विजफणिपमृडाश्चेत्यस्य भावमाह - हरीरयुगिति ।

**हरीरयुङ् नरः शुक्लकेशयुक्तो बलस्तथा ।**
**सङ्कर्षणावेशयुतो लक्ष्मणः परिकीर्तितः ।। १२ ।।**

**सदाशिवस्तपोऽहङ्कृद् वाय्वाविष्टः शुकस्तथा ।**
**ऊर्ध्वोऽर्पटो वामदेवः सद्योजातो ह्यघोरकः ।। १३ ।।**

**तत्पुमान् द्रौणिरौर्वश्च दूर्वासमुनिरेव च ।**
**जैगीषव्यादिरूपेण शेषरुद्रौ प्रकीर्तितौ ।**
**गरुडश्च त्रयश्चैते सरस्वत्याः शतावराः ।। १४ ।।**

नरः बलः लक्षणः शेषस्य अवतारः । अन्ये रुद्रस्य । ईरो मुख्यप्राणः । नरो धर्मजः । बलो बलरामः । अत्रोभयत्रापि 'विष्णोर्वायोरनन्तस्य त्रिभिरंशैर्नरः स्मृतः' इति एकादशस्कन्धतात्पर्यं मानम् । 'वाय्वाविष्टः शुकस्तथा' इत्यत्र 'शुकं तमाशु प्रविवेश वायुः' इति मानम् । अत्र सर्वत्र 'शेषः सदा शिवश्चोर्ध्वस्तपोऽहङ्कार एव च । नरोऽ[1]पटो लक्ष्मणश्च रौहिणेयः शुकस्तथा । सद्योजातो महादेवश्चाघोरस्तत्पुमानिति । दूर्वासा द्रौणिरौर्वश्च जैगीषव्यादि-रूपकः । पूर्वोक्तैश्च गुणैः सर्वैः ताभ्यां शतगुणाधमाः' इति । 'एवं सुपर्णाः सर्वेऽपि समा शेषैः सदैव तु' इति बृहदारण्यकभाष्यं मानम् ।। १२-१४ ।।

स्त्रियः षडित्यस्य भावमाह - जाम्बवतीति । देव्यावेशेति ।

**।। तारतम्यसद्रत्नमाला ।।**

**।। षष्ठकक्ष्या ।।**

**जाम्बवत्यधिकावेशे लक्ष्म्याः शेषसमानता ।**
**नीला भद्रा मित्रविन्दा कालिन्दी लक्षणा तथा ।। १५ ।।**

**जाम्बवत्याः किञ्चिदूना देव्यावेशयुता अपि ।**
**देव्यावेशह्रासकाले प्रद्युम्नाद् द्विदशाधिकाः ।। १६ ।।**

देवी रमा । अत्र 'देवीति श्रीरुदीरिता' इति मानम् । अयं भावः । जाम्बवत्यादिषट्सु जाम्बवती च स्वरूपेणाप्यधिका । अन्याः जाम्बवत्याः । किञ्चिन्नीचाः । परस्परं समानाः । रमायाः अधिका-वेशकाले जाम्बवती शेषसमा । अन्याः किञ्चिदूनाः । रमावेशह्रासकाले

1. वटो - ख

प्रद्युम्नाद्विंशतिगुणाधिका । जाम्बवती ताभ्यः शेषसमेति मूल-रूपापेक्षया । मुक्त्यपेक्षया च प्रद्युम्नमिति । अवरापेक्षया किञ्चिद-धिकाः । अत्र

**'तथैवान्याः सर्वदाऽनुप्रविष्टा**
**तासां मध्ये जाम्बवती प्रधाना ।**
**रामेण तुल्या जाम्बवती प्रियत्वे**
**कृष्णस्यान्या किञ्चिदूनाश्च तस्याः ।।**
**यदावेशो बहुलः स्याद् रमायाः**
**तदा तासु प्रीयते केशवोऽलम् ।**
**यदावेशो ह्रासमुपैति तत्र**
**प्रद्युम्नतो विंशगुणाधिकाः स्युः ।।'**

इति मानम् ।। १५-१६ ।।

**।। तारतम्यसद्रत्नमाला ।।**

**।। सप्तमकक्ष्या ।।**

आवेशबाहुल्यकालमभिप्रेत्य जाम्बवत्याः किञ्चिदाधिक्यमनपेक्षं च मूलं प्रवृत्तम् । सौपर्णी वारुणी चेत्यस्य भावमाह - **रेवतीति** ।

**रेवती श्रीयुता श्रीश्च पेयरूपा च वारुणी ।**
**सौपर्णी पार्वती चैव तिस्रः शेषाच्छतावराः ।। १७ ।।**

रैवतपुत्री रेवतीं श्रीयुता रमाविष्टा । श्रीश्चनामिका । अपरा पेयरूपा। तिस्रो वारुण्यवतारा इत्यर्थः । अत्र 'स वारुणी-समाह्वयामवाप रेवतीं प्रभुः' इति । भार्या तु वारुणी नाम पूर्वा सैवापरं रूपमास्थाय चागात् । 'श्रीरित्याख्यं सेन्दिरावेशमग्र्यम्' ।

'तस्या वारुण्याः प्रतिमा पेयरूपा' इति च मानम् । शेषाच्छतावरा इत्यत्र 'सर्वैर्गुणैः सदा मुक्तौ तद्भार्या तच्छतावराः' इति बृहद्भाष्यं मानम् ।। १७ ।।

**।। तारतम्यसद्रत्नमाला ।।**

**।। अष्टमकक्ष्या ।।**

इन्द्रकामावथेत्यस्य भावमाह - **पुरन्दर इति** ।

**पुरन्दरो मन्द्रद्युम्नोऽर्जुनो नरहरीरयुक् ।**
**वाली गाधिर्विकुक्षिश्च कुशाद्या इन्द्र उच्यते ।।१८।।**
**प्रद्युम्नयुक्तः प्रद्युम्नभरतौ च सुदर्शनः ।**
**व्रह्मयुक् साम्वस्कन्दश्च कुमारः काम उच्यते ।**
**शतावरा उमायाश्च काम इन्द्राधमोऽल्पतः ।।१९।।**

इन्द्रेषु पुरन्दरः सप्तमः । मन्द्रद्युम्नः षष्ठः । नरहरीरयुगिरित्यत्र नरो विष्णुः वाय्वाविष्ट इति पूर्वमुक्तम् । 'स चार्जुनो नाम नरांशा-युक्तो विष्ण्वावेशी बलवानस्त्रवेत्ता' इति । युधिष्ठिराद्येषु चतुर्षु 'वायुः समाविष्टः' इति मानम् । गाधिः विश्वामित्रपिता । विकुक्षिरिक्ष्वाकुपुत्रः । कुशो रामपुत्रः । अत्र 'देव्यां स चाजनयदिन्द्र-हुताशनौ द्वौ पुत्रौ यमौ कुशलवौ बलिनौ गुणाढ्यौ' इति मानम् । **प्रद्युम्नेति** । आद्यः प्रद्युम्नो हरिः । द्वितीयः कृष्णजः । भरतो रामानुजः । प्रद्युम्नयुतौ च तौ प्रद्युम्नभरतौ चेति विग्रहः । सङ्कर्ष-णाद्यैः । त्रिभिरेव रूपैः 'आविष्ट आसीत् त्रिषु तेषु विष्णुः' इति भारते मानम् । 'चतुस्तनो हरेः प्रभोस्तृतीयरूपसंयुतः' इति प्रद्युम्ने मानम् । सुदर्शनः चक्राभिमानी । व्रह्मयुक् साम्व इत्यत्र 'अवाप साम्वनामकं सुतं च रोहिणी हरेः । चतुर्मुखांशसंयुतं कुमारमेव षण्मुखम्'

इति मानम् । स्कन्दः षण्मुखः । कुमारः सनत्कुमारः । अत्र 'वाली गाधी विकुक्षिश्च पार्थ इन्द्रः पुरन्दरः। सुदर्शनश्च भरतः प्रद्युम्नः स्कन्द एव च । सनत्कुमारः कामश्चेत्येक एव व्यवस्थितः ।' इति बृहद्भाष्यं मानम् । काम इन्द्राधमोऽल्पतः इत्यत्र 'प्रायः इन्द्रवत् कामः' इत्यनुव्याख्यानं मानम् । प्रायग्रहणेनेषन्न्यूनः इति जयतीर्थीयं मानम् ।। १८-१९ ।।

**।। तारतम्यसद्रत्नमाला ।।**

**।। नवमकक्ष्या ।।**

प्राणोऽथो इत्यस्य भावमाह - सर्वोत्तुङ्ग इति ।

**अहङ्कारभवप्राणवायुर्गुर्विन्द्रमध्यगः ।**
**शर्वोत्तुङ्गगजौ चास्य (रूपभेदौ प्रकीर्तितौ) ।।२०।।**

अत्र [1]'सर्वोत्तुङ्गो नामतः प्राणवायोरंशः । 'निशायां गुरुपुत्र-सूदितः' इति मानम् । गजो गवाक्षो गवयो वृषश्च सगन्धमादा धनदेन जाताः । प्राणादयः पञ्च मरुत्प्रवीराः' इति च मानम् । तस्येन्द्रानन्तर्ये 'प्राण आहङ्कारिक एव च । इन्द्राद्यनन्तरः' इति अनुव्याख्यानं मानम् ।। २० ।।

**।। तारतम्यसद्रत्नमाला ।।**

**।। दशमकक्ष्या ।।**

योऽनिरुद्ध इत्यादेर्भावमाह - तार इति ।

**तारो ब्रह्मांशयुग् द्रोणो वायुयुक्तोद्धवो गुरुः।। २१ ।।**

---

1. सर्वतुङ्ग - ख

**अनिरुद्धयुक् शत्रुघ्नोऽनिरुद्धो कामनन्दनः ।**
**कामभार्या रुग्मवती लक्षणेत्यादिरूपिणी ।। २२ ।।**
**तारा चित्राङ्गदेत्यादिरूपा शच्यपि हि स्मृता ।**
**स्वायम्भुवमनुर्दक्षः षडन्योन्यं समा मताः ।**
**प्रवहात् पञ्चगुणतोऽधिका इन्द्राच्छतावराः ।।२३।।**

अत्र 'बृहस्पतिस्तार इति । अम्भोजजावेशयुतो बृहस्पतिः कर्तुहरेः कर्म भुवो भरोद्धृतौ । द्रोणेति नामस्य चकार तातः' इति । 'बृहस्पतिः पूर्वमभूद्धरेः पदं संसेवितुम् पवनावेशयुक्तः । स उद्धवो नाम' इति मानम् । **अनिरुद्ध इति** । आद्योऽनिरुद्धो हरिः द्वितीयो प्रद्युम्नजः । अनुरुद्धयुजौ च तौ शत्रुघ्नानिरुद्धौ चेति विग्रहः । कामं तन्नानिरुद्धं परामृश्योक्तम् । 'तावेव जातौ भरतश्च नाम्ना शत्रुघ्न इत्येव च रामतोऽनु' इति शत्रुघ्नस्यानिरुद्धत्वे मानम् । 'सङ्कर्षणाद्यैस्त्रिभिरेव रूपैराविष्टः' इति शत्रुघ्नस्य अनिरुद्धावेशे मानम् । 'अनिरुद्धः कार्ष्णिमनु प्रद्युम्नाद् योऽजनिष्ट हि । पूर्वमप्यनिरुद्धाच्च विष्णोस्तन्नाम्न एव च । आवेशयुक्तो वलवान्' इति प्रद्युम्नजानिरुद्धाख्यस्योक्तार्थे मानम् । रुग्मवतीत्यत्र 'रुग्मिपुत्र्यां रुग्मवत्यामाहृतायां स्वयंवरे । रतिरेव हि सा इति मानम् । लक्षणा दुर्योधनजा । अत्र 'दुर्योधनस्य सा पुत्री रतिर्या पूर्वनाम्ना लक्षणा कान्तरूपे'ति मानम् । तारेत्यत्र 'शचीं च शक्रस्य भार्यैव वभूव तारा' इति मानम् । चित्राङ्गदेत्यत्र 'सा च कन्या शची हि । चित्राङ्गदा वीरसेनेन तोषात्' इति मानम्। अत्र सर्वत्र आदिशव्दप्रयोगः अवतारान्तरसम्भावनार्थः ।

स्वायम्भुवो मनुर्दक्षः षडन्योन्यं समा मताः इत्यत्र 'मनुर्दक्षो वृहस्पतिः । शचीरतिश्चानिरुद्धसमेत्यनुव्याख्यानं मानम् । 'अथातः सम्भूतिः परमाद् विद्यायाः प्राणः प्राणात् श्रद्धा श्रद्धायाः शिवः शिवाद् वुद्धिः बुद्धेरिन्द्रः इन्द्रात्तैजस प्राणः तैजसप्राणाद् अनिरुद्धो

अनिरुद्धात् स्पर्शवातः[1] स्पर्शवातात् सोमः सोमाद् वरुणो वरुणादग्निः अग्नेर्मित्रो मित्रात् पर्जन्यः पर्जन्यात् स्वाहा स्वाहाया उषा जायत इति छान्दोग्यभाष्यश्रुतिः उक्तवक्ष्यमाणानां तारतम्ये मानम् । अनेन तैजसप्राणानन्तर्यमनिरुद्धस्य सिद्धम् । 'प्रवहात् पञ्चगुणतोऽधिका' इत्यत्र 'पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च द्विगुणा एव' इति अनिरुद्धो 'अनिरुद्धात् पञ्चगुणाधिकः' इति छान्दोग्यभाष्यम् 'अनिरुद्धश्च पञ्चगुणेनाधिकः' इति च टीका मानम् । उक्तवक्ष्यमाणानां [2]शत(गुणामधिका)नन्दत्वे

**'एकानन्दस्वरूपोऽसौ मानुषो मुक्त उच्यते ।**
**तस्माच्छतगुणानन्दा गन्धर्वा मानुषात्मकाः ।**
**तेभ्यः शतगुणानन्दा देवप्रेष्यास्तु मुख्यतः ।**
**एते हि देवगन्धर्वाः मुक्तेभ्यः तेभ्य एव तु ।**
**शताधिका हि पितरस्तेभ्य आजानदेवताः ।**
**अनाख्यातादेवतास्तु जाता देवकुले च याः ।**
**आजानदेवतास्ताहि तेभ्योऽग्र्याः कर्मदेवताः ।**
**वल्याद्याः अन्तराप्राप्तदेवताः कर्मदेवताः ।**
**ताभ्यश्च तात्विकादेवा सृष्ट्यादौ देवतां गताः ।**
**तेभ्यो दक्षश्चेन्द्रनामा स हीन्दुं रावयत्पुरा ।**
**तस्माद् वृहस्पतिर्नाम्ना महेन्द्रत्वात्पुरन्दरः ।**
**तस्मात् प्रजापतिर्मुक्तो रुद्रः प्रजनने स्थितः ।**
**तस्माद् व्रह्मा शतगुणो मुक्त इत्येष निर्णय ।'**

इति तैत्तिरीयभाष्यं मानम् ।

---

1. वायुः - ग
2. शतानन्दत्वे - ग

।। तारतम्यसद्रत्नमाला ।।

।। एकादशकक्ष्या ।।

प्रवह इत्यस्य भावमाह - 'भूताभिमानी प्रवहः' इति ।

**भूताभिमानी प्रवहः सूर्यात्तु द्विगुणाधिकः ।**

भूताभिमानी प्रवहः सूर्यात्तु द्विगुणाधिकः । प्रमाणं तु पूर्वमेवोक्तम्।

।। तारतम्यसद्रत्नमाला ।।

।। द्वादशकक्ष्या ।।

**जाम्ववान् वायुयुग् धर्मो विदुरः सत्यजिद्यमः ।**
**व्रह्माविष्टश्च सुग्रीवो हरियुक् कर्ण एव च ।। २४ ।।**
**एवं द्विरूपः सूर्यः स्यात् इन्द्राविष्टोऽङ्गदः शशी ।**
**शतरूपा च चत्वारः प्रवहाद् द्विगुणाधमाः ।। २५ ।।**

उत यम इत्यादेर्भावमाह - जाम्बवान् इत्यादिना ।

अत्राऽयं विशेषः । आदिसृष्टौ ब्रह्मणस्त्वगुद्भवो धर्म एव पुनः सूर्याधमो जातः । धर्मस्यावतारोऽयं जाम्ववान् । यमस्य अवताराः युधिष्ठिराद्याः । 'जाम्बवान् वायुयुग् धर्मः' इत्यत्र 'जाम्ववतो यमस्य अवतारत्वोक्तिः स्वरूपैक्यापेक्षया । धर्मसूनुरिति युधिष्ठिरेऽपि प्रयोगात् । 'जाम्ववान्' इत्यत्र य एवं पूर्वं परमेष्ठिवक्षसस्त्वगुद्भवो धर्म इहाऽस्यतोऽभवत् । स जाम्ववानिति मानम् । वायुयुग् धर्म इत्यत्र 'युधिष्ठिरं यमो हि सः प्रपेद आत्मपुत्रताम्' इति युधिष्ठिराद्येषु चतुर्षु वायुः ममाविष्ट इति वचनं मानम् । विदुर इत्यत्र 'मक्षीवधादित्यवदद्यमस्तम् । अवाप शूद्रत्वमथास्य नाम विद्यारतेर्विदुरो नाम चायम्' इति मानम् । सत्यजिदिन्द्रेषु तृतीयः । 'व्रह्माविष्टश्च सुग्रीवः'

इत्यत्र 'सुग्रीव आसीत् परमेष्ठितेजसा युतो रविः' इति मानम् । 'हरियुक् कर्ण' इत्यत्र 'अथाऽससाद भास्करः स तत्र जग्मिवान् स्वयम् । तथाऽपि रामसेवनाद्धरेः च सन्निधानयुक्' इति मानम् । 'इन्द्राविष्टोऽङ्गदः शशी' इत्यत्र 'ब्रह्मोद्भवः सोम उतास्य सूनो-रत्रेरभूत्सोऽङ्गद एव जातः। इन्द्रोऽङ्गदे च' इति मानम् । शतरूपा स्वायम्भुवमनुभार्या । प्रवहाद् द्विगुणाधमेत्यत्र 'पर्जन्यमित्र' इत्युक्तं मानम् ।। २४-२५ ।।

अप्पोथो इत्यस्य भावमाह । महाभिषग् इति ।

**।। तारतम्यसद्रत्नमाला ।।**

**।। त्रयोदशकक्ष्या ।।**

**महाभिषक् सुषेणश्च मण्डूकः शन्तनुस्तथा ।**
**एते प्राग् वरुणश्चन्द्रात् पादपादार्धतोऽधमः ।।२६।।**

महाभिषङ्ङित्यत्र शन्तनुरित्यत्र च 'महाभिषङ्नाम नरेश्वरस्त्वं भूत्वा पुनः शन्तनुनामधेयः' । सुषेण इत्यत्र 'अभूत् सुषेणो वरुणः' इति मानम् । मण्डूकरूपीत्यत्र 'मण्डूकरूपी वरुणः' इति माण्डूकभाष्यं मानम् । 'पादपादार्धतोऽधमः' इत्यत्र 'अध्यर्धोनः समो मतः' इति छान्दोग्यभाष्यं 'पादपादार्धतोऽधमः' इति तट्टीका च मानम् ।।२६।।

**।। तारतम्यसद्रत्नमाला ।।**

**।। चतुर्दशकक्ष्या ।।**

नारदोऽथो इत्यस्य भावमाह - **वरुणादिति** ।

**वरुणान्नारदो न्यूनो वन्हेरभ्यधिको मतः ।**
भृगुरनलकुलेन्द्रः प्रसूतिश्च नित्यम् ।

अत्र 'वरुणाग्न्यन्तरा तत्र नारदः' इत्यनुव्याख्यानं मानम् ।।२७।।

भृगुरित्यादेर्भावमाह । **धृष्टद्युम्न इति** ।

**।। तारतम्यसद्रत्नमाला ।।**

**।। पञ्चदशकक्ष्या ।।**

**धृष्टद्युम्नो लवो नील इत्याद्यग्नेः प्रसूतिकाः ।।२७।।**
**जराव्याधो भृगुः प्राक् च त्रयो दक्षाच्छतावराः ।**
**वरुणात् पादतो न्यूना मित्रात्तु द्विगुणाधिकाः**
**।। २८ ।।**
**वायुयुग् वाल्हिकः पूर्वं प्रह्लादो नारदाधमः ।**
**कर्मजेभ्यः स देवेभ्यो गुणाधिक इतीरितः ।। २९ ।।**

दीप्ताङ्गारनिभो वह्निकुण्डमध्यात् समुत्थितः । 'धृष्टत्वाद्योतनत्वाच्च धृष्टद्युम्न इतीरितः' इति मानम् । लव इत्यत्र 'देव्यां स चाजनयदिन्द्रहुताशनौ' इत्युक्तमेव मानम् । 'नील' इत्यत्र 'नीलोऽग्निरासीत्' इति मानम् । 'जराव्याध' इत्यत्र 'पादप्रहारदोषेण तं भृगुं व्याधतां गतम् । जरानामे'ति मानम्। त्रयाणां साम्ये 'भृगुरग्निसम' इति 'प्रसूतिर्वह्निवत्' इत्यनुव्याख्यानं मानम् । 'दक्षाच्छतावरा' इत्यत्र 'तात्त्विको दक्ष एव'त्विति तैत्तिरीयभाष्यं मानम्। 'ताभ्यश्च तात्त्विका देवा तेभ्यो दक्षेन्द्रनाम' इति बृहदारण्यकटीकायां अग्न्यादिभ्यः कर्मदेवानां शतावरत्वेन कथनात् तात्त्विकशब्देन अग्न्यादय एवोच्यन्ते इति ज्ञायते। 'वरुणात्पादतो न्यूनात् मित्रात् किञ्चिद् गुणाधिकः' इत्यत्र 'पादोनो वरुणादग्निः' इति । 'पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च । द्विगुणा एव' इति छान्दोग्यभाष्यं

मानम् । 'वायुयुग् बाह्लिकः' इत्यत्र 'हिरण्यकशिपोः पुत्रः प्रह्लादो भगवत्परः । वायुना च समाविष्टः' इति मानम् । प्रह्लादस्य देवत्वे 'देवाः शापाभिभूतत्वात् 'प्रह्लादाद्या बभूविरे' इति ब्रह्मसूत्रभाष्यं मानम् । मच्छापादासुरो भावः प्रह्लादादेर्न तु स्वतः' इति ब्रह्मवाक्ये छान्दोग्ये भाष्ये - 'देवासुरनरत्वाद्याः देवादीनां निसर्गतः । निसर्गो नान्यथैतेषां केनचित् क्वचिदेव वा । देवा अपि बलादेव प्रह्लादादित्वमागताः । अतः पुनश्च देवत्वं यान्ति ते निजमेव तु' इति च मानम् । तस्य नारदाधमत्वे 'ऋते तु तात्त्विकान् देवान् नारदादींस्तथैव च । प्रह्लादादुत्तमः कोऽनु विष्णुभक्तो जगत्त्रये' इति भागवततात्पर्यं मानम् । नारदाधम इत्येवोक्तम् । अस्मादेवादुत्तम इति नोक्तम् । तत्र मानादर्शनात् ।। २८-२९ ।।

**।। तारतम्यसद्रत्नमाला ।।**

**।। षोडशकक्ष्या ।।**

**मरीचिरत्र्यङ्गिरसः पुलस्त्यः पुलहः क्रतुः ।**
**विश्वामित्रो वसिष्ठश्च वैवस्वतमनुस्तथा ।**
**नव वन्ह्यवरा नित्यं मित्राद् किञ्चिद् गुणाधिकाः**
**।। ३० ।।**

विश्वामित्रमरीचीत्यादौ 'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । भृगुर्दक्षो वसिष्ठश्च दशमस्तत्र नारदः' इति दशब्रह्मपुत्रेषु दक्षनारदभृगुणां पूर्वमुक्तत्वात् ।सप्तेत्युक्तम् । तान् विहाय मरीचिरिति । नवानां साम्ये 'मित्रतन्मध्ये ब्रह्मपुत्रकाः' इति । 'विश्वामित्रः कसूनुवत् । वैवस्वतो मनुश्च' इति अनुव्याख्यानं मानम् ।। ३० ।।

**।। तारतम्यसद्रत्नमाला ।।**

**।। सप्तदशकक्ष्या ।।**

**मित्रतारे निर्ऋतिप्रावह्यौ पूर्वोक्तेभ्यः किञ्चिदवराः ।**
**राहुयुग् भीष्मको मित्रः कृपी तारा प्रकीर्तिता ।**
**महाबली दुर्मुखश्च रुद्रयुक्तो घटोत्कचः ।। ३१ ।।**
**द्वावेतौ निर्ऋतिः पूर्वं प्रावही च तथा मता ।**
**चत्वार एते पर्जन्याद् द्विगुणेनाधिकाः स्मृताः**
**।। ३२ ।।**

'मित्रतारे' इत्यादेर्भावमाह - **राहुयुगिति** । मित्रो द्वादशादित्येष्वेकः । तारा गुरुभार्या । महाबलीति दुर्मुखघटोत्कचयोर्विशेषणम् । प्रावहि । प्रवाहस्त्री । राहुयुक् इत्यत्र 'स तु पिताऽस्य हि मित्रभागः राह्वंशयुक्' इति मानम् । कृपीत्यत्र 'तारा या हि बृहस्पतेः । कृपः कृपी' इति मानम् । महाबली दुर्मुख इत्यत्र 'निर्ऋतितनुमथोग्रं दुर्मुखम्' इति मानम् । 'रुद्रयुक्तो घटोत्कच' इत्यत्र 'देवोऽपि राक्षसतनुर्निर्ऋतिः पुरा यः आवेशयुक्तगिरिशस्य घटोत्कचाख्यः' इति मानम् । चर्तृणां साम्ये 'तारा च मित्रवत्' इति। 'निर्ऋतिर्मित्रसदृश' इति । 'मित्रवत्त्वेव प्रवाही परिकीर्तिता' इति च अनुव्याख्यानं मानम् । 'पर्जन्यात्तु द्विगुणाः परिकीर्तिताः' इत्यत्र 'पर्जन्य मित्रशिखिन' इति मानम् ।। ३१-३२ ।।

**।। तारतम्यसद्रत्नमाला ।।**

**।। अष्टादशकक्ष्या ।।**

**नवकोट्यस्तु देवानां तासां मध्ये शतस्य तु ।**
**सोमाधिकारो वेदोक्तो ब्रह्मणी द्वे शताधिके ।।३३।।**

**आदित्यरुद्रावसुरश्विनौ च विश्वेदेवा मरुतो बृहस्पतिः ।**
**प्रधानवायुः पितृत्रयं च द्यावापृथिव्यौ ऋभवः शतोऽथ**
**।। ३४ ।।**
**चारुदेष्णो विघ्नपः प्राक् विष्वक्सेनस्तथैव च ।**
**रुद्रयुग् भगदत्तश्च कत्थनौ द्वौ धनेश्वरः ।। ३५ ।।**

विष्वक्सेन इत्यस्य भावमाह - **चारुदेष्ण** इत्यादिना । 'उक्तशेषाः शतस्थाः' इत्यस्यायं भावः । 'नवकोट्यस्तु देवानां तेषां मध्ये शतस्य तु । सोमाधिकारो वेदोक्तो ब्रह्मणी द्वे शताधिके' इति भाष्यस्थ-प्रमाणस्य व्याख्यानं त्रिविक्रमपण्डिताचार्यैः कृतम् - 'प्रधानवायुर्वसवो रुद्रादित्या मरुद्गणाः । विश्वेदेवाः सुराचार्यः पितरश्च त्रयस्तथा । अश्विनावृभुसङ्घश्च द्यावापृथ्व्या उभे तथा । एते च सोमपानार्हा शते द्वे ब्रह्मणी तथा । पर्जन्यमित्रवरुणवह्नयः प्रवहस्तथा ।। इन्द्र-रुद्रावश्विनौ च मुख्यप्राणो बृहस्पतिः। [1]सूर्योऽहङ्कारिकः प्राणः आदित्यगणमध्यगः । उक्तक्रमश्च इत्येते उक्ता ज्ञेयाश्चतुर्दश । विनाग्नि वसवः सप्तदश रुद्रा विनेश्वरम् । षडादित्याश्च विज्ञेयाः मित्रं शक्रम् उरुक्रमम्। विवस्वतं च वरुणं पर्जन्यं च विना तथा। मरुतः सप्त चत्वारिंशत्प्राणं च प्रवहं विना । दश विश्वे ऋभुगणानाद्यौ पृथ्वी पितृपास्त्रयः । उक्तशेषाः विजानीथ षडशीतिसुरांस्तथा । प्रधानवायुर्वसुः रुद्रा आदित्याः मरुतो विश्वेदेवाः बृहस्पतिः पितृपतयो आश्विनावृभवो द्यावापृथीव्यन्ताः । द्वे ब्रह्मणी परावरे । तत्र परं विष्ण्वाख्यम् अवरं चतुर्मुखाख्यं इति सोमार्हाः शतदेवाः त्रिविक्रम-पण्डितैः कथिताः । तदन्याः शतदेवताः 'पर्जन्यमित्रान्तराल' इत्य-

1. सूर्येत्यारभ्य पितृपतय इति पर्यन्तं ग कोशे नास्ति ।

नुख्यानस्य उक्तेभ्यः अन्याः शतदेवताः सोमार्हशतदेवतान्तर्गतदेवताः पर्जन्यमित्रान्तराले पर्जन्यादुत्तमाः मित्रादधमाः अश्विनोः समाना इति सुधायां जयतीर्थाचार्यैर्व्याख्यानं कृतम् । तथा तदन्या शतदेवता इत्यतः प्राक् 'उषा स्वाहा च पर्जन्यः' इत्यादिना उक्तदेवतानां मध्ये ये सोमार्हाः देवाः तेषां मध्ये पर्जन्यो मित्रो वह्निर्वरुणः प्रवह इन्द्रोऽश्विनौ मुख्यप्राणः सूर्योबृहस्पतिरिति द्वादशदेवाः उक्ताः । तदेतदखिलं 'प्राण आहङ्कारिक एव च । इन्द्रादनन्तर' इत्यनेन प्राणोऽप्युक्तः । एवं त्रयोदशदेवाः उक्ताः । तेषु पर्जन्यो शेषदेवापेक्षया नीचः । अश्विनौ समानौ । अन्ये उत्तमाः । तथा च तेभ्योऽन्ये सप्तवसवो दशरुद्रा सप्तादित्याः सप्तचत्वारिंशन्मरुतो दश विश्वेदेवाः । ऋभुगण एकः । द्यावापृथिव्याविति चतुरशीति देवाः । शेषाः ऋभवो नाम 'तपसा सोमं प्राप्ताः सहस्रशः' इति भागवते ऋभूणां सहस्रत्वकथनात् गुणविवक्षा कर्तव्या । यद्वा 'ऋभुविभ्वावाज इति त्रयः । ऋभुशब्दवाच्याः' इति ऋग्भाष्यटीकानुसारेण ऋभूणां त्रित्वे द्यावापृथिव्यो अश्विनोश्चैकैकविवक्षा कर्तव्या । देवतात्वस्यैक्यात् । तदा द्वादशदेवाः उक्ताः पञ्चाशीति देवाः शेषाः पितृपतयः त्रयः। बहुवचनात् । ([1]'तावता शतपरिपूर्तेश्च ।) ते के उक्तेषु के तदन्ये शेषेषु वा इति विचारणीयम् । (शेषेषु चेदष्टाशीतिदेवाः शेषाः ।) उषा स्वाहेत्यादिनोक्तविचारस्याधिकारिवर्गविषयत्वादादित्येषु गणितोऽप्युरुक्रमः अधिकारिवर्गबहिर्भूतत्वात् शेषबहिर्भूत एव । एवं च सप्ताशीति देवाः शेषाः ।

अत्र सर्वत्र 'मित्रः पर्जन्यमध्यस्थावश्विनौ विघ्नवित्तपाः' इति

---

1. ग - नास्ति

तदन्याः शतदेवताः पर्जन्यमित्रान्तराल इत्यनुव्याख्यानम् । 'विष्वक्सेनो वायुजः खेन तुल्यः' इति च मानम्। विनायकादीनां अवतारादिकमाह - चारुदेष्ण इत्यादिना । अत्र 'स चारुदेष्णोऽपि हि विघ्नराजः' इति मानम् । विष्वक्सेनो विष्णुपार्षदः । रुद्रयुग् भगदत्त इति । 'तदर्थमेवास्य सुतोऽभिजातो धनेश्वरो भगदत्ताभिधानः । रुद्रावेशी' इति मानम् । कत्थनः कपिः । 'स कत्थनो वित्तपतिश्च जघ्नुः' इति मानम् ।। ३३-३५ ।।

(अष्टौ वसवः)

**द्रोणः प्राणो ध्रुवोऽर्कोऽग्निः दोषावस्तुर्विभाववसुः ।**
**वसुष्वेतेषु भीष्मः प्राग् ब्रह्मयुक्तो द्युनामकः ।। ३६ ।।**
**शतबलिश्च पनसौ वानरौ वसुरूपिणौ ।**
**नन्दगोपः पुरा द्रोणो वन्ह्यन्ये सप्त कीर्तिताः ।। ३७ ।।**

शेषदेवेषु वसूनाह - **द्रोण इत्यादिना** । ब्रह्मयुक्तो द्युनाम इत्यत्र 'अथाष्टमो वसुरासीद् द्युनामा महास्त्रवेत्ता । भवदंशयुक्तः' इति मानम् । वसुमध्यस्थस्याग्नेः षष्ठस्कन्धे तट्टीकायां स्वाहापतित्वोक्तिबलान्मूलाग्नित्वं सिद्धम् । स च प्रागुक्त इत्यन्य इत्युक्तम् । कीर्तिताः शेषेष्विति शेषः । एवमुत्तरत्रापि द्रष्टव्यम् ।।३६-३७।।

(एकादशरुद्राः)

**रैवतोऽजो भवो भीमो वाम उग्रो वृषाकपिः ।**
**अजैकपात् अहिर्बुध्निर्विरूपाक्षो महानिति ।। ३८ ।।**

**रुद्रा एकादशैतेषु भूरिः पूर्वमजैकपात् ।**
**भूरिश्रवाः सर्वरुद्रयुक्तोऽहिर्बुध्निरुच्यते ।। ३९ ।।**

**मूलरुद्रं भवमृते दशरुद्राः प्रकीर्तिताः ।**
**शालः पूर्वं विरूपाक्षः कृपो विष्कम्भ उच्यते ।। ४० ।।**
**सहदेवः सोमदत्तः एतौ प्राक् पत्रतापकौ ।**
**विरूपाक्षादयो नामभेदा रुद्रस्य कीर्तिताः ।। ४१ ।।**

रुद्रानाह - **रैवत इति** । 'रुद्रादन्ये तथा रुद्राः' इति बृहदारण्यक-भाष्ये महादेवस्य रुद्रेषु प्रसिद्धे'मूलरुद्रमृते' इति युक्तम् । सहदेवः सोमदत्त इत्यत्र 'भूरिः पूर्वम्' इत्यत्र 'भूरिश्रवा' इत्यत्र 'शल' इत्यत्र च 'पुराख्यातं पत्रतापाख्यरुद्रं सहदेवम्' इति 'रुद्रेषु पत्र-तापाख्यः सोमदत्तोऽस्य चाऽत्मजः । अजैकपादहिर्बुध्नि विरूपाक्ष इति त्रयः । रुद्राणां सोमदत्तोऽस्य बभूवुः प्रथिताः सुताः । विष्णो-रेवाङ्गतामापुः भूरिभूरिश्रवाः शलः । शिवादिसर्वरुद्राणामावेशाद् वरतस्तथा । भूरिश्रवा अतिबलो' इति मानम् । कृपो विष्कम्भ इत्यत्र 'कृपाया विषयौ यतः । कृपः कृपीति; स कृपः 'विकम्भो नाम रुद्राणाम्' इति मानम् । सम्प्रदायार्थमाह - विरूपाक्ष इति ।। ३८-४१ ।।

(द्वादशादित्याः)

**विवस्वान् अर्यमा पूषा त्वष्टाऽथ सविता भगः ।**
**धाता पर्जन्यवरुणौ मित्रश्शक्र उरुक्रमः ।। ४२ ।।**
**एतेषु कृष्णजो भानुः सवित्रंश उदाहृतः ।**
**वीरसेनोऽर्यमाविष्टस्त्वष्टा वै परिकीर्तितः ।। ४३ ।।**
**एते हि द्वादशादित्याः मित्रं शक्रमुरुक्रमम् ।**
**विवस्वन्तं च वरुणं पर्जन्यं च विना षट् ।। ४४ ।।**

आदित्यानाह - **विवस्वानिति** । विवस्वान् सूर्यः । पर्जन्यस्य

विधातेति नामान्तरम् । अष्टमस्कन्धे विधातेति द्वादशस्कन्धे पर्जन्य इति कथितत्वात् । 'पर्जन्यमित्रावादित्या'विति सुधावचनात् । गीताभाष्यटीकायामपि तथोक्तेश्च । उरुक्रमो हरिः । भानुः सत्यभामात्मजः । अत्र 'विवस्वतो योऽवरजोऽदितेः सुतः । ख्यातश्च नाम्ना सवितेति कृष्णात् । जातः स सत्याजठरे तथाऽत्र नाम्ना भानुः' इति मानम् । वीरसेन इत्यत्र 'स वीरसेनस्त्वष्टुरंशो यमस्याऽवेशयुक्' इति मानम् । चतुर्णां पूर्वमुक्तत्वात् पर्जन्यस्य वक्ष्यमाणत्वादुरुक्रमस्य शेषबर्हिर्भूतत्वात् । मित्रं शक्रम् उरुक्रमं विवस्वन्तं च वरुणं पर्जन्यं च विनाऽत्र षट् ।। ४२-४४ ।।

(मरुताम् अवतारादिनिरूपणम्)

**वायुयुक्तः पाण्डुराजः परावह उदीरितः ।**
**सम्पाती केसरी श्वेतस्त्रयो मरुत एव हि ।। ४५ ।।**

**चेकितानः प्राक् प्रतिभो विपृथुः सौम्य उच्यते ।**
**शर्वोत्तुङ्गराजश्चापि प्राणवायुरुदाहृतः ।**
**गवाक्षस्तु प्रागपानः मरुच्छ्रेष्ठः प्रकीर्तितः ।। ४६ ।।**

**गवयः प्राग् व्याननामा वृषः पूर्वमुदानकः ।**
**शर्वत्रातो गन्धमादो द्वौ समानावुदाहृतौ ।। ४७ ।।**

**नागः कूर्मश्च कृकलो देवदत्तो धनञ्जयः ।**
**कुन्तिभोजो पुरा कूर्म उद्वहश्च परावहः ।। ४८ ।।**

**आवहो विवहश्चैव संवहश्च तथाऽपरे ।**
**विना प्राणं च प्रवहं मरुतोऽन्ये प्रकीर्तिताः ।। ४९ ।।**
**मरुतां पञ्चकं चेति मित्रात् किञ्चिद् गुणाधमाः ।**

मरुत आह - [1](वायुयुक्त इति ।) अत्र 'परावहो नाम मरुत् ततोऽभवद्वर्णेन पाण्डुः स तु नामतश्च । स चास वीर्याधिक एव वायोरावेशयुक्तः' इति मानम् । **सम्पातीति** । संपातीकेसरिश्वेत इति त्रयः। प्राक् मरुत इत्यर्थः । अत्र 'पवनगणवरांशौ श्वेत-सम्पातिनौ च' इति 'केसरीति प्रवरमथ मरुत्सु' इति मानम् । चेकितान इत्यत्र मरुत्सु नाम प्रतिभोयदष्वभूत् स चेकितानो हरि-सेवनार्थम्' इति मानम् । विपृथुरित्यत्र निर्गत्य पुर्यां विप्रथुं ददर्श । एको ह्यसौ मरुतां सौम्यनाम' इति मानम् । गवाक्ष इत्यादौ 'गजो गवाक्षो गवयो वृषश्च' इत्युक्तिश्च मानम् । कुन्तिभोज इत्यत्र 'कूर्मश्च नाम्ना मरुदेव कुन्तीभोज' इति मानम् । प्राणप्रवहयोरुक्तत्वात् 'विना प्राणं च प्रवहम्' इत्युक्तम् । न केवलं प्राणप्रवाहाभ्याम् । किन्तु मरुतां पञ्चकञ्चेति चकार । अत्र मरुतश्च समाः सर्वे सप्त तेषु प्रधानकाः' इति भागवततात्पर्यवचनं मानम् । 'विष्णोः प्राणस्ततः श्रद्धा तस्या रुद्रो मनोभिधः। तस्मादिन्द्रस्त्विन्द्रियात्मा ततः सोमोऽन्नदेवता । ततश्च वरुणः सृष्टः तस्मादग्निस्ततोऽवरः । आकाशदेवताविघ्नस्ततो वायोः सुतो मरुत्' इति षट्प्रश्नस्थं मरुतां विनायकादधमत्वकथनं वाक्यं च मानम् ।। ४५-४९ ।।

(विश्वेषां देवानामवताराः)

**प्रतिविन्ध्यः श्रुतसोमः श्रुतकीर्तिस्तथैव च ।। ५० ।।**
**शतानीकः श्रुतकर्मा पञ्चैते द्रौपदीसुताः ।**
**समाविष्टाश्चित्ररथाऽभिताम्राभ्यां तथैव च ।। ५१ ।।**

---

1. ग - नास्ति

**किशोरगोपालबलैर्धर्मभीमार्जुनादिजाः ।**
**द्रौपदेयाः कैकयाः प्राक् विश्वेदेवा दश स्मृताः**
**।। ५२ ।।**
**सत्यो वसुः क्रतुर्दक्षः कामः कालो धनुर्धरः ।**
**पुरूरवा आर्द्रवश्च विश्वेदेवा दश स्मृताः ।। ५३ ।।**
**इन्द्रयुग् विविदो मैन्दो नकुलः सहदेवकः ।**
**त्रिशिखो विभुरित्येते ह्यश्विनौ परिकीर्तितौ ।। ५४ ।।**
**द्यावापृथिव्यामृभवः पितॄणां पतयस्तथा ।**
**विघ्नेशप्रमुखाः सर्वा मित्राद् किञ्चिद् गुणाधमाः**
**।। ५५ ।।**

विश्वेषां देवानामवतारानाह - **प्रतिविन्ध्य इति** । द्रौपदेयाः पञ्च कैकेयाः पञ्च एवं दश प्राक् विश्वेदेवा इत्यन्वयः । अत्र 'आसन् कृष्णायाः पञ्चसुताः गुणाढयाः विश्वेदेवाः पञ्चगन्धर्वमुख्यैः । आविष्टास्ते चित्ररथाभिख्यैः ताम्रकिशोरगोपालबलैः क्रमेण । प्रतिविन्ध्यः श्रुतसोमः श्रुताख्यकीर्तिः शतानीक उत श्रुतक्रियः' इति मानम् । कैकेयाः प्रागित्यत्र 'विश्वेषां देवानामवतारा हि पञ्च ते कैकेया' इति मानम् । इन्द्रयुगित्यत्र 'अश्विनौ बभूवतुस्तौ विविदश्च मैन्दः । ब्रह्मोद्भवौ तौ पुनरेव सूर्याद् बभूवतुस्तत्र कनीयसस्तु । आवेश ऐन्द्र' इति मानम् । नकुलसहदेवयोः वाय्वावेशो ज्ञेयः । युधिष्ठिराद्येषु चतुर्षु वायुः समाविष्ट इति मानात् । अत्र 'इतीक्षन्त्याकारितावश्विनौ तौ शीघ्रं प्राप्तौ पुत्रकौ तत्प्रसूतौ । तावेव जातौ नकुलः पूर्वजातः सहदेवोऽभूत् पश्चिमस्तौ यमौ च' इति मानम्। त्रिशिखौ विभुरिति चतुर्थपञ्चमेन्द्रौ । मूले अश्विनोः शेषत्वेनोक्तिसम्भवेऽपि शेषसमत्वेन कीर्तनम् 'उषा स्वाहेत्यादिप्रमाणा-

नुकर्षणार्थम् । द्यौश्च पृथिवी चेति द्यावापृथिव्यौ पितृपतीना-मुक्तान्तर्गतत्वे पितॄणां च पतीन् विनेति वक्तव्यम् । शेषान्तर्गतत्वेऽपि पितृपतयस्तथेति [1]वक्तव्यम् । उक्तं उपसंहरति - विघ्नेशप्रमुखा इति। 'मित्रात्किञ्चिद् गुणाधमः' इत्यत्र [2](मित्रः पर्जन्यमध्यस्था इत्यादिमानम्) पूर्वमुक्तम् ।। ५०-५५ ।।

**।। तारतम्यसद्रत्नमाला ।।**

**।। एकोनविंशकक्ष्या ।।**

**पावकोऽग्नेः प्रथमजः उचथ्यश्च्यवनस्तथा ।**
**रैवतश्चाक्षुषश्चैव स्वारोचिष उतोत्तमः ।। ५६ ।।**
**सावर्णिर्ब्रह्मसावर्णिः रुद्रसावर्णिरेव च ।**
**देवेन्द्रदक्षधर्माश्च सार्वर्ण्यन्ताः पितृसप्तकम् ।। ५७ ।।**
**कार्तवीर्यः पृथुश्चैव शशबिन्दुः प्रियव्रतः ।**
**दौष्यन्तिर्भरतश्चैव ककुस्थो गय एव च ।। ५८ ।।**
**ऋषभाद्धरिणाद् विप्राद् त्रिजन्मा भरतस्तथा ।**
**मान्धातेत्यादिराजानो विष्ण्वावेशयुता सदा ।। ५९ ।।**
**बलिरद्भुतशम्भू च विधृतस्त्वृतधामकः ।**
**दिवस्पतिः शुचिश्चैव गन्धर्वेष्वष्टकं तथा ।। ६० ।।**
**बल्याद्याः कार्तवीर्याद्याः कर्मदेवाः प्रकीर्तिताः ।**
**पावकाद्याः कर्मजाश्च वन्हेः शतगुणाधमाः ।**
**विघ्नेशादवमाः प्रोक्ताः पर्जन्यादुत्तमा मताः ।। ६१ ।।**

---

1. पठितव्यम् - ग
2. ग - नास्ति

उक्तेतरा ये इत्युक्त देवेषु एकमाह - **पावक इति** । एवमन्येऽपि वर्तन्त इति ज्ञेयम् । अत्र 'तदन्ये तु ततोऽवराः' इत्यनुव्याख्यानं मानम् । पावको विदिताश्वजः । स प्रागग्निपुत्रेषु ज्येष्ठपुत्रः । पावकनामा इत्यन्वयः । 'पावकः पवमानश्च शुचिरित्यग्नयः पुरा'। अत्र वसिष्ठशापादुत्पन्ना विदिताश्वात्' इति भागवतं मानम् । तस्य मरुदपेक्षया नीचत्वे 'ततो वायोः सुतो मरुत् । तस्मादग्निः पावकाख्यः' इति षट्प्रश्नभाष्यं मानम् । उचथ्यश्च्यवनावृषी । तदवरमनव इत्यस्य भावमाह - **रैवत इति** । देवेन्द्रदक्षधर्माः सावर्ण्यन्ता इति । देवसावर्णिरिन्द्रसावर्णिर्दक्षसावर्णिर्धर्मसावर्णिरित्यर्थः । 'रैवत' इत्यादौ 'उचथ्य' इत्यादौ च 'अश्विपश्चादन्ये ततोऽवराः' इत्यनुव्याख्यानं मानम् । अन्ये उक्तमनुभ्योऽन्ये मनवः ततो वैवस्वतादवराः 'तेऽश्विपश्चादिति' तट्टीका च ।

**'च्यवनोचथ्यवैन्यश्च शशबिन्दुश्च हैहयः ।**
**तद्वच्च विप्रराजन्यविशेषश्चापि कश्चन ।**
**तद्वत्प्रियव्रतश्चापि' इत्यनुव्याख्यानं मानम् ।**
**कार्तवीर्यः पृथुश्चैव दौष्यन्तिर्भरतस्तथा ।**
**शशविन्दुश्च मान्धाता ककुत्स्थाद्यास्तथापरे ।**
**सर्वे ते विष्णुनाऽविष्टाः विष्णोः भिन्नास्तथैव च ।**
**शतावराश्च देवेभ्यः कर्मदेवा इतीरिताः ।**
**पितॄणां सप्तकं यत्तत् कर्मदेवसमं स्मृतम्' ।।**

इति बृहद्भाष्यं मानम् ।'गय' इत्यत्र 'भरत' इत्यत्र च 'प्रियव्रतो गयश्चैव कर्मदेवसमौ मतौ' इति बृहद्भाष्यं च मानम् । 'ऋते हैहय वैन्यादीनार्षभस्येह कः समः इति भागवततात्पर्यं मानम्।

बलिरद्भुतेत्यादौ 'बल्याद्या अन्तराप्राप्ताः देवताः कर्मदेवताः' इति तैत्तिरीयभाष्यं मानम् । 'तेभ्यः शतावराश्चान्ये इन्द्राश्चान्याश्च देवताः' इति बृहद्भाष्यं मानम् । 'गन्धर्वेष्वष्टकं तथा' इत्यत्र 'कर्मदेवगणा अष्टगन्धर्वाः' इति बृहद्भाष्यं मानम् । वह्नेः शतगुणाधमा इत्यत्र 'शतावराश्च देवेभ्यः' इति बृहद्भाष्यं मानम् । 'देवेभ्यः अग्न्यादि-देवेभ्यः' इति तट्टीका च मानम् ।। ५६-६१ ।।

**।। तारतम्यसद्रत्नमाला ।।**

**।। विंशकक्ष्या ।।**

**शरभः प्राक् च पर्जन्यो देवकी शामला पुरा ।**
**चन्द्रस्त्री रोहिणी चैव सूर्यभार्या च सञ्ज्ञिका ।। ६२ ।।**
**अनिरुद्धस्य भार्योषा गङ्गा वरुणभार्यका ।**
**पावकादधमाः षट् स्युः स्वाहाया द्विगुणाधिकाः**
**।। ६३ ।।**

गङ्गापर्जन्येत्यादेर्भावमाह - 'शरभो केश' इति । 'पर्जन्यः शरभो जज्ञे' इति सङ्ग्रहरामायणं मानम् । 'पर्जन्यं च विनाऽत्र षट्' इत्युक्तपर्जन्योऽयम् । देवकीत्यत्र 'युधिष्ठिरो देवकीनामपूर्वां स्वीयां भार्याम्'इति मानम् । विराडित्यस्यार्थो अनिरुद्धभार्योषा । 'पावकादधमा षट् स्युः' इत्यत्र 'तस्मादग्निः पावकाख्यः प्रथमोऽग्नेः सुतो मतः । ततः पर्जन्य उद्भूतः' इति षट्प्रश्नभाष्यम् । विराट् । 'पर्जन्यवद्वारुणी च तथा सञ्ज्ञा च रोहिणी । धार्मी च' इत्य-नुव्याख्यानं मानम् । 'स्वाहायाः द्विगुणाधमाः' इत्यत्र पर्जन्यमित्रेत्युक्तं मानम् ।। ६१-६३ ।।

।। तारतम्यसद्रत्नमाला ।।

।। एकविंशकक्ष्या ।।

**पर्जन्यादधमाः केचित्**

'पर्जन्यादधमाः केचित्' इत्यत्र (मानान्तरादर्शनात्) । 'एभ्योऽन्ये च' इति मूलमेव मानम् ।

।। तारतम्यसद्रत्नमाला ।।

।। द्वाविंशकक्ष्या ।।

**तेभ्यः स्वाहाऽधमा मता ।**
**स्वाहोषसा दशगुणा पर्जन्याद् द्विगुणाऽधमा ।। ६४ ।।**

अग्निजाया इत्यस्य भावमाह - **स्वाहोषसा इति** । दशगुणा दशगुणाधिकेत्यर्थः । 'सर्वे त्वेते दशोत्तराः' इति छान्दोग्यभाष्यम् । 'नाम्नः स्वाहा दशोत्तरा' इति तट्टीका च । 'पर्जन्यमित्रशिखिनः' इति च । 'ततः पर्जन्य उद्भूतः स्वाहातो मन्त्रदेवता' इति षट्प्रश्नभाष्यं मानम् ।। ६४ ।।

।। तारतम्यसद्रत्नमाला ।।

।। त्रयोविंशकक्ष्या ।।

**अभिमन्युः कृष्णचन्द्रधर्मेन्द्राश्वियुग् बुधः ।**
**उषसश्चाधिकः प्रोक्तः स्वाहाया अधमो मतः ।। ६५ ।।**

जलमय इत्यत्र भावमाह - **अभिमन्युरिति** । अत्र 'तेषां द्वयोश्चावरजोऽभिमन्युः चन्द्रांशयुक्तो नितरां बुधौऽसौ । 'जाता सुभद्रा जठरेऽर्जुनेन धर्मेण शक्रांशयुतोऽश्विनोश्च । तथैव कृष्णस्य च सन्निधानयुक्' इति मानम् । उषसश्चाधिकः प्रोक्तः स्वाहाया अधमः'

इत्यत्र 'स्वाहातो मन्त्रदेवता । उदकात्मा बुधस्तस्मा उषा नामात्मिका ततः' इति षट्प्रश्नभाष्यं मानम् ।। ६५ ।।

**।। तारतम्यसद्रत्नमाला ।।**

**।। चतुर्विंशकक्ष्या ।।**

**जरासन्धस्य पुत्री च शल्यस्य च तथात्मजा ।**
**उभे अप्यश्विभार्योषा**

नामात्मिका इत्यस्य भावमाह - **जरासन्धस्येति** । अत्र 'भीमः कन्यां सहदेवस्य हेतोः समग्रहीदनुजस्याऽत्मनः सः । नकुलस्यादात्मद्रराजो हि पूर्वं स्वीयां कन्यां सा तथैषाऽप्युषा हि' इति मानम् ।

**।। तारतम्यसद्रत्नमाला ।।**

**।। पञ्चविंशकक्ष्या ।।**

**तस्याः अप्यवरः शनिः ।। ६६ ।।**

शनिरित्यादेर्भावमाह - तस्या अपीति । अत्र 'उषा नामात्मिका ततः' ।। ६६ ।।

**।। तारतम्यसद्रत्नमाला ।।**

**।। षड्विंशकक्ष्या ।।**

**शनेश्च पुष्करो न्यूनः उषसस्तु दशाधमः ।**

**।। तारतम्यसद्रत्नमाला ।।**

**।। सप्तविंशकक्ष्या ।।**

**विराधश्चोद्वाहाविष्टः सञ्जयो द्वौ च तुम्बुरुः ।। ६७ ।।**

**'ततः शनिः पृथिव्यात्मा कर्मात्मा पुष्करस्ततः'** इति षट्प्रश्न-भाष्यं मानम् । 'उषसस्तु दशाधमा' इत्यत्र 'सर्वे त्वेते दशोत्तराः' इति छान्दोग्यभाष्यं मानम् । कर्मणो नाम दशोत्तरा, इति तट्टीका च मानम् ।

**जनमेजय आविष्टस्त्वष्टा चित्ररथः पुरा ।**
**दमघोषकबन्धौ द्वौ दनुर्गन्धर्व उच्यते ।। ६८ ।।**
**ब्रह्मस्वायम्भुवाविष्टो ह्यक्रूरः प्राक् किशोरकः ।**
**वायुयुग् धार्तराष्ट्रस्तु धृतराष्ट्राभिधः पुरा ।। ६९ ।।**
**नक्रस्तथाऽवहाविष्टो द्रुपदो द्वौ हुहूः पुरा ।**
**विराटः प्राग्विवहयुक् हाहा देवस्य गायकः ।। ७० ।।**
**नन्ददंशी ह्यजगरो विद्याधर उदाहृतः ।**
**उग्रसेनस्तूग्रसेनगन्धर्वः समुदाहृतः ।। ७१ ।।**

स्पष्टत्वेनोपेक्षितं स्वयमाह - **अजानेया इत्यादिना** । अत्र तेभ्य आजानदेवताः । 'अनाख्याताः देवतास्तु जाता देवकुले च याः । आजानदेवतास्ता हि' इति पूर्वं मानमुक्तम् । 'विराध' इत्यत्र 'रामोऽपि तत्र ददृशे धनदस्य शापाद् गन्धर्वमुर्वशिरतेरथ यातुधानीम् । प्राप्तं दिशं सपदि तुम्बुरुनामधेयं नाम्ना विराधमपि शर्ववरादवध्यम्' इति 'समस्तगन्धर्वपतिस्तु तुम्बुरुः' 'य उद्धवो नाम मरुत्तदंशयुक्तो वशी सञ्जयनामधेयः' इति मानम् । जनमेजयः द्रुपदपुत्रः । अत्र 'जनमेजयस्तमन्वेव पूर्वं चित्ररथो हि यः । त्वष्टुरावेश-संयुक्तः' इति मानम् । दमघोष इत्यत्र 'युक्तो ययौ दमघोषेण साकं गन्धर्वोऽसौ दनुनामा' इति । प्राप्तः करौ स सहसाऽथ कबन्धदेवनाम्ना नाम्नादनु त्रिजटयैवपुराभिजातं गन्धर्वम्' इति मानम् । ब्रह्म स्वायं-

भुवेत्यत्र 'नाम्ना किशोर इति यः सुरगायकोऽभूत् स्वायम्भुवः स च मनोः परमांशयुक्तः । आवेशयुक्कमलजस्य' इति मानम् । वायु-युगित्यत्र 'अभूत्तस्यां धृतराष्ट्रनामको गन्धर्वराट् पवनावेशयुक्तः' इति मानम् । 'नक्र' इत्यत्र 'योऽसौ ग्राहः स वै सद्यः परमाश्चर्यरूप-धृक् । मुक्तो देवलशापेन हूहूर्गन्धर्वसत्तमः' इति भागवतं मानम् । 'पदे धृतत्वाद् द्रुपदाभिधेयः । 'हूहू तु नाम्ना स विरिञ्चिगायको नाम्नाऽवहो यो मरुतां तदंशयुक्' इति मानम् । विराट् इत्यत्र 'तेषां समानो वयसा विराटः अभूद् हहानाम विधातृगायकः । मरुत्सु यो विवहो नाम तस्याप्यंशेन युक्तः' इति मानम् । नन्ददर्शीत्यत्र 'पूर्वं यदा ह्यजगरो निजगार नन्दं मत्पादसंस्पर्शतः । स तदातिदिव्यो विद्याधर' इति मानम् । उग्रसेन इत्यत्र 'य उग्रसेनः सुरगायकः स जातो यदुष्वेव तथाऽभिधेयः' इति मानम् ।

**युधामन्युर्धातृयुक्तो विश्वावस्वभिधः पुरा ।**
**उत्तमौजास्त्वर्यमांशयुक्तश्चैव परावसुः ।। ७२ ।।**
**सत्यजित् प्राङ्मित्रयुक्चित्रसेनो महाबलः ।**
**अथापरे च गन्धर्वाः गोपालबलपूर्वकाः ।। ७३ ।।**
**तथोर्वश्याद्यप्सरसः सैरन्ध्री पिङ्गला पुरा ।**
**नकुलस्त्री पार्वती या सा पूर्वं तु तिलोत्तमा ।। ७४ ।।**
**कृष्णाङ्गसङ्गा गोप्यः प्राक् शबरी चाप्सरस्त्रियः ।**
**विश्वामित्रवसिष्ठादिवर्जिता ऋषयोऽखिलाः ।। ७५ ।।**
**श्रीयुक्षोडशसाहस्रस्त्रियः प्राक् वह्निपुत्रकाः ।**
**कशेरुस्त्वष्ट्रपुत्री या तासां मध्ये गुणाधिका ।। ७६ ।।**

'युधामन्यु'रित्यत्र 'उत्तमोजा' इत्यत्र च । चक्ररक्षौ तु तस्यास्तां युधामन्यूत्तमोजसौ । धात्रर्यमावेशयुतौ विश्वावसुपरावसू' इति

मानम् । सैरन्ध्रीत्यत्र 'या पिङ्गलान्यभव आत्मनि संस्थितं तं संस्मृत्य कान्तमुरगायमभूत्त्रिवक्रा' इति मानम् । नकुलस्त्रीत्यत्र 'पार्वती नकुलस्याऽसीद् भार्या पूर्वं तिलोत्तमा' इति मानम् । कृष्णाङ्गसङ्ग इत्यत्र शबरीत्यत्र च । 'गोपाङ्गना अपि पुरा वरमापिरे यत् । संस्कारतः प्रथममेव सुसङ्गमो नो भूयात्तवेति परमाप्सरसः पुरा याः' इति । 'दृष्ट्वा तमेव शबरी परमं हरिं च शापाद्वराप्सरसमेव हि तं विमोच्य' इति मानम् । विश्वामित्रवसिष्ठादीत्यादिशब्देन भृगु-मरीच्याद्यष्टच्यवनोचथ्याद्याः विवक्षिताः । 'षोडशसहस्रे'त्यत्र पुनः शतं च ग्राह्यम् । अत्र 'द्व्यष्टसहस्राणि शतं च रूपशीलोदारा अक्षताः सद्व्रतस्थाः कैश्चित्तदासन् देवगन्धर्वकन्यास्तासां प्रधानाः 'पुत्रा अग्नेः पूर्वमासंश्च तेऽथ अजानेयैः सर्वगुणैः समस्ताः । स्वभावतोऽथेन्दिरा-वेशतोऽतः तासां प्रधानस्त्वष्टपुत्री कशेरुः' इति मानम् ।

**पवमानक्रथौ द्वौ प्राक् पवमानोऽग्निजः स्मृतः ।**
**कौशिकोऽप्यग्निजः भुंन्ध्युः शुचिः प्राक् शुचिरग्निजः ।। ७७ ।।**

**तुम्बुर्वादिशतं चैवोर्वश्याद्यप्सरसस्तथा ।**
**ऋषयश्च वसिष्ठादीन् ऋते आजानजाः स्मृताः ।।७८।।**
**कार्तवीर्यादिराजभ्यो आजानेयाः शतावराः ।**
**आजानेया अनाख्याता देवा देवकुलोद्भवाः ।। ७९ ।।**

**।। तारतम्यसद्रत्नमाला ।।**

**।। अष्टाविंशकक्ष्या ।।**

**आजानेभ्यस्तु पितरः सप्तभ्योऽन्ये शतावराः ।**

।। तारतम्यसद्रत्नमाला ।।

।। एकोनत्रिंशकक्ष्या ।।

**पितृभ्यो देवगन्धर्वा अष्टोत्तरशतं विना ।। ८० ।।**

।। तारतम्यसद्रत्नमाला ।।

।। त्रिंशकक्ष्या ।।

**तेभ्यो मानुषगन्धर्वाः**

।। तारतम्यसद्रत्नमाला ।।

।। एकत्रिंशकक्ष्या ।।

**तेभ्यः स्युश्चक्रवर्तिनः ।**

।। तारतम्यसद्रत्नमाला ।।

।। द्वात्रिंशकक्ष्या ।।

**तेभ्यस्तु मानुषाः श्रेष्ठाः क्रमात् शतगुणाधमाः ।। ८१।।**

पवमानक्रथावित्यत्र कौशिक इत्यत्र शुचिरित्यत्र च । 'पावकः पवमानश्च शुचिरित्यग्नयः पुरा । वसिष्ठशापादि'ति भागवतम् मानम् । क्रथ कैशिकाख्यौ । 'भागौ तथाऽग्निसुतयोः पवमानशुध्योः' इति मानम् । उपसंहरति तुम्बुर्वादितिविराधश्चेत्यादौ 'तुम्बुरुमुखा ये च तथोर्वश्यादिका अपि । विश्वामित्रब्रह्मपुत्रानृते चाप्सरसोऽखिलाः। कार्तवीर्यादिराजेभ्यो देवभृत्याः शतावराः । आजानदेवास्ते प्रोक्ताः' इति । 'कर्मदेवगणा अष्टगन्धर्वास्तत्परे शतम् । आजानदेवाः' इति बृहद्भाष्यं मानम् । 'आजानेभ्यस्तु पितरः' इत्यादौ 'पितॄणां सप्तकं यत्तत्कर्मदेवसमं स्मृतम् । विश्वामित्रो ब्रह्मपुत्रसमो मुनिरुदाहृतः' । आचार्यः पितृणां चासौ पितृभिः सह कथ्यते । आजानेभ्यस्तु पितरस्त्वष्टभ्योऽन्ये शतावराः' इति बृहद्भाष्यं

मानम् । 'पितृभ्यो देवगन्धर्वाः' इत्यत्र 'तेभ्यो मनुष्यगन्धर्वाः' इत्यत्र च 'कर्मदेवगणा अष्टगन्धर्वाश्च परे शतम् । आजानदेवतास्तेभ्योऽन्ये पितृभ्यश्च शतावराः' । स्वमुखेनैव देवैर्यै आज्ञप्ता सर्वदा गणाः । आख्याता देवगन्धर्वा ये त्वन्यमुखगोचराः । मानुषास्ते च गन्धर्वाः तेभ्यस्त्वन्य- शतावराः' इति बृहद्भाष्यं मानम् । 'तेभ्यः स्युः चक्रवर्तिनः' इत्यादौ 'भूपा मनुष्यगन्धर्वा देवाः पितर एव च । आजानेया कर्मदेवाः तत्त्वरूपाः पुरन्दरः । शिवो विरिञ्च इत्येते क्रमाच्छतगुणोत्तराः । उक्ता अपि तदन्ये तु भूपाच्छतगुणाधमाः' इति गीतातात्पर्यं मानम्। उक्तेभ्योऽन्ये मनुष्योत्तमाः ते भूपाच्छतांशोना इति तट्टीका च मानम् ।

**श्रीविष्णुब्रह्मवाणीशा नीलो मेन्द्रा असुर्गुरुः ।**
**प्रवहः सूर्यवरुणा नारदाग्निवसिष्ठकाः ।। ८२ ।।**
**मित्रविघ्नेश्वरौ चैव पृथुर्गङ्गा च केवराः? ।**
**स्वाहावुधोषश्शनयः पुष्कराजानदेवताः ।। ८३ ।।**
**पितरो देवमनुजगन्धर्वाश्चक्रवर्तिनः ।**
**मनुष्योत्तमपर्यन्ताः प्रीयन्तां गुरवो मम ।। ८४ ।।**

तरतमभावापन्नानां देवानां क्रममादितः बुद्ध्यारोहार्थं तत्रैकदेवमादाय गुणतारतम्यश्लोकान् रचयति - विष्णुरिति । उमा नीला चेति विवेकः । असुः तैजसः प्राणः देवमनुजगन्धर्वा देवगन्धर्वो मनुष्यगन्धर्वाश्चेत्यर्थः ।

**सर्वोत्तमो विष्णुरथो रमा च**
**ब्रह्मा च वायुश्च तदीयपत्न्यौ ।**
**अन्ये च देवाः सततं प्रसन्नाः**
**हरौ सुभक्तिं मयि सन्दिशन्तु ।। ८५ ।।**

उक्तस्तोत्रस्य प्रचयागमनार्थं विष्णुतीर्थीयश्लोकमन्ते निबध्नाति । **सर्वोत्तम इति** ।

**दशप्रमतिशास्त्रसज्जलधितोऽमराणां हरेः**
**प्रवेशनसुतारतम्यजनिजातिरत्नानि च ।**
**विमृग्य विनिमृश्य सज्जनपरीक्षया व्यासराट्**
**प्रशिष्य इति विट्ठलोऽनुपमकण्ठमालां व्यधात्**
**।। ८६ ।।**

**श्रीतारतम्यसद्रत्नमाला मुक्तिसुखप्रदा ।**
**पायते तैश्च विद्वद्भिः धार्येयं हृदि सर्वदा ।। ८७ ।।**

एतत्सर्वं मध्वशास्त्रस्थमेव सङ्गृहीतम् । नाप्रामाणिकं इत्याह- दशप्रमतीति ।

दश प्रमतिशास्त्र सज्जलधितोऽमराणां हरेः
प्रवेशनसुतारतम्यजनितानि रत्नानि च ।
विमृग्य विनिमृश्य सज्जनपरीक्षायाव्यासराट्
प्रशिष्य इति विट्ठलोऽनुपकण्ठमालां व्यधात् ।।
प्रवेशनं आवेशः ।।

**तारतम्यादिसद्रत्नमाला मुक्तिसुखप्रदा ।**
**पाठात् श्रुतेश्च विद्वद्भिर्धार्येयं हृदि सर्वदा ।।**

**।। इति श्रीमद्विद्वन्मणिमुकुटमणिदिगन्तविश्रान्तमहाकीर्तिकिरण-राजिराजमानव्यासराजप्रशिष्यविट्ठलाचार्यविरचितावतार-तारतम्यरत्नमालादीपिका समाप्ता ।।**

**।। श्रीकृष्णार्पणमस्तु ।।**

**मदाचार्यमनोधाममध्वमानसमञ्चके ।**
**शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ।।**

**।। श्रीमध्वेशार्पणमस्तु ।।**

[1]विट्ठलाचार्यसम्प्रोक्ततारतम्यस्य सङ्ग्रहः । संस्तुतो नरसिंहेन यः सोऽयमिति बुध्यताम् । विद्याधीशयतीश्वरोक्तिहुतभुक् संशोधितं यन्मुहुर्देवर्ष्यादिसुतारतम्यकनकं विद्वत्कषोल्लेखितम् ।

1. ख ग कोशेपु नास्ति

# 7. अनन्तवरप्रणीतः तारतम्यपारिजातः

विट्ठलायाखिलेशाय सरमाय सवायवे ।
नृसिंहार्यवरैर्नित्यमर्चिताय नमो नमः ।। १ ।।

येऽध्यापयित्वा वेदांश्च मध्वसिद्धान्तमादिशन् ।
नृसिंहाचार्यवर्यान् तान् भूयो भूयो नमाम्यहम् ।। २ ।।

अष्टौ हि तौळवाः कृष्णचरणाम्भोरुहार्चकाः ।
श्रीपादा रघुनाथस्य तथाऽन्ये चरणार्चकाः ।। ३ ।।

अन्ये च बहुदेशस्थाः मध्वशास्त्रं हि यन्मुखात् ।
शुश्रुवुस्तं सदात्रेयगोत्रं ऋग्वेदिनं भजे ।। ४ ।।

यस्य शौचादिकं दृष्ट्वा वदन्ति यतयोऽप्यहो ।
न शक्यते तन्मनसा कर्तुमित्येव तं भजे ।। ५ ।।

व्याख्यां विंशतिवारं हि [1](सुधादेः) प्रभया स्वया ।
गुणानयाचनादींश्च न शक्तो वक्तुमप्यहम् ।। ६ ।।

सर्वतन्त्रस्वतन्त्राणां गुरूणां पादपङ्कजे ।
[2]साष्टाङ्गं x x x x x मनो मे चञ्चरीकति ।। ७ ।।

नृसिंहाचार्यकारुण्यकल्पवृक्षसमाश्रयात् ।
तारतम्यं यथाबोधं वक्ष्ये विट्ठलतुष्टये ।। ८ ।।

जीवेशयोश्च जीवानां भेदो हि जडजीवयोः ।
जडेशयोर्जडानां च प्रपञ्चो भेदपञ्चकः ।। ९ ।।

---

1. x x x
2. x x x x x

जीवशब्दोऽस्वतन्त्रस्य चेतनस्यैव वाचकः ।
ईशकोटिप्रवेशे तु भेदषट्कं प्रसज्यते ।। १० ।।

सत्यं सत्यं पुनःसत्यं शपथैश्चापि कोटिभिः ।
विष्णुमाहात्म्यलेशस्य विभक्तस्य च कोटिधा ।। ११ ।।

पुनश्चानन्तधा तस्य पुनश्चाऽपि ह्यनन्तधा ।
नैकांश[1](सम) माहात्म्याः श्रीशेषब्रह्मशङ्कराः ।। १२ ।।

समस्तगुणसम्पूर्णा सर्वदोषविवर्जिता ।
मुक्तामुक्तनियन्त्री च लक्ष्मीर्न्यूना हरेः स्मृता ।। १३ ।।

ब्रह्मवायू समौ ज्ञेयौ बलानन्दादिभिर्गुणैः ।
श्रियः कोटिगुणान्न्यूनौ तद्भार्ये तच्छताधमे ।
परशुक्लत्रयं चैतद् अन्तरङ्गं हरेः सदा ।। १४ ।।

द्विजशेषशिवा ज्ञेयाः सरस्वत्याः शतावराः ।
नीला भद्रा मित्रविन्दा कालिन्दी लक्षणा तथा ।। १५ ।।

जाम्बवत्या [2]x x x स्युः प्रद्युम्नाद् द्विदशाधिकाः ।
सौपर्णी वारुणी चैव गिरीन्द्रतनया तथा ।। १६ ।।

सर्वैः गुणैः सदा युक्ताः तत्पतिभ्यः शतावराः ।
प्रायः समौ तथा शक्रकामौ ताभ्यः शतावराः ।। १७ ।।

विशेषवाक्यतो ज्ञेयः विशेषोऽत्र सनातनः ।
ताभ्यां प्राणो दश ततो [3]दक्षश्शची रतिः ।। १८ ।।

---

1. x x
2. x x x
3. तुरीयपादे अक्षराणि न्यूनानि

# 7. अनन्तवरप्रणीतः तारतम्यपारिजातः

विठ्ठलायाखिलेशाय सरमाय सवायवे ।
नृसिंहार्यवरैर्नित्यमर्चिताय नमो नमः ।। १ ।।

येऽध्यापयित्वा वेदांश्च मध्वसिद्धान्तमादिशन् ।
नृसिंहाचार्यवर्यान् तान् भूयो भूयो नमाम्यहम् ।। २ ।।

अष्टौ हि तौळवाः कृष्णचरणाम्भोरुहार्चकाः ।
श्रीपादा रघुनाथस्य तथाऽन्ये चरणार्चकाः ।। ३ ।।

अन्ये च बहुदेशस्थाः मध्वशास्त्रं हि यन्मुखात् ।
शुश्रुवुस्तं सदात्रेयगोत्रं ऋग्वेदिनं भजे ।। ४ ।।

यस्य शौचादिकं दृष्ट्वा वदन्ति यतयोऽप्यहो ।
न शक्यते तन्मनसा कर्तुमित्येव तं भजे ।। ५ ।।

व्याख्यां विंशतिवारं हि [1](सुधादेः) प्रभया स्वया ।
गुणानयाचनादींश्च न शक्तो वक्तुमप्यहम् ।। ६ ।।

सर्वतन्त्रस्वतन्त्राणां गुरूणां पादपङ्कजे ।
[2]साष्टाङ्गं x x x x x मनो मे चञ्चरीकति ।। ७ ।।

नृसिंहाचार्यकारुण्यकल्पवृक्षसमाश्रयात् ।
तारतम्यं यथाबोधं वक्ष्ये विठ्ठलतुष्टये ।। ८ ।।

जीवेशयोश्च जीवानां भेदो हि जडजीवयोः ।
जडेशयोर्जडानां च प्रपञ्चो भेदपञ्चकः ।। ९ ।।

---

1. x x x
2. x x x x x

जीवशब्दोऽस्वतन्त्रस्य चेतनस्यैव वाचकः ।
ईशकोटिप्रवेशे तु भेदषट्कं प्रसज्यते ।। १० ।।

सत्यं सत्यं पुनःसत्यं शपथैश्चापि कोटिभिः ।
विष्णुमाहात्म्यलेशस्य विभक्तस्य च कोटिधा ।। ११ ।।

पुनश्चानन्तधा तस्य पुनश्चाऽपि ह्यनन्तधा ।
नैकांश[1](सम) माहात्म्याः श्रीशेषब्रह्मशङ्कराः ।। १२ ।।

समस्तगुणसम्पूर्णा सर्वदोषविवर्जिता ।
मुक्तामुक्तनियन्त्री च लक्ष्मीर्न्यूना हरेः स्मृता ।। १३ ।।

ब्रह्मवायू समौ ज्ञेयौ बलानन्दादिभिर्गुणैः ।
श्रियः कोटिगुणान्न्यूनौ तद्भार्ये तच्छताधमे ।
परशुक्लत्रयं चैतद् अन्तरङ्गं हरेः सदा ।। १४ ।।

द्विजशेषशिवा ज्ञेयाः सरस्वत्याः शतावराः ।
नीला भद्रा मित्रविन्दा कालिन्दी लक्षणा तथा ।। १५ ।।

जाम्बवत्या [2]x x x स्युः प्रद्युम्नाद् द्विदशाधिकाः ।
सौपर्णी वारुणी चैव गिरीन्द्रतनया तथा ।। १६ ।।

सर्वैः गुणैः सदा युक्ताः तत्पतिभ्यः शतावराः ।
प्रायः समौ तथा शक्रकामौ ताभ्यः शतावराः ।। १७ ।।

विशेषवाक्यतो ज्ञेयः विशेषोऽत्र सनातनः ।
ताभ्यां प्राणो दश ततो [3]दक्षश्शची रतिः ।। १८ ।।

---

1. x x
2. x x x
3. तुरीयपादे अक्षराणि न्यूनानि

गुरुर्मनुश्चानिरुद्धः षडिन्द्राद्धि शतावराः ।
ततस्तु [1](प्रवहो) ज्ञेयः तेभ्यः पञ्चगुणाधमः ।। १९ ।।

मानवी यम(चन्द्रा)र्काः प्रवहाद् द्विगुणाधमाः ।
वरुणश्चन्द्रतो ज्ञेयः पादपादार्धतोऽधमः ।। २० ।।

नारदो वरुणान्नीचः भृगोरत्युत्तमः स्मृतः ।
अग्निर्भृगुः प्रसूतिश्च त्रयो दक्षाच्छताधमाः ।। २१ ।।

विश्वामित्रो वसिष्ठश्च मरीचिः पुलहः क्रतुः ।
पुलस्त्याङ्गीरसौ (चा)त्रिः वैवस्वतमनुस्तथा ।। २२ ।।

नव वन्ह्यवरा ज्ञेयाः, निर्ऋतिः प्रावही तथा ।
मित्रतारे च चत्वारो [2]---------- स्मृताः ।। २३ ।।

वित्तपो विघ्नपश्चैव विष्वक्सेनोऽश्विनौ तथा ।
षडशीत्युक्तशेषास्तु शतस्था मित्रतोऽवराः ।। २४ ।।

प्रधानवायुर्मरुतो [3](रुद्राश्च) वसवो गुरुः ।
विश्वेदेवाः तथाऽऽदित्याः पितॄणां पतयस्त्रयः ।। २५ ।।

अश्विनावृभवो द्यावापृथिव्यौ सोमपायिनः ।
इति तत्त्वप्रदीपे तु शतस्था हि निरूपिताः ।। २६ ।।

विष्णुपर्जन्यमित्रेन्द्रविवस्वद्वरुणान् विना ।
षडादित्या त्रिनयनं विना रुद्रास्तथा दश ।। २७ ।।

---

1. x x x
2. x x x
3. x x x

विनाग्नि च सप्त प्राणं x x x च प्रवहं विना ।
सप्तचत्वारिंशदपि मरुतो [1]x x x x x x ।। २८ ।।

विश्वेदेवा दश द्यावापृथिव्यौ पितृपास्त्रयः ।
? पितृराजानमत्वेन ज्ञेया एते विवक्षिताः ।। २९ ।।

ततश्च नवोन्मुक्ताः च्यवनौचथ्यसञ्ज्ञकौ ।
कार्तवीर्यः पृथुश्चैव दौष्यन्तिर्भरतस्तथा ।। ३० ।।

शशबिन्दुश्च मान्धाता ककुस्थाद्यास्तथाऽपरे ।
सर्वे ते विष्णुनाऽऽविष्टाः विष्णोर्भिन्नास्तथैव च ।। ३१ ।।

शतावराश्च देवेभ्यः कर्मदेवा इतीरिताः ।
बल्याद्या अन्तरा प्राप्ताः देवताः कर्मदेवताः ।। ३२ ।।

पितृणां सप्तकं यत्तत् कर्मदेवसमं स्मृतम् ।
गङ्गापर्जन्यसञ्ज्ञे च रोहिणी शामला विराट् ।। ३३ ।।

पावकात् तु समानाः स्युः स्वाहायाः द्विगुणाधिकाः ।
केचित् पर्जन्यतो नीचाः तेभ्यः स्वः समप्रोक्तः ।। ३४ ।।

[2]x x x x x x तस्मान्न्यूना ह्युषा स्मृता ।
उषसः स्वाहा [3]x x x x तस्मा(न्यू)नो (हि) (पु)ष्करः ।
ततश्च तुम्बुरुमुख्याः ऋषयश्चोर्वशीमुखाः ।। ३५ ।।

अनाख्याताः देवतास्तु जाता देवकुले च याः ।
आजानदेवतास्ताश्च कर्मजेभ्यः शतावराः ।। ३६ ।।

---

1. x x x x x
2. x x x
3. x x x

आजानजेभ्यस्तु पितरः सप्तभ्योऽन्ये शतावराः ।
स्वमुखेनैव देवैर्ये आज्ञाप्याः सर्वदा गणाः ।। ३७ ।।

आजानाः देवगन्धर्वा ये त्वन्यमुखगोचराः ।
मानुषास्ते च गन्धर्वाः बिज्ञेयाश्चक्रवर्तिनः ।। ३८ ।।

तदन्ये मानुषाः श्रेष्ठाः क्रमाच्छतगुणाधमाः ।
ज्ञानानन्दस्वरूपास्ते सर्वदोषविवर्जिताः ।। ३९ ।।

क्रियासु करुणां नित्यं मयि तेभ्यो नमो नमः ।
बहुधोक्तिविरुद्धत्वं निर्णये त्वपहस्तितम् ।। ४० ।।

नृसिंहाचार्यवर्याणां अनन्ताख्येन सूनुना ।
उपान्तेन चतुर्थेन तारतम्यं शुभं हरेः ।
देवतामुनिमुख्यानां उक्तं प्रीत्यै गुरोस्तथा ।। ४१ ।।

संशयाज्ञानमोहादि [1](विनश्येद् यत्कृपाबलात्) ।
तेषां गुरूणां सत्सङ्गः कालेऽनन्तेऽपि मे भवेत् ।। ४२ ।।

तेषां सत्सङ्गतिर्भूयात् जन्मजन्मान्तरेष्वपि ।
गुरुशुश्रूषादेश्च घटना जन्मजन्मान्तरेऽपि नः ।। ४३ ।।

**।। इति श्रीनिखिलविद्वद्वन्दितचरण**
**श्रीनृसिंहाचार्यचरणनवनलिनचञ्चरीकेण अनन्तवरनामिना**
**विरचितः तारतम्यपारिजातः समाप्तः ।।**

---

1. x x x x x x

# 8. श्री श्रीनिवासतीर्थविरचिता तारतम्यनवश्लोकीमुक्तामाला

विष्णुः श्रेष्ठस्ततोऽर्वाक् अमितगुणततेः श्रीरतो ब्रह्मवायू
कोट्यंशोनौ तदूने दशदशगुणतः शारदा भारती च ।
ताभ्यामूनाः शतांशाद् गरुडफणिमृडाः षट्स्त्रियः पञ्च हीनाः
विष्णोस्तेभ्यश्च ताभ्यो द्विगुणितमधमास्तत्स्त्रियस्तद्दशोनाः
।। १ ।।

ताभ्यो हीनौ दशांशाद् बलिरिपुमदनौ प्राण एतद्दशोनः
तस्माद्दक्षोऽनिरुद्धो रतिमनुगुरवः शक्रपत्नी दशोनाः।
एभ्यः पञ्चोन एषः प्रवह इत इनो मानवी चन्द्रधर्मौ
द्विन्यूनाः सार्धपादादथ इत उदपो नारदः किञ्चिदूनः ।। २ ।।

तस्मादस्मात् प्रसूतिर्भृगुरनलपतिः स्वल्पहीनाश्च वाप्पात्
पादोनाः किञ्चिदूना नलिनभवसुताः सप्त वैवस्वताख्यः ।
विश्वामित्रश्च तेभ्यः प्रवहगुरुगृहे मित्ररक्षोधिनाथौ
स्वल्पोनावग्नितश्च द्विगुणितमधमाः किञ्चिदूनाश्च तेभ्यः
।। ३ ।।

विष्वक्सेनोऽश्विनौ तौ गणपतिधनपावुक्तशेषाः शतस्था
देवाश्चैतेभ्य ऊनास्तदवरमनवश्च्यावनोचथ्यपूर्वाः ।
विप्राश्चाशीतिसङ्ख्याः सनमुखयतयः कार्तवीर्यादिराजा
गन्धर्वाश्चाष्टसङ्ख्याः पितर इह तथा सप्त मध्यात्तदेवाः
।। ४ ।।

बल्याद्याः पावकाद्या जयविजयमुखा द्वारपाश्चित्रगुप्त -
श्चोर्वश्याद्याः मरीचिश्चरणपतिमुखाः धूममार्गादिदेवाः ।

अन्येऽप्येवं प्रसिद्धस्वपदमधिगता उक्तशिष्टाश्च देवाः
तेभ्यः किञ्चिद् विहीना द्विगुणितमधमा मित्रतः सूर्यपत्नी
।। ५ ।।

गङ्गा पर्जन्य एवं शशियमदयिते सा विराट् कूर्ममुख्या
एभ्यः किञ्चिद् विहीना अनधिगतपदाः शिष्टदेवाश्च सर्वे ।
तेभ्यः किञ्चिद् विहीनाऽनलपतिमहिला गङ्गया व्यंशहीना
तस्याः किञ्चिद् विहीनः सलिलपतिबुधः किञ्चिदूनाश्विभार्या
।। ६ ।।

तस्मादेपाऽग्निपत्न्या दशगुणमधमा भूमिमानी शनिर्वे
केचिन्न्यूनोऽत एषः शनित इह तथा पुष्करः कर्मपोऽपि ।
किञ्चिन्न्यूनोऽप्युषस्तो दशगुणमधमः कर्मजेभ्यः कलाभ्यः
आजानेयाः शतोनास्तत अध ऋषयो ये प्रतीकावलम्बाः ।।७।।

तद्विप्रेभ्यः शताधश्चिरपितृनिकरा देवगन्धर्वसङ्घा
स्तेभ्यस्तावद् द्विनीचाः शतगुणमवरा मर्त्यगन्धर्वसञ्ज्ञाः ।
तेभ्यो भूचक्रपालाः शतगुणमधमाः भूमिपेभ्यो मनुष्या-
वर्णाचाराश्रमेताः शतगुणमधमा विष्णुभक्त्युच्चयेताः ।। ८ ।।

एकानन्दादिरूपप्रमितगणयुना उत्तमा ये मनुष्या-
स्तेभ्यो हीनाः सचित्ताः पशुविहगमुखा जङ्गमा चित्तहीनाः ।
तेभ्योऽधस्तात् सुखाद्यैर्महितगुणगणैः स्थावरास्तैरुपास्यं
वन्दे नारायणं तं सकलसुरगणान् तद्गुरून् मद्गुरूंश्च ।। ९ ।।

ध्रियतां श्रीनिवासेन निर्मिता मुक्तिकाङ्क्षिणा ।
तारतम्यनवश्लोकीमुक्तामाला बुधैर्हृदि ।। १० ।।

**।। इति श्रीनिवासतीर्थप्रणीता**
**तारतम्यनवश्लोकीमुक्तामाला समाप्ता ।।**

# श्री वेङ्कटेशकृता तारतम्यनवश्लोकीमुक्तामालादीपिका
## विषयसूची

# 9. श्री वेङ्कटेशकृता तारतम्यनवश्लोकीमुक्तामालादीपिका

(श्रीहरिगुरुनमनम्)

**वेदव्यासपदाम्भोजे भ्रमरायितमानसान् ।**
**श्रीनिवासगुरून्नत्वा यादवाचार्यशिक्षितान् ।।**
**तच्छिष्याणां कनिष्ठेन वेङ्कटेशेन तुष्टये ।**
**गुरोरत्यल्पमतिना क्रियते भावदीपिका ।।**

रमाविरिञ्चिसरस्वती फणिपतिप्रमुखप्रगुणप्रवीणगीर्वाणमणिभिः अभिवन्द्यसदमन्दसान्द्रानन्दादिगुणवृन्दस्यन्दीन्दिरावदनेन्दीवरानन्दपूर्ण-चन्द्रायितभगवत्पादारविन्दमकरन्दास्वादनपरमराजहंसेन गरुडाद्यमर-भ्रमरनिकरनिरन्तरपरमादरास्वादितरम्यचरणारविन्दसौन्दर्यसौरभेण भगवता मध्वदेवेन स्वप्रणीतग्रन्थेषु विष्ण्वादिदेवताक्रमः कथितः । तत्सङ्ग्रहरूपा **तारतम्यनवश्लोकीमुक्तामाला** गुरुप्रणीता ।

(तारतम्यज्ञानमत्यावश्यकम् )

**तारतम्यं ततो ज्ञेयं सर्वोच्चत्वं हरेस्तथा ।**
**एतद्विना न कस्यापि विमुक्तिः स्यात् कथञ्चन ।।**

इति श्रीमद्भारततात्पर्योक्तेस्तज्ज्ञानमत्यावश्यकम् ।

।। अथ प्रथमकक्ष्या ।।

## श्री श्रीनिवासतीर्थविरचिता
## तारतम्यनवश्लोकीमुक्तामाला

**विष्णुः श्रेष्ठस्ततोऽर्वाक् अमिततगुणततेः श्रीरतो ब्रह्मवायू**
**कोट्यंशोनौ तदूने दशदशगुणतः शारदा भारती च ।**
**ताभ्यामूनाः शतांशाद् गरुडफणिमृडाः षट्स्त्रियः पञ्च हीनाः**
**विष्णोस्तेभ्यश्च ताभ्यो द्विगुणितमधमास्तस्त्रियस्तद्दशोनाः।।१।।**

**(देशकालगुणैस्ततो विष्णुः सर्वोत्तमः)**

**विष्णुः श्रेष्ठः** इति ।

रमाद्यखिलपरतन्त्रवर्गेभ्यो लोकव्यावृत्तैर्युगपदणुत्वमहत्त्वाद्यैस्तदनुवृत्तैरानन्दाद्यैश्चानन्तगुणैर्विष्णुः श्रेष्ठ उत्तमः । अत्र **न ते विष्णो जायमानो न जात** इत्यादिश्रुतीर्विजानीयात् ।

**ततो ब्रह्म सदा सर्वगुणात्मकम् ।**
**ते च सर्वे गुणाः पूर्णास्तच्छरीरः परः स्मृतः ।**
**प्रत्येकं तु गुणांस्तांस्तु सदा सर्वगुणात्मकान् ।**
**ज्ञात्वा विमुच्यते विष्णोः प्रसादान्मानुषोऽपि सन् ।।**

इत्यादिबृहद्भाष्योदाहृतस्मृतिश्च प्रमाणम्। **'तच्च ब्रह्म परं साक्षात् सर्वानन्त्ययुतं सदा'** इत्यनुव्याख्यानात् । पक्षान्तरमाह - **सर्वेति** । नास्यां श्रुतवानन्त्यमात्रं ब्रह्मलक्षणत्वेनोच्यते । किन्तु कालतो गुणतश्च। तादृशं च ब्रह्मैवेति न दोषः ।

**देशतः कालतश्चैव गुणतश्च त्रिधा ततिः ।**
**सा समस्ता हरेरेव न ह्यन्ये पूर्णसद्गुणाः ।।** इति ।

तद्व्याख्यानरूपसुधातश्च गुणानन्त्यं विष्णोरेवेति ध्येयम् ।

**।। इति प्रथमकक्ष्या ।।**

**।। अथ द्वितीयकक्ष्या ।।**

**ततोऽर्वागमितगुणततेः श्रीः।** श्रीर्महालक्ष्मीः ततः विष्णोः अमितगुणततेः भगवद्गतगुणराश्यपेक्षयाऽनन्तगुणराशितः अर्वाक् अवरा । अत्र -

**प्रकृतिस्तेन चाविष्टा तद्वशो न हरिः स्वयम् ।**
**ततोऽनन्तांशहीना च बलज्ञप्तिसुखादिभिः ।।**

इति बृहद्भाष्यं मानम् ।

> **विष्णुमाहात्म्यलेशस्य विभक्तस्य च कोटिधा ।**
> **पुनश्चानन्तधा तस्य पुनश्चापि ह्यनन्तधा ।**
> **नैकांशसममाहात्म्याः श्रीशेषब्रह्मशङ्कराः ।।**

इति वचनं च ।

**(रमाया रूपेषु न भेदलेशः)**

यद्यपि रमायाः सर्वरूपेषु साम्यमेव । जीवस्यापि वायोः 'इत्थमेव निहितम्' इत्युक्तेः, '**पूर्णज्ञानौजसोस्ते गुरुतमवपुषोः**' इत्याद्युक्तेश्च यदा साम्यं किमुत '**नाहं पुत्रतयाऽरुदम् । अनादिकालसम्बन्धात्**' इत्युक्तरीत्या नित्यमुक्तायास्तथाऽपि -

> **वेदाभिमानिनी सैव या विष्णोर्दूरतः स्थिता ।**
> **यज्ञाख्या सैव विष्णोस्तु या तूरस्थलमाश्रिता ।।**

इत्याद्यभिधाय '**विशिष्टा दक्षिणा सुखे**' इत्येकादशस्कन्धतात्पर्ये भगवत्सामीप्यातिशयक्रमेण तद्विशिष्टसुखाभिधानम्। तद्व्यक्तं विशिष्टं सुखं रूपांतरेष्वप्यनुसन्धीयत एवेत्यभिप्रायम्। दक्षिणागतसुखस्य रूपान्तरेष्वप्यनुसन्धाने 'विशिष्टा दक्षिणा' इति विशिष्योक्तिरयुक्तेति चेन्न । यथा हस्ताद्यंशगतसुखादेः पादादावनुसन्धानेऽपि 'हस्ते मे सुखम्' इत्यादिविशेषव्यवहारः सुखादिव्यक्तिस्थानत्वादुपपद्यते । तथा सर्वरूपेषु विशिष्टसुखानुसन्धानेऽपि भगवत्प्रीतियोगविशेषवत्त्वेन विशिष्टसुखव्यक्तिस्थानत्वाद् विशिष्योक्तिर्युज्यते ।

**(न सर्वरमारूपाणां कालविशेषे दक्षिणात्वं किन्तु प्रतिनियतानि दक्षिणारूपाणि)**

अन्ये तु न हि दक्षिणारूपं प्रतिनियतं वर्तते । किं तु सर्वाण्यपि रूपाण्यर्धनारीत्वेनातिसंश्लेषदशायां दक्षिणानामकानीति सर्वरूपेष्वपि सुखविशेषव्यक्तेरवस्थाविशेषे विद्यमानत्वात् न तारतम्यमिति मन्यन्ते।

तन्न । **इनो विष्णुः स दक्षभागे स्थितः सदा** इत्यैतरेयभाष्ये विष्णोः सदा दक्षिणभागस्थित्युक्तेर्न सर्वरूपाणां कालविशेषे दक्षिणात्वं, किं तु प्रतिनियतान्येव दक्षिणारूपाणीति बोद्धव्यम्।

**(न लक्ष्मीज्ञानस्य वृद्धिह्रासौ। किन्तु भगवदुपदेशादिना स्पष्टताविशेष एव)**

तथा '**नवनवसुविशेषोपलम्भेन**' इत्यादिपूर्वाचार्यवचनेन रमाया ज्ञानाभिवृद्ध्यंगीकारे योगप्रभावलब्धातिशयं योगिज्ञानमिति लक्षणं तत्रातिव्याप्तं स्यात्।अत एव '**यस्मात् ब्रह्मेन्द्ररुद्रादिदेवतानां श्रियोऽपि च ज्ञानस्फूर्तिः**' इति ईशावास्यभाष्योक्तेरपि '**ज्ञानस्फूर्तिर्ज्ञातव्यार्थ-प्रतिभा श्रियस्तु सर्वदा विद्यत**' इति विवरणं कृतम् । '**जानन्त्या अपि देव्या लोकानुग्रहार्थं विशेषज्ञानार्थं च पृष्ट आह**' इत्यैतरेयभाष्यमपि अज्ञानुग्रहार्थं ज्ञानिलोकस्य विशेषज्ञानार्थं चेति सावकाशम् । स्वस्य विशेषज्ञानार्थमित्यभ्युपगमे अनादिसिद्धभगवदनुग्रहात्पूर्वावगतगुणेष्वेव 'लक्ष्मीरक्षीणदीक्षा' इत्यादरातिशयेन स्पष्टत्वास्पष्टत्वादिना विषयी-करणमात्रं न वृद्धिरस्तीति ज्ञेयम् ।

अन्ये तु, **कादाचित्कविशेषस्तु नैव तेषां निषिध्यत** इति भाष्ये **अशुभाभावजोन्नाहो महाधीकारिणामपि । अशुभे कृते न भवति** इति पञ्चमस्कन्धतात्पर्ये चोक्तरीत्या मुक्तजीवानां समुद्रतरलोपमा वृद्धि-रिव लक्ष्मीज्ञानादिगुणेषु वृद्धिरस्तीत्याहुः। **मुक्तानां तु तदन्येषां समु-द्रतरलोपमा** इति ज्ञानपादीयानुव्याख्याने विरिंचान्येषां देवानामेव तद्विधानादसदेतत् ।

**।। इति द्वितीयाकक्ष्या ।।**

### ।। अथ तृतीयाकक्ष्या ।।

**(रमया ब्रह्मवायू कोट्यंशोनौ)**

**अतो ब्रह्मवायू कोट्यंशोनौ** । अतो महालक्ष्याः सकाशाद् विरिञ्चसमीरणौ कोट्यंशोनौ । लक्ष्मीगुणानां कोटिधा विभक्तानां मध्ये य एकोंशस्तद्युक्तत्वेन न्यूनावित्यर्थः ।

**विष्णोः प्रियत्वे तद्भक्तौ तज्ज्ञाने च श्रियश्च ये ।**
**मुक्ता अप्यवरा नित्यं सर्वे कोटिगुणेन च ।।**

इति बृहद्भाष्यम् । तथा '**देवता सर्वविद्यानाम्**' इति पूर्वोक्तवाक्योक्तलक्ष्मीनारायणौ गृहीत्वा '**ब्रह्मवायू गिरौ वीन्द्रशेषरुद्राश्च तत्स्त्रियः**' इत्यादिना देवान्निर्दिश्य '**अनन्तकोटिशतकदशार्धाद्यंशतः क्रमात्**' इत्यादिना ऋग्भाष्ये लक्ष्म्या अनन्तगुणन्यूनत्वस्य ब्रह्मणः कोटिगुणन्यूनत्वस्य चोक्ते ऋग्भाष्यमपि मानम्।

**(ब्रह्मसमीरणाभ्यां श्रियः सहस्रगुणाधिकत्वप्रतिपादकप्रमाणानामाशयाविष्करणम्)**

ननु **ते ये शतं** विरिञ्चा एतावती श्रीर्भक्त्या भवतीति दशमतात्पर्ये '**न समो ब्रह्मणः कश्चिन्मुक्तावपि कथञ्चन । ततः सहस्रगुणिता श्रीः**' इति गीतातात्पर्ये च '**श्रीस्तथा वायोः सहस्रगुणिता गुणैः**' इति भारततात्पर्यनिर्णये च शतसहस्रावरत्वयोः प्रतीतेः कथं कोट्यंशोनत्वमिति चेत् सत्यम् । कोट्युक्तेः बहुप्रमाणगतत्वेन बहुत्वेनाधिकसङ्ख्यावाचिशब्दस्य न्यूनसङ्ख्यावाचित्वस्य क्वाप्यदर्शनेन निरवकाशत्वात् । शतोक्तेश्चैकत्वेन सहस्रोक्तेरनेकत्वेऽपि '**शब्दः शतं दशसहस्रमिति स्म यस्मात् तस्मान्न हीनवचन**' इत्युक्तन्यायेन अधिकसङ्ख्यावाचित्वेन सावकाशत्वेन दुर्बलत्वाद् दुर्बलपरित्यागेन प्रबलकोटिगुणत्वमेवाभ्युपेयम् ।

**।। इति तृतीयकक्ष्या ।।**

**।। अथ चतुर्थकक्ष्या ।।**

**(ब्रह्मवायुभ्यां सरस्वतीभारत्यौ शतगुणन्यूने)**

**तदूने दशदशगुणतः शारदा भारती च।** सरस्वतीभारत्यौ 'दश-दशगुणतः' शतगुणतः ताभ्यां ब्रह्मवायुभ्यामूने । ब्रह्मवायुगतानां गुणानां शतधा विभक्तानां मध्ये य एकोंशस्तद्युक्तत्वेन न्यूने इत्यर्थः। अत्र **शिवादाशा तथैवास्या मुख्यवायुःशतोत्तरः** इति छांदोग्यभाष्यं मानम्।

**ब्रह्मवायू च तद्भार्ये वीन्द्रशेषौ च तत् स्त्रियौ ।**
**शिवस्तद्दयिता शक्रकामौ तद्दयितादयः ।**
**सर्वे सुराः क्रमेणैव विष्णोर्जाता अबाख्यकाः ।।**
**ज्ञानानन्दबलाद्येषु विष्णुभक्तौ च सर्वशः ।**
**हीना शतगुणेनैव क्रमेणानेन ते मताः ।।**

इति ऐतरेयभाष्योदाहृततत्वसारवाक्यं चात्र मानम्।

**।। इति चतुर्थी कक्ष्या ।।**

**।। अथ पञ्चमकक्ष्या ।।**

**(सरस्वतीभारतीभ्यां शतांशन्यूनाः द्विजफणिपमृडाः)**

**'ताभ्यामूनाः शतांशाद् गरुडफणिमृडाः'** । गरुडशेषरुद्रास्ताभ्यां सरस्वती भारतीभ्यां ज्ञानानन्दाद्यखिलगुणेषु शतांशात् सरस्वत्यादि-गतगुणानां शतधा विभक्तानां मध्ये य एकोंशस्तद्युक्तत्वेन ऊनाः न्यूनाः । **'शेषः सदाशिवश्चोर्ध्व'** इत्याद्याभिधाय **'पूर्वोक्तैश्च गुणैः सर्वैस्ताभ्यः शतगुणावराः'** इति बृहद्भाष्यम् ऐतरेयभाष्यगत-प्रागुदाहृततत्वसारवाक्यं चात्र मानम् ।

**।। इति पञ्चमी कक्ष्या ।।**

## ।। अथ षष्ठकक्ष्या ।।

**(नीलाद्याः षट्स्त्रियः गरुडादिभ्यः पञ्चहीनाः)**

**षट्स्त्रियः पञ्चहीनाः विष्णोस्तेभ्यश्च ।**

नीला भद्रा मित्रविन्दा कालिन्दी लक्षणा जाम्बवती चेति विष्णोः षण्महामहिष्यः तेभ्यः गरुडादिभ्यः पञ्चहीनाः । पञ्चधा विभक्तानां रुद्रादिगतगुणानां मध्ये य एकोंऽशस्तदूनत्वेन हीनाः न्यूनाः । **सर्व एते दशोत्तरा** इति छान्दोग्यभाष्ये सौपर्ण्याद्यपेक्षया दशगुणाधिकत्वमुक्तम्। तत्तु सौपर्ण्याद्यपेक्षया षण्महामहिषीणां द्विगुणाधिकत्वं ताभ्यो गरुडादीनां पञ्चगुणाधिकत्वमित्यभ्युपगम एव सिद्ध्यति । अत्र **प्रद्युम्नतो विंशगुणाधिकाः स्युः** इति भारततात्पर्ये षण्महामहिषीणां कामापेक्षया विंशगुणाधिकत्वोक्त्यनुपपत्तिरेव प्रमाणम् । तथाहि वारुण्यादीनां प्रद्युम्नापेक्षया दशगुणाधिकत्वाद् दशानां द्विगुणितानां विंशतित्वाद् द्विगुणाधिकत्वमेव लभ्यते । एवं शेषादीनां प्रद्युम्नापेक्षया दशगुणाधिकत्वाद् वारुण्याद्यपेक्षया दशगुणाधिकानां प्रद्युम्नापेक्षया शतगुणाधिकत्वात् षण्महिषीणां प्रद्युम्नतो विंशगुणाधिकत्वाद् विंशतिगुणानां पञ्चगुणितानां शतत्वाच्छेषादीनां पञ्चगुणाधिकत्वे षण्महिषीणां शेषादिभ्यः पञ्चहीनत्वं सिध्यति । एवमर्थापत्तिरेव गरुडादिभ्यो विष्णुपत्नीनां पञ्चगुणाधमत्वे मानम् । षण्महिषीषु जाम्बवती स्वरूपत एवाधिका । **तासां मध्ये जाम्बवती प्रधाना** इति भारततात्पर्यवचनात्।

**(जाम्बवत्याः इतराभ्यः कृष्णपत्नीभ्यः स्वरूपत एवाधिक्यम्)**

नन्विदमाधिक्यं विशेषावेशनिमित्तं किं न स्यादिति चेन्न ।

**यदावेशो बहुलः स्याद्रमाया रामेण तुल्या जाम्बवती प्रियत्वे ।**
**कृष्णस्यान्याः किंचिदूनाः समस्ताः ।।**

इति विशेषावेशनिबन्धनस्याधिक्यस्योपरि वक्ष्यमाणत्वात् ।

**'जाम्बवती प्रधाने'**त्युक्तमेव विव्रियत इति चेन्न । **सर्वदाऽनुप्रविष्टा** इति प्रतिदिवसं भगवदङ्गसङ्गयोग्यत्वसिध्यर्थं सार्वकालिकस्य सामान्यावेशस्यैव उक्तत्वेनासार्वकालिकविशेषावेशस्याप्रकृत्वेन पूर्वोक्ताधिक्यस्य विशेषावेशनिबन्धनत्वाभावात् । अतः 'तासां मध्ये जाम्बवती प्रधाना' इति पूर्वोक्ताधिक्यं स्वरूपनिबन्धनम् । **'यदावेशो बहुलः स्यात्'** इत्युत्तरोक्ताधिक्यं तु विशेषनिबन्धनमिति ज्ञेयम् ।

**।। इति षष्ठकक्ष्या ।।**

**।। अथ सप्तमकक्ष्या ।।**

**(षण्महिषीभ्यः सौपर्ण्याद्याः द्विगुणाधमाः)**

**ताभ्यो द्विगुणितमधमास्तत्स्त्रियस्तद्दशोनाः** । तेषां गरुडादीनां स्त्रियः सौपर्ण्याद्याः ताभ्यः षण्महिषीभ्यः द्विगुणाधमाः । पूर्वोक्तार्थापत्तेः । तेभ्यो गरुडादिभ्यो दशोनाः । दशधा विभक्तानां गरुडादिगुणानां मध्ये य एकोंऽशस्तद्युक्तत्वेन ऊनाः न्यूना इत्यर्थः । **सर्वे ह्येते दशोत्तरा** इति छांदोग्यभाष्यं **तद्देव्यस्तद्दशांशाः स्युस्ततस्त्विन्द्रादयो मताः** इति तृतीयस्कन्धतात्पर्योक्तिश्चात्र मानम् । ननु -

**(रुद्रभारतीवायूनां नानन्तांशन्यूनत्वम्)**

**उमा यावदनन्तांशान् पूर्वदृष्टेभ्य एव तु ।**
**विशेषान् वासुदेवस्य पश्चादुक्ता विचक्षते ।।**

इत्यनुव्याख्यानोदाहृतश्रुतौ रुद्रभारतीवायूनामनन्ताशन्यूनत्वाभिधानात् कथं शतगुणतारतम्यमिति चेन्न। स्फुटतारतम्याभिप्रायेण अनन्तगुणतारतम्योपेता इत्युच्यते । यथोक्तं तैत्तिरीयभाष्ये **अनन्तगुणितास्तथा । परिमाणे शतगुणेऽप्यानन्दस्फुटतावशात्** इति । **उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटाः** इति सामान्यतः सर्वगुणानां स्फुटत्वोक्तेश्च । **परिमाणे** अणुपरिमाणे ।**अपिशब्दात्** समान इति गृह्यते । सर्वेषां

।। अथ षष्ठकक्ष्या ।।

**(नीलाद्याः षट्स्त्रियः गरुडादिभ्यः पञ्चहीनाः)**

**षट्स्त्रियः पञ्चहीनाः विष्णोस्तेभ्यश्च ।**

नीला भद्रा मित्रविन्दा 'कालिन्दी लक्षणा जाम्बवती चेति विष्णोः षण्महामहिष्यः तेभ्यः गरुडादिभ्यः पञ्चहीनाः । पञ्चधा विभक्तानां रुद्रादिगतगुणानां मध्ये य एकोंऽशस्तदूनत्वेन हीनाः न्यूनाः । **सर्व एते दशोत्तरा** इति छान्दोग्यभाष्ये सौपर्ण्याद्यपेक्षया दशगुणाधिकत्वमुक्तम्। तत्तु सौपर्ण्याद्यपेक्षया षण्महामहिषीणां द्विगुणाधिकत्वं ताभ्यो गरुडादीनां पञ्चगुणाधिकत्वमित्यभ्युपगम एव सिद्ध्यति । अत्र **प्रद्युम्नतो विंशगुणाधिकाः स्युः** इति भारततात्पर्ये षण्महामहिषीणां कामापेक्षया विंशगुणाधिकत्वोक्त्यनुपपत्तिरेव प्रमाणम् । तथाहि वारुण्यादीनां प्रद्युम्नापेक्षया दशगुणाधिकत्वाद् दशानां द्विगुणितानां विंशतित्वाद् द्विगुणाधिकत्वमेव लभ्यते । एवं शेषादीनां प्रद्युम्नापेक्षया दशगुणाधिकत्वाद् वारुण्याद्यपेक्षया दशगुणाधिकानां प्रद्युम्नापेक्षया शतगुणाधिकत्वात् षण्महिषीणां प्रद्युम्नतो विंशगुणाधिकत्वाद् विंशतिगुणानां पञ्चगुणितानां शतत्वाच्छेषादीनां पञ्चगुणाधिकत्वे षण्महिषीणां शेषादिभ्यः पञ्चहीनत्वं सिध्यति । एवमर्थापत्तिरेव गरुडादिभ्यो विष्णुपत्नीनां पञ्चगुणाधमत्वे मानम् । षण्महिषीषु जाम्बवती स्वरूपत एवाधिका । **तासां मध्ये जाम्बवती प्रधाना** इति भारततात्पर्यवचनात्।

**(जाम्बवत्याः इतराभ्यः कृष्णपत्नीभ्यः स्वरूपत एवाधिक्यम्)**

नन्विदमाधिक्यं विशेषावेशनिमित्तं किं न स्यादिति चेन्न ।

**यदावेशो बहुलः स्याद्रमाया रामेण तुल्या जाम्बवती प्रियत्वे ।**
**कृष्णस्यान्याः किंचिदूनाः समस्ताः ।।**

इति विशेषावेशनिबन्धनस्याधिक्यस्योपरि वक्ष्यमाणत्वात् ।

**'जाम्बवती प्रधाने'**त्युक्तमेव विव्रियत इति चेन्न । **सर्वदाऽनुप्रविष्टा** इति प्रतिदिवसं भगवदङ्गसङ्गयोग्यत्वसिध्यर्थं सार्वकालिकस्य सामान्यावेशस्यैव उक्तत्वेनासार्वकालिकविशेषावेशस्याप्रकृत्वेन पूर्वोक्ताधिक्यस्य विशेषावेशनिबन्धनत्वाभावात् । अतः 'तासां मध्ये जाम्बवती प्रधाना' इति पूर्वोक्ताधिक्यं स्वरूपनिबन्धनम् । **'यदावेशो बहुलः स्यात्'** इत्युत्तरोक्ताधिक्यं तु विशेषनिबन्धनमिति ज्ञेयम् ।

**।। इति षष्ठकक्ष्या ।।**

**।। अथ सप्तमकक्ष्या ।।**

**(षण्महिषीभ्यः सौपर्ण्याद्याः द्विगुणाधमाः)**

**ताभ्यो द्विगुणितमधमास्तत्स्त्रियस्तद्दशोनाः** । तेषां गरुडादीनां स्त्रियः सौपर्ण्याद्याः ताभ्यः षण्महिषीभ्यः द्विगुणाधमाः । पूर्वोक्तार्थापत्तेः । तेभ्यो गरुडादिभ्यो दशोनाः । दशधा विभक्तानां गरुडादिगुणानां मध्ये य एकोंऽशस्तद्युक्तत्वेन ऊनाः न्यूना इत्यर्थः । **सर्वे ह्येते दशोत्तरा** इति छांदोग्यभाष्यं **तद्देव्यस्तद्दशांशाः स्युस्ततस्त्विन्द्रादयो मताः** इति तृतीयस्कन्धतात्पर्योक्तिश्चात्र मानम् । ननु -

**(रुद्रभारतीवायूनां नानन्तांशन्यूनत्वम्)**

**उमा यावदनन्तांशान् पूर्वदृष्टेभ्य एव तु ।**
**विशेषान् वासुदेवस्य पश्चादुक्ता विचक्षते ।।**

इत्यनुव्याख्यानोदाहृतश्रुतौ रुद्रभारतीवायूनामनन्ताशन्यूनत्वाभिधानात् कथं शतगुणतारतम्यमिति चेन्न। स्फुटतारतम्याभिप्रायेण अनन्तगुणतारतम्योपेता इत्युच्यते । यथोक्तं तैत्तिरीयभाष्ये **अनन्तगुणितास्तथा । परिमाणे शतगुणेऽप्यानन्दस्फुटतावशात्** इति । **उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटाः** इति सामान्यतः सर्वगुणानां स्फुटत्वोक्तेश्च । **परिमाणे** अणुपरिमाणे ।**अपि**शब्दात् समान इति गृह्यते । सर्वेषां

जीवानामणुपरिमाणे समाने, स्फुटतावशात् आनन्दे, अपिशब्दः अत्राप्यनुवर्तते । तेन ज्ञानाद्यखिलगुणा गृह्यन्ते । तथाचानन्दादौ सकलगुणैः शतगुणे सति स्फुटतावशात्सर्वे गुणाः सहस्रगुणिताः अनन्तगुणिताश्च भवन्तीति तदर्थः । समपरिमाणानां स्फुटत्वाधिकं कैमुत्येनोपपादयति **यथा दीपाच्छतगुणाप्यग्निज्वाला न दीपवत्** इति । यथा अधिकपरिमाणे इन्धनज्वालापेक्षयाऽल्पपरिमाणस्यापि दीपस्याधिकप्रकाशतालक्षणं स्फुटत्वं, तथा समपरिमाणजीवानामप्यानन्दस्पष्टताधिक्यं किं वाच्यमिति हृदयम् । तथा च ज्ञानादिसकलगुणेषु शतांशन्यूनत्वमेव । ऐतरेयभाष्योदाहृततत्वसारतत्वसंहितावाक्याभ्याम् अनुव्याख्यानोक्तानन्ताशोनत्वकथनं तु स्पष्टत्वापेक्षयाङ्गीकार्यमिति सम्प्रदायः ।

अन्ये तु, आनन्दादिभिः शतावरत्वं ज्ञानविषये त्वनन्तांशन्यूनत्वमिति वर्णयन्ति । तदसत् । सरस्वत्याद्यपेक्षया ब्रह्मादिज्ञानमनन्तगुणाधिकं तदानन्दादेः शतगुणत्वमित्यङ्गीकारे -

**स्वयोग्यभगवद्दृष्टेः सर्वैर्मुक्तिरवाप्यते ।**
**पुनर्ज्ञानान्तराधिक्यात् सुखाधिक्यं हि मोक्षगम् ।।**

इति बृहद्भाष्ये ज्योतिर्ब्राह्मणे ज्ञानाधिक्यात् सुखाधिक्यमुक्तम् ।

**युक्तं च साधनाधिक्यात् साध्याधिक्यं सुरादिषु ।**
**नाऽधिक्यं यदि साध्ये स्यात् प्रयत्नः साधने कुतः ।।**

इत्यनुव्याख्याने ज्ञानसुखाख्यसाधनफलयोः साम्यमुक्तम् । **यावत्सेवा परे तत्त्वे तावत्सुखविशेषता** इति स्मृतौ च सेवापदोक्तज्ञानविशेषानुसारेण सुखविशेषतेति स्वार्थे तल् सुखविशेष इति ज्ञानसुखयोः समपरिमाणत्वमुक्तमिति बहुप्रमाणविरोधात् । तस्मात् स्फुटत्वाभिप्रायकमनुव्याख्यानम् इत्येव साधु ।

**यथाऽऽनन्दे तथा ज्ञाने विष्णुभक्तौ बलादिके ।**
**गुणैः सर्वैः शतगुणाः क्रमेणोक्तेन तेऽखिलाः ।।**

इति तैत्तिरीयभाष्ये सर्वगुणेष्वपि शतांशन्यूनत्वं कण्ठतोऽभिधाय, '**अथवा सहस्रगुणिता अनन्तगुणितास्तथा**' इत्यनन्तांशोनत्वस्य गत्यभिधानाच्चायमेव पक्षो महद्भिः शिरसाऽदरणीयः । तस्माद् ब्रह्मवाय्वपेक्षया सरस्वतीभारत्योस्तदपेक्षया गरुडादीनां सर्वगुणेषु शतांशन्यूनत्वमेवेति सिद्धम् । '**सर्वे त्वेते दशोत्तरा**' इति छान्दोग्यभाष्यात् । **तद्देव्यस्तद्दशांशाः स्युः** इति भागवततृतीयतात्पर्याच्च **उमा यावत्** इत्यस्य स्पष्टत्वाभिप्रायकत्वात् ।

ननु उमासौपर्ण्यादीनां स्वभर्त्रपेक्षया दशगुणाधमत्वे '**उमा च रुद्रश्च भारती वायुरेव च । मुक्तावुक्ताः शतगुणा**' इत्यैतरेयभाष्योदाहृततत्त्वसंहितावाक्ये उमादीनां शतगुणत्वाभिधानात् तद्विरोध इति चेन्न। उमारुद्रांशे शतशब्दस्य बहुत्वमात्रार्थत्वात् **सर्वे त्वेत** इत्यादिनिरवकाशवाक्यविरोधेन रुद्रांशे शतशब्दस्य गौणार्थत्वेऽपि सरस्वतीरुद्रांद्यंशे बाधकाभावेन मुख्यार्थस्यैव वाच्यत्वात् **सकृच्छ्रुत**शतशब्दस्योभयार्थत्वं तु **नेक्षेतोद्यन्तमादित्यम्** इत्यादाविवोपपद्यते । तत्रादित्यशब्दस्योद्यदादित्यादौ मुख्यत्वेऽपि वारिस्थे तदभावात् । वारिस्थस्य तत्प्रतिबिम्बत्वादेव । तस्मात्सौपर्ण्यादीनां स्वभर्त्रपेक्षया दशगुणाधमत्वमेवेति सिद्धम्।

**।। इति सप्तमकक्ष्या ।।**

## तारतम्यनवश्लोकीमुक्तामाला

**ताभ्यो हीनौ दशांशाद् बलिरिपुमदनौ प्राण एतद्दशोनः**
**तस्माद्दक्षोऽनिरुद्धो रतिमनुगुरवः शक्रपत्नी दशोनाः।**
**एभ्यः पञ्चोन एषः प्रवह इत इनो मानवी चन्द्रधर्मौ**
**द्विन्यूनाः सार्धपादादथ इत उदपो नारदः किञ्चिदूनः ।। २ ।।**

## तारतम्यनवश्लोकीमुक्तामाला

**।। अथ अष्टमकक्ष्या ।।**

**(सौपर्ण्यादिभ्यः दशांशहीनौ इन्द्रकामौ)**

**ताभ्यो हीनौ दशांशाद् बलिरिपुमदनौ ।** बलिरिपुरिन्द्रः । मदनः कामः । तौ ताभ्यः सौपर्ण्यादिभ्यः दशांशात् उमादिशतगुणानां दशधाविभक्तानां मध्ये य एकोंऽशस्तद् युक्तत्वेन हीनाववरौ । **सर्व एते दशोत्तरा** इति छान्दोग्यभाष्यं '**ततस्त्विन्द्रादयो मताः**' इति तृतीयस्कन्ध-तात्पर्यं चात्र मानम् ।

**शक्रकामादयश्चैव विशेषान् ब्रह्मणि स्थितान् ।**
**उमादिभिः प्रवृद्धेभ्यः शतांशानेव चक्षते ।।**

इत्यनुव्याख्याने यच्छतावरत्वमुच्यते । तत्पूर्ववत् स्फुटत्वाभिप्रायेणेति न विरोधः । '**उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटाः**' इति तैत्तिरीयभाष्ये अतीतिवचनात् स्फुटत्वस्फुटतरत्वादयो जातिभेदाः शुक्लत्वशुक्लतर-त्वादय इव सन्तीति स्फुटत्वस्यावान्तरविशेषः कथमिति शङ्कानवकाशः। तथा चेन्द्रकामयोरुमाद्यपेक्षया दशगुणाधमत्वमेवेति सिद्धम् । **प्राय इन्द्रवत् काम** इत्यनुव्याख्यानात् इन्द्रापेक्षया कामः किञ्चिदवर इति ज्ञातव्यम्।

**।। इत्यष्टमकक्ष्या ।।**

**।। अथ नवमकक्ष्या ।।**

**(इन्द्रकामाभ्यां दशोन आहङ्कारिकप्राणः)**

**प्राण एतद्दशोनः** । तैजसाहङ्कारोत्पन्नः, प्राण एताभ्यामिन्द्रका-माभ्यां दशोनः । दशधा विभक्तानामिन्द्रकामगुणानां मध्ये य एकोंऽश-स्तद्वत्त्वेन न्यून अवरः । **प्राण आहङ्कारिक एव च । इन्द्रादनन्तर** इत्यनुव्याख्यानम् अत्र मानम् । **अन्नदेवोऽनिरुद्धकः अन्ननामाऽनुना-**

**दित्वात् तैजसाहम्भवस्ततः** इति आहङ्कारिकप्राणस्यानिरुद्धादुत्तमत्वम-भिधाय 'सर्वे त्वेते दशोत्तराः' इति छान्दोग्यभाष्ये निरपवादोक्तिरेव दशधात्वे मानम् ।

**(आहङ्कारिकप्राण एव नासिक्यापरनामा )**

**तथैव नासिकातोऽभून्मुख्यवायोः सुतो मरुत् । प्राणो वायुरिति द्वेधा** इति ऐतरेयभाष्यात् 'नासिक्यं प्राणमुद्गीथमुपासाञ्चक्रिरे' इति छान्दोग्याच्च **नासाद्वारा बहिर्याति प्राणोऽहङ्कारनामवान्** इति वराह-पुराणाच्च अयमेव नासिक्य इति ज्ञेयम् ।

**।। इति नवमकक्ष्या ।।**

**।। अथ दशमकक्ष्या ।।**

**(दक्षाद्याः षट् आहङ्कारिकप्राणात् दशोनाः)**

**तस्माद्दक्षोऽनिरुद्धो रतिमनुगुरवः शक्रपत्नी दशोनाः ।**

तस्मादाहङ्कारिकप्राणात् दक्षः, 'अनिरुद्धः' कामपुत्रः । मनुः स्वायम्भुवः । गुरुः बृहस्पतिः । एते दक्षाद्याः षट् दशोनाः । दशभ्य ऊनाः । दशधा विभक्तानां प्राणगतगुणानां मध्ये य एको गुणस्तद्वत्वेन अधमाः । एवमुत्तरत्रापि । **अन्नदेवोऽनिरुद्धक** इत्युदाहृतनिरपवा-दच्छान्दोग्यभाष्यमेव मानम् । **यज्ञनामाऽनिरुद्धकः दक्षिणामानिनी देवी रतिरेव तदाश्रया** इति बृहद्भाष्येऽनिरुद्धस्य रत्याश्रितत्वोक्ते-र्मातृत्वाच्च किञ्चिदनिरुद्धाद् रतिरधिकेति ज्ञातव्यम् । अत्र समयोरप्या-धिक्याद् गुणतो वा स्फुटताधिक्यं वेति विचार्यम् ।

**।। इति दशमकक्ष्या ।।**

**।। अथ एकादशकक्ष्या ।।**

**(दक्षादिभ्यः पञ्चोनः प्रवहः)**

**एभ्यः पञ्चोन एष प्रवहः** । एष भूतवायोः प्रधानाभिमानी प्रवहः एभ्यो दक्षादिभ्यः पञ्चोनः पञ्चगुणाधमः । अत्र **अनिरुद्धोऽनिलात् पञ्चगुणक** इति छान्दोग्यभाष्यं मानम् ।

**।। इत्येकादशकक्ष्या ।।**

**।। अथ द्वादशकक्ष्या ।।**

**(प्रवहात् शतरूपासूर्यौ द्विगुणाधमौ)**

**इत इनो मानवी चन्द्रधर्मौ द्विन्यूनाः** । इनः सूर्यः । मानवी स्वायम्भुवमनुपत्नी शतरूपा । धर्मो यमः । एते इतः प्रवहवायोः द्विगुणाधमाः ।

अत्र **भूतवायोस्तथैव च द्विगुणा एव** इति छान्दोग्यभाष्ये प्रवहस्य द्विगुणाधिकत्वोक्त्या तदधमानां सूर्यादिचतुर्णां द्विगुणावरत्वस्यार्थाल्लाभात् । **सोमवच्छतरूपा** सूर्यधर्मौ यथासोम इत्यनुव्याख्यानं च मानम् । **'सोमस्य दीक्षारूपा तु शतरूपा समाश्रया'** इति बृहद्भाष्ये शतरूपायाः सोमाश्रयत्वोक्त्या सोमात्किञ्चिदाधिक्यमभ्युपेयमिन्द्रकामयोरिव ।

अत्रापि विचार्यम् । कीदृशमाधिक्यमिति । नन्वेवं चन्द्रसूर्ययोः समत्वे चन्द्रात् सूर्यस्य प्रभाधिक्यं कथमिति चेत्, इत्थम् । तन्मण्डलस्यैव इयं प्रभा न तु चन्द्रसूर्ययोः । न चाभिमानिनां प्रभातारतम्याभावे मण्डलस्य तदभिमन्यमानस्य प्रभातारतम्यमपि न युक्तमिति वाच्यम् । गङ्गाया वरुणावरत्वेऽपि वरुणाभिमन्यमानसमुद्रापेक्षया गङ्गाभिमतविष्णुपद्यां माहात्म्याधिक्याद् भगवदधिष्ठानविशेषत्वात् तेजोविशेषसन्निधानेन सूर्यमण्डले प्रभाधिक्योपपत्तेः । तच्च सन्नि-

धानं **'ज्योतिषां रविरंशुमान्' 'यद्यद् विभूतिमत्सत्वम्'** इति गीता-वाक्यादिना सिद्धम् ।

**।। इति द्वादशकक्ष्या ।।**

**।। अथ त्रयोदशकक्ष्या ।।**

**(वरुणः सूयदिः अध्यर्धोनः)**

**सार्धपादादध इत उदपः** । उदपो वरुणः इतः सूयदिः पादार्धयुतपादगुणेन नीचः । **अध्यर्धोनः स सोमत** इति छान्दोग्यभाष्यमत्र प्रमाणम् ।

**।। इति त्रयोदशकक्ष्या ।।**

**।। अथ चतुर्दशकक्ष्या ।।**

**(वरुणान्नारदः किञ्चिदूनः)**

**नारदः किञ्चिदूनः तस्मात्** । तस्मादुदपान्नारदः किञ्चिदूनः । **वरुणाग्न्यन्तरा तत्र नारद** इत्यनुव्याख्यानमत्र मानम् ।

**।। इति चतुर्दशकक्ष्या ।।**

## तारतम्यनवश्लोकीमुक्तामाला

**तस्मादस्मात् प्रसूतिर्भृगुरनलपतिः स्वल्पहीनाश्च वापात्**
**पादोनाः किञ्चिदूना नलिनभवसुताः सप्त वैवस्वताख्यः ।**
**विश्वामित्रश्च तेभ्यः प्रवहगुरुगृहे मित्ररक्षोधिनाथौ**
**स्वल्पोनावग्नितश्च द्विगुणितमधमाः किञ्चिदूनाश्च तेभ्यः**
**।। ३ ।।**

# तारतम्यनवश्लोकी मुक्तामालादीपिका

**।। अथ पञ्चदशकक्ष्या ।।**

**(नारदात् प्रसूत्यग्न्यादयः स्वल्पोनाः)**

अस्मात्प्रसूतिर्भृगुरनलपतिः स्वल्पहीनाश्च वा पात्पादोनाः । अस्मात् नारदात्प्रसूतिः दक्षभार्या । अनलकुलपतिः प्रधानाग्निः । एते प्रसूत्याद्यास्त्रयः स्वल्पहीनाः किञ्चिदवराः । वापाद्वरुणात् पादोनाः । एकस्य गुणस्य चतुर्धा विभागे कृते यश्चतुर्थांशः सपादस्तेन नीचा इत्यर्थः । अत्र **वरुणाग्न्यन्तरा तत्र नारद** इत्युदाहृतमनुव्याख्यानं मानम् । **पादोनो वरुणादग्निः** इति छान्दोग्यभाष्यं च ।

**।। इति पञ्चदशकक्ष्या ।।**

**।। अथ षोडशकक्ष्या ।।**

**(अग्न्यादिभ्यः केचन अब्जजसुताः किञ्चिदूनाः)**

**किञ्चिदूना नलिनभवसुताः सप्त वैवस्वताख्यः विश्वामित्रश्च तेभ्यः** इति । **नलिनभवसुताः - मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः वसिष्ठश्च** इति सप्त । वैवस्वताख्यो मनुः । विश्वस्य मित्रं विश्वामित्रः। इत्येते तेभ्योऽग्न्यादिभ्यः किञ्चिदूनाः किञ्चिन्नीचाः । **मित्रतन्मध्ये ब्रह्मपुत्रका** इत्यनुव्याख्यानं, **ब्रह्मपुत्रका मरीच्याद्याः मित्रतन्मध्ये मित्राग्न्योर्मध्ये परस्परसमाः मित्रादुत्तमा अग्नेरधमा** इति सुधा च ब्रह्मसुता मरीच्यादयः सप्तैवेत्यत्र मानम् । यद्यपि ब्रह्मपुत्रा इति सामान्योक्तेरन्येऽपि प्राप्नुवन्त्यथापि नारददक्षयोरग्न्युत्तमत्वेन भृगोश्चाग्निसमत्वेन अनुव्याख्याने पृथगुक्तेः सनकादीनां च शतस्थानन्तर्यस्य ग्रन्थकृता वक्ष्यमाणत्वेन तेषां मित्राग्निमध्यगतत्वानुपपत्तेर्मरीच्यादयः सप्तैवात्र ग्राह्याः। **विश्वामित्रः कसूनुवत् वैवस्वतो मनुश्च** इत्यनुव्याख्यानं

विश्वामित्रस्य वैवस्वतमनोश्च मरीच्यादिसाम्ये मानम्। **वैवस्वतो मनुश्च कसूनुवदिति** सम्बन्ध इति सुधा च। ननु **वैवस्वतो मनुश्च** इत्यनुव्याख्यानस्य वैवस्वतोमनुरश्विपश्चादश्विभ्यां अवरः, अन्ये ततोऽवराः । ततो वैवस्वतादन्ये मनवश्चातो वैवस्वतादवराः इत्युत्तरसम्बन्धेन योजनया वैवस्वतमनोरश्विपश्चात्तनत्वप्रतीतेः कथं तस्य मित्राग्निमध्यगतत्वमिति चेन्न । तथा सति वैवस्वतो मनुचेति च शब्दविरोधात् । तेन न केवलं विश्वामित्रः कसूनुवत् किन्तु वैवस्वतो मनुश्च कसूनुवदिति समुच्चयप्रतीत्या पूर्वसम्बन्धप्रतीतेः । न च अश्विपश्चात्तनत्वं पूर्वं कस्यचिदुक्तम् । येन चशब्दस्य तत्समुच्चायकतया अनुव्याख्यानस्य उत्तरत्रसम्बन्धः स्यात् ।

न च 'तारा च मित्रवदि'त्यत्रेव चशब्दस्तुशब्दार्थः स्यादिति वाच्यम्। तत्र समुच्चायकासम्भवेन तथा श्रवणेऽपि[1] प्रकृते उक्तरीत्या समुच्चायार्थकत्वसम्भवे तथा श्रवणाऽयोगात् । अश्विपश्चात्तनत्वे विशेषप्रमाणाभावाच्च । वैवस्वतोमनुश्च कसूनुवदिति सम्बन्ध इति सुधाविरोधाच्च । **प्रजापाश्च तथा देवा महाधीकारिणः स्मृता** इति पञ्चमतात्पर्ये प्रजापानां तात्विकसाम्यप्रतीतेश्च । तर्हि भवत्पक्षेऽश्विपश्चादन्ये इत्येवास्तु ततोऽवरा इति पुनरवरत्वकथनं व्यर्थमिति न शङ्क्यम् । **'तस्मादग्निः पावकाख्यः प्रथमोऽग्नेः सुतस्ततः'** इतिवदुपपत्तेः । तस्माद्भूतवायोः अग्निरुत्पन्न इत्यनेनैव पूर्तौ ततो भूतवायोरवर इति टीकाव्याख्यानात् । तस्माद्वैवस्वतो मनुः कसूवदित्येव अभ्युपेत्य वैवस्वतमनोर्मरीच्यादिसाम्यमेवेति सिद्धम् ।

ननु **'ततः सनाद्याश्च मरीचिमुख्या देवाश्च सर्वे क्रमशः प्रसूताः'** इति भारततात्पर्यनिर्णये **ततः** नासत्यदस्रयोत्पत्त्यनन्तरं **सनाद्याः** सनकाद्याः मरीचिमुख्याः सर्वे देवाश्च प्रसूता इति मरीच्यादिसप्तानाम् अश्विदेवानन्तर्यप्रतीतेः कथं विश्वामित्रादिसाम्यं अश्विन्युत्तमत्वं

1. तथाऽश्रयणेऽपि इति स्यात् ?

चेति । मैवम् । तत्र मरीचिशब्देन **प्रधानवायुजो भूतवायुर्नाम्ना मरीचिक** इति गीतातात्पर्ये **ततो वायोः सुतो मरुत्** इति षट्प्रश्नभाष्ये, मरुदिति भूतवाय्वभिमानीति तट्टीकायां चोक्तेर्भूतवायोरवान्तराभिमानी मरीचिनामा देव एव ग्राह्यः । मुख्यपदेन **तस्मादग्निः पावकाख्य** इत्यादि षट्प्रश्नभाष्ये अभिहिताः पावकादिपुष्करान्ताः सर्वे देवाश्च प्रसूता इति तात्पर्यश्लोकार्थः । मरीच्यादिसप्तर्षीणां ग्रहणे तेषां देवत्वाभावेन मरीचिमुख्या देवा इति विशेषणविशेष्यभावायोगात् । तस्मात् मरीच्यादिसप्तर्षीणामश्विदेवाधमत्वेन न तन्मानमिति सिद्धम् ।

अत्रैकर्षिरप्यग्नेरनन्तरो ज्ञेयः । **अथर्वाङ्गीरसामग्निरेकर्षिश्चाप्यथर्वणाम्** इत्युक्तः **'समुदायस्य सन्त्यन्ये च पृथक् पृथक्'** इति ऋग्भाष्ये अथर्वाङ्गिरोलक्षणभागद्वयद्रष्टृत्वमग्नेरुक्त्वा एकर्षेरथर्वाख्यभागद्रष्टृत्वोक्त्या तस्य तदानन्तर्यप्रतीतेः ।

**।। इति षोडशकक्ष्या ।।**

**।। अथ सप्तदशकक्ष्या ।।**

**(विश्वामित्रादिभ्यः प्रवहगुरुभार्ये निर्ऋतिमित्रौ च स्वल्पोनाः)**

**प्रवहगुरुगृहे मित्ररक्षोधिनाथौ स्वल्पोनावग्नितश्च द्विगुणितमधमाः** इति । प्रवहबृहस्पतिभार्ये प्रावहीतारे । मित्र आदित्यः । रक्षोधिनाथः कोणेशो निर्ऋतिः । तेभ्य इत्यनुवर्तते । तेभ्यः विश्वामित्रादिभ्यः । स्वल्पोनाः किञ्चिन्न्यूनाः । वन्हितः अग्न्यपेक्षया द्विगुणितं यथा भवति तथाऽधमाः । **पर्जन्यमित्रशिखिन** इति छान्दोग्यभाष्यमत्र मानम् । **तारा च मित्रवत्** । **निर्ऋतिर्मित्रसदृशः** । **'मित्रवत्त्वेव प्रावही परिकीर्तिता'** इत्यनुव्याख्यानं चतुर्णां साम्ये मानम् ।

**।। इति सप्तदशकक्ष्या ।।**

## तारतम्यनवश्लोकीमुक्तामाला

**विष्वक्सेनोऽश्विनौ तौ गणपतिधनपावुक्तशेषाः शतस्था**
**देवाश्चैतेभ्य ऊनास्तदवरमनवश्च्यावनोचथ्यपूर्वाः ।**
**विप्राश्चाशीतिसङ्ख्याः सनमुखयतयः कार्तवीर्यादिराजा**
**गन्धर्वाश्चाष्टसङ्ख्याः पितर इह तथा सप्त मध्यात्तदेवाः**
**।। ४ ।।**

## तारतम्यनवश्लोकीमुक्तामालादीपिका

**।। अथ अष्टादशकक्ष्या ।।**

**(मित्रादिभ्यः विष्वक्सेनादयः शेषशतस्थाश्च किञ्चिदूनाः)**

किञ्चिदूनाश्च तेभ्यः । विष्वक्सेनोऽश्विनौ तौ गणपतिधनपावुक्तशेषाः शतस्था देवाश्च । तेभ्यः मित्रादिभ्यः किञ्चिन्न्यूनाः विष्वक्सेनादयः पर्जन्यादुत्तमाः मनुभ्यश्चेषदधिकाः प्राय अन्योन्यसमा इति ज्ञेयम् । **मित्रपर्जन्यमध्यस्थावश्विनौ विघ्नवित्तपौ** । **तदन्याः शतदेवताः** । **पर्जन्यमित्रान्तराले** इत्यनुव्याख्यानं पर्जन्यमित्रान्तराले **पर्जन्यादुत्तमाः मित्राधमाः अश्विनोः समाना** इति तट्टीका सुधा चात्र मानम् । **विष्वक्सेनो वायुजः खेन तुल्य** इति भारततात्पर्यनिर्णयवाक्यं च । अश्विनोः सुग्रहत्वेऽपि उक्तशेषपदेन तु । सोमाधिकारस्तु तयोर्नैमित्तिक इति सूचनाय पृथग्ग्रहणम् । किञ्चिदाधिक्यसूचनार्थं चेत्यार्याः । **तदा भूमिः पञ्चभूतावराया** इति तात्पर्यनिर्णयोक्तेः गणपतिर्भूदिव्यपेक्षया किञ्चिदुच्चः ।

**(सोमपानार्हदेवताः शतसङ्ख्याकाः)**

सोमपानार्हदेवताः शतसङ्ख्याकास्तासूक्ताः शेषाश्चाभिधीयन्ते -

**प्रधानवायुर्वसवो रुद्रादित्या मरुद्गणाः ।**
**बृहस्पतिः ऋभुर्द्यावापृथिव्यावश्विनौ तथा ।**
**विश्वेदेवाश्च पितरः शतस्था देवता मताः ।।**

इति स्मृतौ पण्डिताचार्यैः तत्वप्रदीपे कथिताः । प्रधानवायुः 1, वसवः 8, रुद्राः 11, आदित्याः 12, मरुतः 49, विश्वेदेवाः 10, बृहस्पतिः 1, ऋभुः 1, द्यावापृथिव्यौ 2, अश्विनौ 2, पितरः 3 इति शतं सोमार्हाणाम्।

**नवकोट्यो हि देवानां तेषां मध्ये शतस्य तु ।**
**सोमाधिकारो वेदोक्तो ब्रह्मणी द्वे शताधिके ।।**

इति विभागः शतवदिति सूत्रभाष्यात् ।

**(अष्टवसवः)**

**द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषो वस्तुर्विभावसुः** इत्यष्टौ वसवः । **अथाष्टमो वसुरासीद् द्युनामा** इति निर्णयोक्तेः द्यु इत्यपरनामा एतेष्वेवाष्टमो वसुः ।

**(एकादशरुद्राः)**

**रैवतः, अजः, भवः, भीमः, वामः, उग्रः, वृषाकपिः, अजैकपात्, अहिर्बुध्न्यः, बहुरूपः, महान्** इति एकादशरुद्राः । **विष्कम्भः पत्रतापाख्यो विरूपाक्ष इति त्रयः । उक्तेष्वेतेषु रुद्रेषु नामभेदाः प्रकीर्तिताः । 'विष्कम्भो नाम रुद्राणाम्' । 'रुद्रेषु पत्रतापाख्य'** इति निर्णयोक्तेः ।

**(द्वादशादित्याः)**

**विवस्वान् अर्यमा पूषा त्वष्टाऽथ सविता भगः ।**
**धाता पर्जन्यवरुणौ मित्रः शक्र उरुक्रमः ।।**

इति द्वादशादित्याः । **'अर्यम्णंशादि चतुर्थ्विति'** बृहद्भाष्योक्तं कस्यचिदादित्यस्यांश इति नाम ।

(एकोनपञ्चाशन्मरुतः)

**प्राणोऽपानः तथा व्यान उदानश्च समानकः ।**
**नागश्च कृकलः कूर्मो देवदत्तो धनञ्जयः ।**
**प्रवहो विवहः शंयुः संवहश्च परावहः ।**
**उद्वहश्चाऽवहः शङ्कुः कालः श्वासो नलोऽनिलः ।**
**प्रतिभः कुमुदः कान्तः शुचिः श्वेतोऽमितो गुरुः ।**
**झंझाप्रवर्तकः कीलो दितिः सौम्यो कपिर्जडः ।**
**मण्डूकः सन्ततः सिद्धो रक्तः कृष्णो पिकः शुकः ।**
**यतिर्भीमो हनुः पिङ्गोऽहंप्राणः कम्पनस्तथा ।।**
**सप्तसप्तकसङ्ख्याकाः मरुतोऽमी प्रकीर्तिताः ।**

(मरुतां पुराणान्तरेषु नामान्तराणि विद्यन्ते)

चक्रगन्धर्वान्तरिक्षा इति तेषामेव नामभेदाः प्रकीर्तिताः । **'तेषां वायुसुतश्चक्र'** इति बृहद्भाष्यात् । **'त्रयोऽत्रापरनामानः श्वेतः सम्पाति-केसरी'** इति च । **'पवनगणवरांशौ श्वेतसम्पातिनौ च । केसरीति प्रवरमथ मरुत्सु'** इति तात्पर्यनिर्णयोक्तेः ।

(तत्रैकैकोऽपि मरुद्गणः सप्तसङ्घात्मकः)

एकोनपञ्चाशन्मरुत्सु सप्तगणा अन्तर्भूताः । यथोक्तम् **इन्द्रज्येष्ठा मरुद्गणा** इति ऋग्भाष्यटीकायां **सप्तसप्तका हि मरुद्गणा इति बहुवचनम्** इति । तत्रैकैको मरुद्गणः सप्तसप्तसङ्घात्मको भूमिमारभ्य ध्रुवमण्डल-पर्यन्तमस्ति । तत्र भूमिमारभ्य मेघमण्डलपर्यन्तं आवहनामकगणोऽस्ति। यथोक्तम् ।

**द्वौ शुक्लौ ज्योतिरादित्यौ नन्दो हरितगस्तथा ।**
**चित्रज्योतिः सप्त ज्योतिर्ज्योतिष्मान् स्कन्ध आवहः ।।**

इति । सप्तानां मध्ये एकस्याऽवह इति नाम । ततस्तद्गणोऽपि तन्नाम्नो-च्यते ।

**द्वितीयो गणस्तु** प्रवहाभिधो मेघादुपरि सूर्यमण्डलपर्यन्तमस्ति । **उद्वहनामा तृतीयो गणः** सूर्यादुपरि चन्द्रमण्डलपर्यन्तं तिष्ठति । **चतुर्थः संवहाभिधो** मरुद्गणश्चन्द्रादुपरि नक्षत्रमण्डलपर्यन्तमस्ति । **विवहाभिधः पञ्चमो** मरुद्गणो नक्षत्रादुपरि ग्रहमण्डलपर्यन्तं वर्तते । **परावहो नाम षष्ठो** मरुद्गणो ग्रहादुपरि सप्तर्षिमण्डलपर्यन्तं तिष्ठति । ऋषिमण्डलादुपरि ध्रुवमण्डलपर्यन्तं **सप्तमो गणो** वर्तते ।

**(आहङ्कारिकप्रवहयोरितरमरुद्भिः स्वरूपेणाऽधिक्यमस्ति ।**
**तथैव एककक्ष्योक्तेष्वपि किञ्चिदाधिक्यादिकं यथाप्रमाणमभ्युपेयम्)**

एकोनपञ्चाशन्मरुत्सु आहङ्कारिकप्रवहयोरितरमरुद्भिर्महद्भिर्गुणैः स्वरूपेण आधिक्यम् । मित्राद्यनेकव्यवधानेनोक्तत्वात् । प्राणादिपञ्चकस्य श्वेतसम्पातिकेसरिपरावहानामेककक्षोक्तत्वेऽपि पञ्चमांशेन दशमांशेन वाऽल्पाधिक्यं द्रष्टव्यम् । **मरुतश्च समाः सर्वे सप्त तेषु प्रधानका** इति श्रुतिगीतातात्पर्ये उक्तत्वात् ।

**प्राणादयः पञ्च मरुत्प्रवीराः ।**
**पवनगणवरांशौ श्वेतसम्पातिनौ च ।**
**केसरीति प्रवरमथ मरुत्सु । 'मरुद्गणोत्तमः पुरा' ।।**

इति श्रीमत्तात्पर्यनिर्णयवाक्याच्चेत्यपि द्रष्टव्यम् ।

यथोक्तं बृहद्भाष्ये -

**देवादिष्वेव सर्वेषु प्रोक्ता अपि विशेषिणः।**
**पञ्चांशतो दशांशाद्वा स्वस्वजात्यां परस्परम्** ।। इति ।

एकैकस्य गुणस्य पञ्चधा दशधा विभागे कृते यः पञ्चमो दशमो वांऽशस्तस्मादिति स्मृत्यर्थः ।

**इष्टिश्राद्धे क्रतुर्दक्षः सङ्कीर्त्यौ वैश्वदेविके ।**
**नान्दीमुखे सत्यवसू काम्यके धुरिलोचनौ ।**

**पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ ।**
**नैमित्तिके कामकालाविति सर्वत्र कीर्तयेत् ।।**

इति स्मृत्युक्ता विश्वेदेवा दश। बृहस्पतिः गुरुरेकः । **'तातोऽप्येषां शैव्यनामार्भुरग्र'** इति तात्पर्यनिर्णये । ऋभुनामैक एव । विश्वा वाजश्चापरौ तथापि साहचर्यदिकनाम्ना त्रयोऽप्युच्यन्त इत्युक्तेरेक एव ऋभुरिति गम्यते । **अग्नौ देवा विलीयन्ते । विशन्ति शिष्टा अपि हव्यवाहम्** इति श्रुत्यनुव्याख्यानाभ्यामृभुरग्नौ विलीयत इति ज्ञेयम् । पृथिव्या ऋभुसमत्वेन तस्यां देहलयायोगात् । **'ऋभवः पृथिव्याम्'** इत्यस्यां श्रुत्युक्तास्तु ऋभवो नाम ये देवाः **'सोमं प्राप्ताः सहस्रशः'** इति पुराणोक्ताः पृथिव्यपेक्षया अधमास्तत्रैव लयवन्तः सहस्रसंख्याकाः सन्ति । तपसा सोमप्राप्तावपि वेदोक्तः सोमाधिकारस्तेषां नास्ति । पितॄणां बहुत्वेऽपि सोमपानार्हास्त्रय एव ग्राह्याः । ते च सोमो यमोऽग्निश्चेति । **'हव्यवाडनलः सोमो यमश्चैवार्यमा तथा'** इत्युक्ताः। **अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः** इति गयामाहात्म्ये यमादीनां पितृदेवतात्वेन सोमपातृत्वोक्तेः । **'सोमः पितृमान् यमोऽङ्गिरस्वानग्निकव्यवाहनादयो ये पितरः'** इत्याश्वलायनगृह्यपरिशिष्टे स्नानाङ्गपितृतर्पणकथनप्रसङ्गे **'सोमाय पितृमते स्वधा नमः सोमाय पितृमते पुरोडाशं षट्कपालम्'** इत्यादौ च सोमादीनां पतित्वेन पितृमत्वस्योक्तेः। तथा **यमाय सोमं सुनुत यो न इन्दुः पितरो हृत्सु पीतः त्वं सोम पितृभिः संविदानः राज्ञो वै पूर्वपेयं तस्माद्यामीमेव पूर्वां शंसेत् त्वमग्न ईलितो जातवेद** इत्यादिवेदेऽपि यमादीनां सोमपानावगतेश्च ।

आधुनिकाः प्राज्ञास्तु - वसुरुद्रादित्यसंज्ञाः पितरः श्राद्धदेवता इति स्मृत्युक्ताः ।

**वसवः पितरो ज्ञेया रुद्रास्तत्र पितामहाः ।**
**पितुः पितामहाः प्रोक्ता आदित्या बर्हिषि स्थिताः ।।**

इत्यादौ च प्रोक्ताः वसुरुद्रादित्या इति त्रयो देवविशेषाः पितृपतय इति वर्णयन्ति । अत्र स्मृतौ पितरः पितामहा इति बहुवचनं एकपिण्ड-भागिनः पितृतदनुवर्तिनश्चापेक्ष्य । अत एव बर्हिषि स्थिता इत्यु-क्तम् । बर्हिरास्तरणं कृत्वा शुन्धन्तां पितर इत्यादि बहुवचनप्रयोगात् इति भावः ।

केचित्तु इष्टिश्राद्धे क्रतुर्दक्ष इत्याद्युक्तस्मृत्या तत्तच्छ्राद्धे द्वयोर्द्वयो-रेव विश्वेदेवत्वेऽप्यागच्छन्तु महाभागा विश्वेदेवा महाबला इति पूजा-ख्यापनार्थं यथा बहुवचनं तथा **शुन्धन्तां पितर** इति श्रुतौ **वसवः पितरो ज्ञेया** इति तदनुसारिस्मृतौ च पूज्यत्वज्ञापनार्थं बहुवचनमित्याहुः ।

द्यौश्च पृथिवी च द्यावापृथिव्यौ । दिवो द्यावेति दिव्शब्दस्य द्यावा-देशः । अत्र दिव्शब्देन **सुरेन्द्रलोकश्रीरेव शक्रदयिता त्वपरैव शच्या** इति भारततात्पर्यनिर्णयेऽभिहिता द्युलोकावान्तराभिमानिनी शक्रभार्या ग्राह्या । पृथिवीशब्देन पृथिवीभूताभिमानिनी वराहभार्या धरा देवी ग्राह्या ।

अन्ये तु, पृथिवीशब्देन द्रोणनामा वसुः **'स स्वभार्यया धरया'** इति भारततात्पर्यनिर्णयोक्ता द्रोणाख्यवसुभार्या धरादेवी ग्राह्येत्याहुः । तन्न । तथात्वे उदाहृतवाक्यसिद्धदाम्पत्याऽयोगात् । देवस्त्रीषु पति-साम्यस्य क्वाप्यभावात् । तथा चोक्तं बृहद्भाष्ये -

**देवस्त्रियो दशांशोनाः स्वपतिभ्यस्तथावराः।**
**अष्टांशोनाः प्रविज्ञेया यासां मुक्तौ सह स्थितिः ।।**

इति । दिव्शब्देन[1] भारती ग्राह्येत्यभिदधति प्राचीनाः । अश्विनौ द्वौ। अग्निषोमवदश्विनोः एकहविर्भागत्वरूपस्य देवतात्वस्यैकत्वेऽपि व्यक्त्यनेकत्वस्यापह्नवायोगात् । तस्मात् द्यावापृथिव्योश्चाश्विनोर्द्वित्वं

1. द्यावाशब्देन इति पाठेन भाव्यमिति भाति ।

पितॄणां त्रित्वं ऋभोरेकत्वमिति सिद्धम् । अग्नेः वस्वन्तस्स्थत्वेन पितृत्रयस्थत्वेन चेति रूपद्वयेन सोमपानम् । एवं प्रधानवाय्वादयः वेदोक्तसोमपानार्हाः । शतस्थाः कथिताः तत्रोक्ताः क इति चेत् ।

**(शतस्था देवताः के इति निरूपणम्)**

इत्थम् । प्रधानवायुः । अग्निनामा वसुः । प्रधानरुद्रः । विवस्वान् वरुणो मित्रः शक्र उरुक्रम इत्यादित्याः । पर्जन्यो वक्ष्यमाणश्च । एवं सति षडादित्याः । आहङ्कारिकः प्राणः प्रवह इति मरुतौ । बृहस्पतिः। सोमो यमोऽग्निरिति पितरः । इति चतुर्दश उक्ताः । एको वक्ष्यमाणः । ततश्चोक्तशेषा इत्यस्य वक्ष्यमाणशेषाश्च शतस्थाः पञ्चाशीति देवाः शेषशतस्था ज्ञेयाः । विष्वक्सेनगणपतिधनपेभ्यः सहाष्टाशीतिदेवाः मित्रादधमाः पर्जन्यादिभ्यः किञ्चिदधिका इति पर्यवस्यति ।

**।। इत्यष्टादशकक्ष्या ।।**

**।। अथ एकोनविंशकक्ष्या ।।**

**(अर्थविशेषाणामेव तत्त्वसञ्ज्ञा । नात्र तत्त्वशब्दो प्रमेयवचनः । तत्त्वशब्दवाच्याः पुरुषाव्यक्तादयः)**

एवं शतस्थपर्यन्ता एव मुख्यास्तात्विकाः । तत्वशब्दश्च **द्विविधं तत्त्वमिष्यत** इत्यादाविव न प्रमेयवचनः । तथा सति कर्मजादीनामपि ग्रहशोकादिरूपप्रमेयाभिमानित्वेन तात्विकत्वप्रसङ्गात् । अपि तु शब्दशास्त्रे वृद्ध्यादिसञ्ज्ञावत् अर्थविशेषाणां सञ्ज्ञा । तथा च तन्त्रसारे -

**पुरुषोऽव्यक्तं च महानहङ्कारो मनस्तथा ।**<br>
**दशेन्द्रियाणि शब्दाद्याः भूतेताः पञ्चविंशतिः ।**<br>
**तत्त्वाख्याः कालमाये च नियतिर्मतिरेव च ।**<br>
**विद्या कला प्रवृत्तिश्च द्वात्रिंशत्तत्त्वसङ्ग्रहः ।। इति ।**<br>
**सर्वाण्येतानि तत्वानि ।**

इति च । एवं च महदादिपञ्चविंशतितत्त्वाभिमानिनो देवास्तात्विकाः ।

(सृष्ट्यादौ देवत्वं प्राप्तास्तात्विकदेवाः)

तेषां लक्षणं तु तैत्तिरीयभाष्योक्तं - **ताभ्यश्च तात्विकाः देवाः सृष्ट्यादौ देवतां गता** इति ।आदिसृष्टिकाले देवत्वं प्राप्तास्तात्विका इति तल्लक्षणम् ।

ननु देवत्वप्राप्तिर्नाम नोत्पत्तिः । **'देवासुरनरत्वाद्या जीवानां तु निसर्गतः'** इति गीतातात्पर्येण देवत्वजातेः स्वाभाविकत्वावगमात् । नाप्यभिव्यक्तिः । ब्रह्मादीनां वाय्वादिजन्मन्येव तस्याभिव्यक्तत्वात् । ततो लक्षणस्यासम्भव इति चेत् । उच्यते । वेदे प्रसिद्धनामरूपवत्त्वं हि देवत्वम् । तत्प्राप्तिर्नाम उत्पत्तिरेव । ब्रह्मादिदेवानां तद्योग्यनामसङ्केतस्य तद्योग्यरूपस्यादिसृष्टिकाले ईश्वरेण क्रियमाणत्वात् । तथा चोक्तं सूत्रभाष्ये -

**अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।**
**ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः ।**
**वेदशब्देभ्य एवाऽदौ निर्ममे स महेश्वरः ।।** इति ।

तथा च भगवान् ब्रह्मादितात्विकानां वेदोक्तनामसङ्केतं तदुक्तरूपनिर्माणं चाऽदिसृष्टिकाल एव करोतीति तात्विकाः सृष्ट्यादौ देवत्वं प्राप्नुवन्तीति स्मृतिसिद्धम् । देवत्वं प्राप्तास्तात्विका इत्येवोक्ते कर्मजदेवेष्वतिव्याप्तिः । तेष्वपि इन्द्रादिनामरूपत्वाख्यदेवत्वप्राप्तेः सत्त्वादत आदिसृष्टिकाल इति । न हि ते तथा प्राप्नुवन्ति । किन्तु ब्रह्माण्डोत्पत्त्यनन्तरं चतुर्दशभुवनोत्पत्त्यनन्तरं च सावर्णिमन्वन्तरादौ इन्द्रादिनामरूपवत्वाख्यं देवत्वं प्राप्नुवन्ति । **सावर्णेरन्तरस्यायं भवितेन्द्रो महाबल** इति भागवताष्टमोक्तेः । पुष्करान्तानां तात्विकत्ववादे तु कश्यपसृष्टेरादौ विराट्सृष्टौ देवतां गतास्तात्त्विका इति तल्लक्षणं बोध्यम् ।

तथाचोक्तं पण्डिताचार्यैः - **तात्त्विकानथ देवान् को वैराजः पुरुषोऽसृजत्** इति ।

**( सशरीरस्य जीवस्योपकारका एकादशेन्द्रियपञ्चभूताभिमानिदेवताः कलादेवाः मुख्यप्राणमारभ्य विघ्नेशान्ताः न केवलतात्विका अपि तु कलादेवाश्च )**

तात्त्विकेभ्योऽन्ये देवाः कलादेवाः । कला नाम सशरीरस्य जीवस्य भागाः । यथोक्तं षट्प्रश्नटीकायां - **'सशरीरस्य जीवस्य भागाः कला'** इति । अत्र भागशब्देनोपकारकं विवक्षितम् । **एकादशेन्द्रियाणि पञ्चभूतानि चेति षोडशकलाः** । लिङ्गदेहस्य तदात्मकत्वात् । तत्रापि मन एवाखिलप्रधानम् । बीजे सस्नेहावयवैकदेशवत् । **'स प्राणमसृजत प्राणात् श्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनो अन्नमन्नाद् वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च' इति** षट्प्रश्नोपनिषदुक्तास्तु षोडशकलाः स्थूलदेहे अवगन्तव्याः । तेषु किञ्चिज्जीवोपकारकं किञ्चिच्छरीरोपकारकमिति सर्वथा सजीवशरीररूपविशिष्टोपकारकतया कलात्वं षट्प्रश्नभाष्यटीकायां जयार्यैरुपपादितम् । भूतानां शरीरोपादानत्वेन शरीरोपकारकत्वं तु -

**यत्किञ्चिदिह लोकेऽस्मिन् देहबद्धं विशांपतेः ।**
**सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ।।**

इति स्मृतिसिद्धम् ।

श्रद्धापदोक्ताऽऽस्तिक्यबुद्धेर्विहितवृत्तिहेतुत्वेन चक्षुरादीन्द्रियाणां प्रवृत्तावुपकरणत्वेन मनसः प्रवृत्तौ प्रधानकरणत्वेन अन्नस्य शरीरस्थितिहेतुत्वेन ऋगादिरूपाणां मन्त्राणां सम्यग्ज्ञानादिहेतुत्वेन कर्मणः पुण्यपापरूपस्य सुखादिनिमित्तत्वेन, लोकशब्दोक्तगोलकानां शरीरावयवत्वेन, देवदत्तादिनाम्नो व्यवहारहेतुत्वेन, सजीवशरीरोपकारकतया कलात्वं बोध्यमिति ।

इति च । एवं च महदादिपञ्चविंशतितत्त्वाभिमानिनो देवास्तात्विकाः ।

(सृष्ट्यादौ देवत्वं प्राप्तास्तात्विकदेवाः)

तेषां लक्षणं तु तैत्तिरीयभाष्योक्तं - **ताभ्यश्च तात्विकाः देवाः सृष्ट्यादौ देवतां गता** इति ।आदिसृष्टिकाले देवत्वं प्राप्तास्तात्विका इति तल्लक्षणम् ।

ननु देवत्वप्राप्तिर्नाम नोत्पत्तिः । **'देवासुरनरत्वाद्या जीवानां तु निसर्गतः'** इति गीतातात्पर्येण देवत्वजातेः स्वाभाविकत्वावगमात् । नाप्यभिव्यक्तिः । ब्रह्मादीनां वाय्वादिजन्मन्येव तस्याभिव्यक्तत्वात् । ततो लक्षणस्यासम्भव इति चेत् । उच्यते । वेदे प्रसिद्धनामरूपवत्त्वं हि देवत्वम् । तत्प्राप्तिर्नाम उत्पत्तिरेव । ब्रह्मादिदेवानां तद्योग्यनामसङ्केतस्य तद्योग्यरूपस्यादिसृष्टिकाले ईश्वरेण क्रियमाणत्वात् । तथा चोक्तं सूत्रभाष्ये -

**अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।**
**ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः ।**
**वेदशब्देभ्य एवाऽदौ निर्ममे स महेश्वरः ।।** इति ।

तथा च भगवान् ब्रह्मादितात्विकानां वेदोक्तनामसङ्केतं तदुक्तरूपनिर्माणं चाऽदिसृष्टिकाल एव करोतीति तात्विकाः सृष्ट्यादौ देवत्वं प्राप्नुवन्तीति स्मृतिसिद्धम् । देवत्वं प्राप्तास्तात्विका इत्येवोक्ते कर्मजदेवेष्वतिव्याप्तिः । तेष्वपि इन्द्रादिनामरूपत्वाख्यदेवत्वप्राप्तेः सत्त्वादत आदिसृष्टिकाल इति । न हि ते तथा प्राप्नुवन्ति । किन्तु ब्रह्माण्डोत्पत्त्यनन्तरं चतुर्दशभुवनोत्पत्त्यनन्तरं च सावर्णिमन्वन्तरादौ इन्द्रादिनामरूपवत्वाख्यं देवत्वं प्राप्नुवन्ति । **सावर्णेरन्तरस्यायं भवितेन्द्रो महाबल** इति भागवताष्टमोक्तेः । पुष्करान्तानां तात्विकत्ववादे तु कश्यपसृष्टेरादौ विराट्सृष्टौ देवतां गतास्तात्त्विका इति तल्लक्षणं बोध्यम् ।

तथाचोक्तं पण्डिताचार्यैः - **तात्त्विकानथ देवान् को वैराजः पुरुषोऽसृजत्** इति ।

**( सशरीरस्य जीवस्योपकारका एकादशेन्द्रियपञ्चभूताभिमानिदेवताः कलादेवाः मुख्यप्राणमारभ्य विघ्नेशान्ताः न केवलतात्विका अपि तु कलादेवाश्च )**

तात्त्विकेभ्योऽन्ये देवाः कलादेवाः । कला नाम सशरीरस्य जीवस्य भागाः । यथोक्तं षट्प्रश्नटीकायां - **'सशरीरस्य जीवस्य भागाः कला'** इति । अत्र भागशब्देनोपकारकं विवक्षितम् । **एकादशेन्द्रियाणि पञ्चभूतानि चेति षोडशकलाः** । लिङ्गदेहस्य तदात्मकत्वात् । तत्रापि मन एवाखिलप्रधानम् । बीजे सस्नेहावयवैकदेशवत् । **'स प्राणमसृजत प्राणात् श्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनो अन्नमन्नाद् वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च' इति** षट्प्रश्नोपनिषदुक्तास्तु षोडशकलाः स्थूलदेहे अवगन्तव्याः । तेषु किञ्चिज्जीवोपकारकं किञ्चिच्छरीरोपकारकमिति सर्वथा सजीवशरीररूपविशिष्टोपकारकतया कलात्वं षट्प्रश्नभाष्यटीकायां जयार्यैरुपपादितम् । भूतानां शरीरोपादानत्वेन शरीरोपकारकत्वं तु -

**यत्किञ्चिदिह लोकेऽस्मिन् देहबद्धं विशांपतेः ।**
**सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ।।**

इति स्मृतिसिद्धम् ।

श्रद्धापदोक्ताऽऽस्तिक्यबुद्धेर्विहितवृत्तिहेतुत्वेन चक्षुरादीन्द्रियाणां प्रवृत्तावुपकरणत्वेन मनसः प्रवृत्तौ प्रधानकरणत्वेन अन्नस्य शरीरस्थितिहेतुत्वेन ऋगादिरूपाणां मन्त्राणां सम्यग्ज्ञानादिहेतुत्वेन कर्मणः पुण्यपापरूपस्य सुखादिनिमित्तत्वेन, लोकशब्दोक्तगोलकानां शरीरावयवत्वेन, देवदत्तादिनाम्नो व्यवहारहेतुत्वेन, सजीवशरीरोपकारकतया कलात्वं बोध्यमिति ।

**विष्णोः प्राणस्तथा श्रद्धा तस्या रुद्रो मनोऽभिधः ।**
**तस्मादिन्द्रस्त्विन्द्रियात्मा तस्य सोमोऽन्नदेवता ।**
**ततस्तु वरुणः सृष्टस्तस्मादग्निस्ततोऽवरः ।**
**आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत् ।**
**तस्मादग्निः पावकाख्यः प्रथमोऽग्नेः सुतस्ततः ।**
**ततः पर्जन्य उद्भूतः स्वाहातो मन्त्रदेवता ।**
**उदकात्मको बुधस्तस्मादुषा नामात्मिका ततः ।**
**ततः शनिः पृथिव्यात्मा कर्मात्मा पुष्करस्ततः ।।**

इति कलादेवाश्च षट्प्रश्नभाष्ये अभिहिताः । **तत्र मुख्यप्राणमारभ्य विघ्नेशान्ताः मुख्यतात्त्विका अपि कलादेवाश्च** । किं तु न कर्मदेवाः । **अन्तरा प्राप्तदेवता** इति वक्ष्यमाणतल्लक्षणाभावात् । अपि तु मरीच्याख्यमरुदादिपुष्करान्तकलादेवा एव कर्मदेवाः ।

**(कर्मजदेवा तत्समानाश्च यथामानं किञ्चित्तारतम्योपेताः )**

तत्र तात्त्विकदेवानां तत्समानानां च **पारावर्यमुक्तशेषाः शतस्था देवाश्चेत्यन्तेन** ग्रन्थेनाभिधायेदानीं कर्मजदेवानां तत्समानानां च तारतम्यं वक्तुं कर्मदेवान् समांश्चाऽह -

**एतेभ्य ऊनास्तदवरमनवश्च्यावनोचथ्यपूर्वाः ।**
**विप्राश्चाशीतिसङ्ख्याः सनमुखयतयः**
**कार्तवीर्यादिराजा गन्धर्वाः चाष्टसङ्ख्याः**
**पितर इह तथा सप्त मध्यात्तदैवाः ।**
**बल्याद्याः पावकाद्या जयविजयमुखा**
**द्वारपाश्चित्रगुप्तश्चोर्वश्याद्या**
**मरीचिश्चरणपतिमुखा धूममार्गादिदेवाः ।**
**अन्येऽप्येवं प्रसिद्धस्वपदमधिगता उक्तशिष्टाश्च देवाः ।। इति।**

एतेभ्यः शतान्तर्गतदेवेभ्यः न्यूनाः तदवरमनवः तेभ्य उक्तेभ्यः स्वायम्भुवतापसवैवस्वतेभ्यः अवराः एकादशमनवः । स्वारोचिषः, उत्तमः,

रैवतः, चाक्षुषः, सावर्णिः, ब्रह्मसावर्णिः, रुद्रसावर्णिः, इन्द्रसावर्णिः, दक्षसावर्णिः, मेरुसावर्णिः, धर्मसावर्णिः चेति । एतेषां अश्विभ्यामधमत्वे **अश्विपश्चादन्ये ततोऽवरा** इत्यनुव्याख्यानं मानम् । स्वायम्भुवाद् वैवस्वताद् भगवदवतारात्तापसाच्चान्ये मनवस्ततो वैवस्वतादवराः । तेऽश्विभ्यां पश्चात् पर्जन्यादुत्तमा इत्यर्थ इति सुधा च । च्यावनोचथ्यपूर्वाः । च्यवन एव च्यावनः । स्वार्थेऽण् । च्यावनो भार्गवः । उचथ्यो बृहस्पत्यनुजः । तावेव पूर्वौ येषां ते च्यावनोचथ्यपूर्वाः । अशीतिसङ्ख्याका विप्राश्च । **ऋष्यशीतिस्तथा सप्त पितर** इति पञ्चमतात्पर्ये अशीत्यृषीणां, **पितृणां सप्तकं यत्तत्कर्मदेवसमं मतमिति** बृहद्भाष्योक्त कर्मदेवसमसप्तपितृसमत्वेनोक्तत्वाद् अशीतिसङ्ख्या ऋषयश्च । ननु -

**विश्वामित्रब्रह्मपुत्रानृते चाप्यृषयोऽखिलाः ।**
**सूर्यादिभ्योऽधमाश्चैव मन्वादिभ्यस्तथैव च।।**

इति बृहद्भाष्ये विश्वामित्रमरीच्यादिसप्तकनारदभृग्वाख्यदशर्षिभिन्नानां व्याप्तदर्शिनां नवतिसङ्ख्यानां ऋषीणामश्विपर्यन्तोक्ततात्त्विकदेवेभ्यः अधमत्वाभिधानात् । **ऋष्यशीतिः** इति कथमुक्तम् ।स्मृत्यर्थस्तु सूर्यश्च चन्द्रमाश्चेति यमश्चति त्रयः सुराः । नोक्तेभ्यस्त्ववरा इति व्यवहितपूर्वश्लोकप्रकृतेभ्यः सूर्यचन्द्रयमेभ्यः वरुणाग्निमित्राश्विदेवव्यवधानेनाधमाः । मन्वादिभ्यश्च । चादधमा इत्यस्यानुकर्षः । मनूनामादयो मन्वादय इति तत्पुरुषः । 'पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्या' इत्यमरकोशादादिशब्दः प्रथमार्थः । तथा च मन्वादिभ्यः मनूनां मध्ये प्रथमेभ्यः श्रेष्ठेभ्यस्तापसादिभ्यस्त्रिभ्योऽधमाः । अन्यथा सूर्यादिभ्योऽधमा इत्यनेनैव सूर्याद्यधिकमन्वाद्यधमत्वलाभेन विधानवैयर्थ्यात् । **अप्राप्ते शास्त्रमर्थवत् इति न्यायात् । तस्माद् ऋषिनवतेर्ग्राह्यत्वाद् विप्राश्चाशीतिसङ्ख्या** इत्ययुक्तमिति चेत्सत्यम् । **ऋषयोऽखिला** इत्यत्र बृहद्भाष्ये कर्मदेवसमाना उच्यन्त इति तावत्सम्मतम् । 'मन्वादिश्योऽधमा' इति वाक्यात् । ते द्विविधाः । गृहस्था यतयश्चेति । आद्याश्च्यवनादयः ।

द्वितीयाः सनकादयः । द्विविधानामपि कर्मदेवसाम्यमभिप्रेत्य नवतिसङ्ख्याभिधानम् । गृहस्थानेव महर्षीनभिप्रेत्य **ऋष्यशीतिस्तथा सप्त** इत्यत्राशीतिसङ्ख्योक्तेत्यविरोधः । तथाहि । मुक्तियोग्यास्तावत् त्रिविधा इति सम्मतम् । तत्र ये उत्तमास्ते द्विविधाः आधिकारिकाः तद्भिन्नाश्चेति । तत्र ये अपरोक्षज्ञानिनो गृहस्थाश्रमिणः प्रियव्रतजनकादयो यज्ञादिकर्म कृत्वैव ज्ञानसम्पादने अधिकृताः । ईश्वरेच्छयाऽभिनिवेशितकर्माधिकार इति शास्त्रे प्रसिद्धाः आधिकारिकाः । एतदेवाभिप्रेत्य प्रमेयदीपिकायाम् **आधिकारिका इति पुरुषसंज्ञे**त्युक्तम् । ते चाऽधिकारिका द्विविधाः । महाधिकारिणोऽल्पाधिकारिणश्चेति । तत्राऽद्याः प्रजापाश्च तथा देवा इत्यनेन दर्शिताः । द्वितीयास्तु ऋष्यशीतिस्तथेति सपादश्लोकेन प्रदर्शिताः ।

एतेन ऋष्यशीत्यादीनां कथमल्पाधिकारित्वं कथं च सनकादीनामाधमाधिकारित्वम् । व्याप्तदर्शित्वेन देवतासमत्वादित्यादिदूषणं परास्तम् । आधिकारिकत्वानाधिकारिकत्वाल्पाधिकारित्वादीनां प्रमेयदीपिकानुसारेण पारिभाषिकत्वेन मुख्यत्वाभावात् । **सनमुखयतयः**। **'ततः सनाद्याश्च मरीचिमुख्या'** इति तात्पर्यनिर्णये **'उक्तक्रमात् पूर्वभवस्तु यः यः श्रेष्ठः स स ह्यासुरकानृते च'** इत्यश्विन्यनन्तरं सनकादि उत्पत्त्यभिधानात् । तदेव सनकसनन्दनसनातनाख्यत्रयाणामश्विदेवाधमत्वे मानम् । सनादयो यतयः काममेवेत्यनुव्याख्यानं त्वश्विन्यादिद्वारेति निगमयितव्यम् ।

ननु सनकादीनामश्व्यधमत्वाङ्गीकारे **'सनकाद्या नारदश्च दक्षभृग्वादयोऽपि च । देवावरा यथा तद्वन्मनवोऽपि प्रकीर्तिताः'** इति बृहद्भाष्यविरोधः । **'पुरन्दरावरा'** इति भावबोधे व्याख्यातत्वादिति चेन्न । तत्र भृगुनारदग्रहणं तेऽप्यन्योन्यविशेषिण इत्यत्र दृष्टान्तार्थम् । योग्यतासत्त्वेन व्यवहितान्वयस्यादोषत्वात् । भृग्वादय इत्यत्राऽदिपदेन मरीच्याद्या ब्रह्मपुत्रा ग्राह्याः । मनुशब्देन तापसव्यतिरिक्ताः सर्वे मनवो ग्राह्याः ।

तथा च सनकाद्याः यथा केनचिदंशेन देवावरा अश्विदेवावरास्तद्वदेकादशमनवोऽपि किञ्चिदंशेनाश्विभ्यामवराः ।

एवं दक्षो यथा दशभिर्गुणैः आहङ्कारिकप्राणाख्यदेवावरस्तद्वत् स्वायम्भुवो मनुरपि । दक्षस्वायम्भुवयोः आहङ्कारिकाद् दशगुणाधमत्वस्यशास्त्रेऽभिहितत्वात् । एवं मरीच्याद्या यथा कतिपयांशेन वह्निरूपदेवाधमास्तद्वद्वैवस्वतो मनुरपि वह्निरूपदेवाधमः । **कसूनुवदिति** वैवस्वतस्य मरीच्यादिसाम्यस्योक्तत्वेन अग्न्यधमत्वलाभात् । तत्रापि विशेषं वक्तुं **त्रिचतुर्भागेति** । भृगुनारदपदं तद्वदिति चात्रानुवर्तते । तथा यथा भृगुनारदाविन्द्रकामवद्विशेषयुक्तौ तद्वत्तेऽपि परस्परं समाना अपि सनकाद्या एकादशमनवश्च दक्षस्वायम्भुवौ मरीच्याद्या वैवस्वतश्चेत्येते एकस्य गुणस्य त्रेधा चतुर्धा विभागे कृते यस्तृतीयस्तुरीयो वा भागस्तद्भेदेनान्योन्यविशेषिणः । तत्र सनकादीनां एकादशमनूनां च यतित्वगृहस्थत्वकृतो विशेषः । तथा मरीच्यादीनां वैवस्वतमनोश्च विप्रत्वक्षत्रियत्वकृतो विशेषः । दक्षस्वायम्भुवयोस्तु जामातृश्वशुरत्वकृतो विशेषः । **श्वशुरः पञ्चमो गुरुरिति** श्वशुरस्य गुरुत्वप्रसिद्धेः । भृगुनारदयोस्तु महर्षित्वदेवर्षित्वकृतो विशेषः । **महर्षीणां भृगुरहं देवर्षीणां च नारद** इति गीतोक्तेरिति बृहद्भाष्यसार्धश्लोकार्थप्रतीतेः । **पुरन्दरावरा** इति भावबोधाचार्योक्तिस्तु कैमुत्यविवक्षयेति द्रष्टव्यम् ।

सनकादीनां प्रवहाधमत्वाभ्युपगमे सनकादिवदेकादशमनूनां अश्विदेवाधमत्वाभिधायकबृहद्भाष्यविरोध एव भवति न तु संवादः । अत एव **सनकाद्या यमादुच्चाः कुमारादितरे त्रयः । तदुच्चः प्रवहो वायुः इति । त्रिगुणोच्चा नारदात्ते दक्षात् सप्तगुणाधमाः । चतुर्गुणोच्चा भृग्वादेरिति** सङ्ग्रहं कुर्वतामाशयं न जानीमः । ततः **सनाद्याश्च मरीचिमुख्या** इति भारततात्पर्योक्तिविरोधपरिहारश्च तैः क्रियमाणो मृग्यः । तथा चात्र कर्मदेवकक्षायां व्याप्तदर्शिनामुक्तदशकात् अतिरिक्तनवतिऋषीणां च्यवनसनकादीनामश्विपर्यन्तोक्ततात्विकदेवाधमत्वेन ग्रहणं युक्तमिति सिद्धम् । **कार्तवीर्यादिराजः** ।

**कार्तवीर्यः पृथुश्चैव दौष्यन्तिर्भरतस्तथा ।**
**शशबिन्दुश्च मान्धाता ककुत्स्थाद्यास्तथाऽपरे ।।**

इति बृहद्भाष्यानुसारेण कार्तवीर्यप्रभृतिव्याप्तदर्शिराजशतं कर्मदेवकक्षायां ग्राह्यम्। ककुत्स्थाद्या'इत्याद्यपदेन परीक्षिज्जनकादयश्च राजानो ग्राह्याः।

**प्रियव्रतो गयश्चैव कर्मदेवसमौ गुणैः।**
**ऋते हैहयवैन्यादीनार्षभस्येह कः समः ।।**

इति भागवतपञ्चमतात्पर्यानुसारेण गयत्रिजन्मभरतावप्यत्र ग्राह्यौ। एवं व्याप्तदर्शिन उत्तमाधिकारिणो ये **राज्ञां च शतमिति** सूत्रभाष्योक्तास्ते सर्वे अप्यत्र कर्मदेवकक्षायां ग्राह्याः । **ककुत्स्थाद्या इत्याद्यपदात् तथापर** इति बहुवचनान्त परशब्दाच्च। आद्यपदसङ्ग्राह्यतावच्छेदकं च व्याप्त-दर्शिराजत्वमिति ज्ञेयम् । **देवानां मोक्ष उत्क्रान्तिश्चे**ति सूत्रभाष्ये निर्देशबलेन देहलयाख्यस्य मोक्षस्योत्क्रान्तिफलापेक्षयोत्तमत्वेन देहलयो-पेतप्रियव्रताद्यपेक्षया तद्धीनपरीक्षित ईषदधमत्वं **पञ्चांशतो दशांशाद्वा स्वस्वजात्यां परस्परमि**त्युक्तन्यायेनास्तीति केचिद्वर्णयन्ति । तस्यापि **विशन्ति मनवो राजमुख्या मनुं प्रविश्याथ गता महेन्द्रम्** इति अनु-व्याख्यानोक्तदेहलयाङ्गीकारात् प्रियव्रतादेः साम्यमेव । अत एव द्वाद-शस्कन्धे परीक्षिद्देहत्यागकथनावसरे नोत्क्रान्त्युक्तिरित्यपरे । अन्तर्दर्शित्वेन मध्यमाधिकारिणो राजानस्तु **क्षितिपा मनुष्यगन्धर्वा** इति प्रमाणोक्त-क्षितिपकक्षायां ग्राह्याः **गन्धर्वाश्चाष्टसङ्ख्याः । कर्मदेवगणा अष्ट-गन्धर्वास्तत्परे शतम् ।** आजानजदेवा इति बृहद्भाष्येऽष्टौ गन्धर्वाः कर्म-देवसमा इत्युच्यन्ते । न तु कर्मदेवत्वम् । 'अन्तराप्राप्तदेवताः कर्मदेवाः' इत्युक्तलक्षणाभावात् । अत एव **कर्मदेवगणा अष्टगन्धर्वा इत्येतत् कर्मदेवसमाना** इति व्याख्यातं भावबोधे । ते चाष्टगन्धर्वाः । **समस्त-गन्धर्वपतिः सतुम्बुरुः । धृतराष्ट्राभिधेयो गन्धर्वराट् । हूहूगन्धर्व-सत्तमः । गन्धर्वाणां चित्ररथः** इत्यादौ श्रेष्ठत्वेनोक्ता ज्ञातव्याः ।

**पितर इह तथा सप्त । पितॄणां सप्तकं यत्तत्कर्मदेवसमं मतम्** इति बृहद्भाष्यमत्र मानम् ।। ४ ।।

## तारतम्यनवश्लोकीमुक्तामाला

**बल्याद्याः पावकाद्या जयविजयमुखा द्वारपाश्चित्रगुप्त -**
**श्चोर्वश्याद्याः मरीचिश्चरणपतिमुखाः धूममार्गादिदेवाः ।**
**अन्येऽप्येवं प्रसिद्धस्वपदमधिगता उक्तशिष्टाश्च देवाः**
**तेभ्यः किञ्चिद् विहीना द्विगुणितमधमा मित्रतः सूर्यपत्नी**
**।। ५ ।।**

**(कर्मदेवाः तत्समाश्च पूर्वोक्तेभ्यः अवराः)**

मध्यात्तदैवाः । बल्याद्याः । **बल्याद्या अन्तराप्राप्तदेवताः कर्मदेवताः** इति तैत्तिरीयभाष्ये कर्मदेवलक्षणमुक्तम् । तदर्थस्तु **अन्तरा मध्ये योग्यतया ब्रह्माण्डस्येति** लभ्यते । देवतां प्राप्ताः प्राप्तदेवताः। अन्तरेति सावधारणम् । विशेषणोपादानसामर्थ्यात् । मध्य एव देवयोग्यनामरूपवत्त्वलक्षणं देवत्वं प्राप्ताः न तु तस्माद्बहिः । ते कर्मदेवा इति लक्षणम् । एतच्च लक्ष्ये प्रसिद्धमिति दर्शनाय बल्याद्या इत्युक्तम् । ते त्वण्डमध्य एव देवत्वं प्राप्ता इति पुराणप्रसिद्धा इति लक्ष्ये लक्षणसमन्वयः । ब्रह्माण्डमध्ये विरिञ्चेन देवत्वं प्राप्तम् । वायुधर्मनासत्यपुरन्दरैरण्डमध्ये इन्द्रत्वं प्राप्तमिति तत्वदेवेष्वतिव्याप्तमिदं लक्षणम् इति आशङ्कापरिहाराय अवधारणम् । विरिञ्चादयस्तत्वदेवा अण्डाद्बहिर्देवयोग्यनामरूपवत्त्वं देवत्वं प्राप्यैव पुनरण्डमध्येऽपि प्राप्ताः । न त्वण्डमध्य एवेति नातिव्याप्तिः ।

ननु **ये कर्मणा देवानपियन्ति** इति तैत्तिरीये **ये कर्मणा देवत्वमभिसम्पद्यत** इति श्रुतौ चोक्तम् ।कर्मणा देवत्वं प्राप्ताः कर्मदेवा इति

**कर्मदेवलक्षणं किं न स्यात्। बल्यादयो हि भूदानादिकर्मणा देवत्वं प्राप्ता** इति लक्ष्ये लक्षणस्य प्रसिद्धत्वादिति चेन्न । तत्वदेवेष्वतिव्यापकत्वात्। तत्वप्रकाशिकायां विद्याकर्मभ्यां योग्यमनुष्याणामेव देवादित्वप्राप्तिः इत्युपपादितत्वेन तत्वदेवानामपि कर्मणा देवत्वप्राप्तेः सत्वात् ।

नन्वथापि टीकायां कर्मपदेन नित्यनैमित्तिककर्मग्रहणम् । अत्र तु तद्भिन्नं महापुण्यमेव कर्मशब्देन विवक्षितम् । बलेर्नित्यनैमित्तिकान्य भूदानादिमहाकर्मणा देवत्वप्राप्तेर्दृष्टत्वात् । तत्वदेवेषु नित्यनैमित्तिकान्यकर्मणा देवत्वप्राप्तेरभावात् नातिव्याप्तिरिति चेन्न । राजसूयादिमहापुण्येन नित्यनैमित्तिकान्येन ब्रह्मनामरूपवत्त्वलक्षणपारमेष्ठ्यपदप्राप्तेः **क्रतुर्यथा विधानतः कृतो हि पारमेष्ठ्यकम्। पदं नयेत तत्पदे सुयोग्यमेव नान्यथे**त्यत्र भारततात्पर्ये अभिधानेन विरिञ्चेऽतिव्याप्तेः । **विष्णोरेषस्य प्रभृथे हविर्भिः विधेहि रुद्रो रुद्रियं महित्वं यासिष्ठं वर्तिरश्विनाविरावदि**ति श्रतौ रुद्रादेरपि यागरूपमहाकर्मणा रुद्रादिपदप्राप्तेः श्रुतत्वाद्रुद्रादिषु अतिव्याप्तेः । तस्माद् ये कर्मणा देवानपियन्ति इति न लक्षणपरं, किन्तु पङ्कजपदवत्कर्मदेवपरमपि योगरूढम् । **ये कर्मणे**ति प्रवृत्तिनिमित्तमात्रमुक्तं न लक्षणं येन तत्वदेवेष्वतिव्याप्तिः । प्रयोगे सति निमित्तानुसरणं न तु निमित्तमस्तीति प्रयोगः । तर्हि पङ्कजपदस्य भेकादावपि प्रयोगापातात् । तस्मादन्तराप्राप्तदेवता इति कर्मदिवतालक्षणमिति सिद्धम् ।

ते च कर्मदेवाः । **बलिरद्भुतशम्भू च विधृतस्त्वृतधामकः । दिवस्पतिः शुचिश्चे**त्यागमोक्ताः सप्तेन्द्रा एव । **यज्ञोऽथो रोचनस्तथा । सत्यजित्त्रिशिखविभू मन्द्रद्युम्नपुरन्दरौ** इत्युक्ताः सप्त पूर्वेन्द्रास्तु न कर्मदेवाः । तेषां विष्णुवायुधर्माश्विशचीपत्यंशत्वेन तेष्वन्तरैव प्राप्तदेवत्वरूपलक्षणाभावात् । तस्माद्बल्याद्याः सप्तेन्द्रा एव कर्मदेवा इति सिद्धम् । पावकाद्याः । तस्मादग्निः पावकाख्यः प्रथमाग्नेः सुतस्तथेति षट्प्रश्न-

**भाष्योक्तः । अग्निज्येष्ठपुत्रः पावकाख्यः स एव 'एकस्मिंस्तु पुरे संस्थो द्विरूपाग्नेः सुतो महान्' इति सूत्रभाष्यवचनादर्चिर्नामक इति ज्ञायते ।**

आद्यपदेन मङ्गलशुक्रराहुकेतव इति चत्वारो व्यूहा मेषादिराशिसञ्चारिदेवता ग्राह्याः । तेषूक्तलक्षणसद्भावात् । **धाता यथापूर्वं अकल्पयदिति** श्रुत्या पूर्वकल्पीयमङ्गलादिवद्वेदोक्तनामानि परमेश्वरोऽण्डमध्ये सङ्केतितवान् । रूपाणि चोत्पादितवानिति गम्यते । **तत्र यद्यपि राहुर्दैत्य** इति प्रसिद्धिस्तथापि **शिरस्तु तस्य ग्रहतामवाप सुरैः समाविष्टम्** इति भारततात्पर्ये सुरैरिति सहयोगे तृतीया । सुरैः समाविष्टं संसम्यक्तया आविष्टम् उपाविष्टं समावेशं प्राप्तमिति सुरैः समावेशाभिधानाद्देवत्वं सूचितम् । अन्यथा सुरैः सह समावेशायोगात् । **शिरस्त्वमरतां नीतमजो ग्रहमचीक्लृपत्** इति भागवते भगवत्प्रसादेन देवत्वप्राप्त्यभिधानात्तच्छिरो देवपङ्क्तौ प्रकटं यथा स्यात् तथोपविष्टमित्येव व्याख्यानं युक्तम् । केतुरपि देव एव । देवैः साहचर्यात् ।

**ग्रहाधीना नरेन्द्राणामुच्छ्रायाः पतनानि च ।**
**भावाभावौ च जगतस्तस्मात् पूज्यतमा ग्रहाः ।।**

इति पूज्यत्वस्मरणाच्च । न च देवव्यतिरिक्तानां पूज्यत्वमस्ति ।

**सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः ।**
**शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृता ।।**

इति स्मृत्युक्ता आदित्यादयो नवग्रहाः। तत्राऽदित्यसोमबृहस्पतयो न कर्मदेवाः तेषां तात्विकत्वेनोक्तत्वात् । अथ शनिबुधौ वक्ष्येते । अतः शिष्टा मङ्गलकेतुराहुशुक्राः चत्वारः कर्मदेवेषु ग्राह्याः ।

**जयविजयमुखा द्वारपाः** । एवं विष्णुपार्षदा अपि कर्मदेवकक्षायां ग्राह्याः । अण्डमध्य एव वेदोक्तनामरूपवत्त्वाख्यं देवत्वं प्राप्ता इति कर्मजदेवलक्षणवत्त्वात् । **कालाजयाद्या अपि विष्णुपार्षदा नीचाः सुरेभ्य-**

**स्तत एव तेऽखिला** इति भारततात्पर्योक्तिरपि जयविजयकालादीनां तात्विकाधमत्वे मानम् ।

**तावक्षयोऽनुजगृहे निजपार्षदौ हि ।**
**पूर्वं विकुण्ठसदनाद्धरिसेवनाय ।**
**प्राप्तौ भुवं मृजनपुष्पकरौ पुराऽपि ।**

इति भारततात्पर्योक्तौ वप्तृमालाकरौ द्वावपि विष्णुपार्षदौ । एवं प्रल्हादादयोऽपि औपाधिकासुरत्वविनाशेन स्वाभाविकदेवत्वमभिव्यज्यत इत्यन्तरा प्राप्तदेवत्वात् कर्मदेवाः । यथोक्तं गीतातात्पर्ये -

देवाः **शापबलाद् देवि प्रल्हादादित्वमागताः ।**
हेतुतः **सोऽन्यथाभावो रक्तता स्फटिके यथा ।**
अतः **पुनश्च देवत्वं ते यान्ति निजमेव तु ।। इति ।**
**ऋते तु तात्विकान् देवान् नारदादींस्तथैव च ।**
**प्रल्हादादुत्तमः को नु विष्णुभक्तो जगत्त्रये ।।**

इति सप्तमभागवततात्पर्ये तात्विकदेवाधमत्वोक्त्या कर्मदेवसमानत्वमवश्यमङ्गीकार्यम् ।

**चित्रगुप्तः** । **एवं यश्चित्रगुप्तो नाम पूर्वं सुलेख** इति भारततात्पर्योक्तरीत्याऽण्डान्तरेव लेखकत्वं प्राप्तः चित्रगुप्तोऽपि कर्मदेवः । एवं विश्वकर्माप्यन्तरा वर्धकित्वं प्राप्त इति कर्मदेव इति द्रष्टव्यम् । **ऊर्वश्याद्याः**।

**ऊर्वशी पूर्वचित्तिश्च सहजन्या च मेनका ।**
**विश्वाची च घृताची च षडेवाप्सरसां वरा ।।**

इत्यादिपर्वणि भारते शकुन्तलोपाख्याने उक्ताः । उत्तमाप्सरसोऽपि कर्मदेवसमाः । **तथोर्वश्यादिका अपि** इति बृहद्भाष्ये ऊर्वश्यादिका अपि तथा कर्मदेववत् सूर्यादिभ्योऽधमा इत्युक्तेर्बृहद्भाष्यमेवात्र मानम् । आहुरप्युत्तमस्त्रीणामधिकारं तु वैदिके । **यथोर्वशी यमी चैवेति** सूत्रभाष्ये यमपत्नीवदुत्तमस्त्रीत्यभिधानाद् ऊर्वशी सर्वाप्सरः श्रेष्ठा । अतो

बृहद्भाष्ये आदिपदेनाप्सरोमात्रग्रहणे ऊर्वशीसहपाठविरोधात् भारतवाक्योक्ताः षडेव ग्राह्याः । एतेनाप्सरःशतमपि ग्राह्यमिति निरस्तम्। उक्तभारतवाक्ये षट्सङ्ख्योक्तिविरोधात् ।

**मरीचिः** । मरीचिर्भूतवायुकलादेवता । **आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत्** इति षट्प्रश्नभाष्ये गणपत्यनन्तरमुक्तत्वात् कर्मदेवकक्षागतः । **प्रधानवायुजो भूतवायुर्नाम्ना मरीचिक** इति गीतातात्पर्ये च तस्य प्रधानवायुसुतत्वं भूतवायुरूपकलादेवत्वं च स्पष्टमुक्तम् । भूतवायुत्वं नाम जडवायुत्वम् । मरीचेश्चेतनत्वेन भूतवायुत्वासम्भवात्तदभिमानित्वमेवाभिमान्यधिकरणन्यायेन । तच्च द्विविधम् । मुख्याभिमानित्वममुख्याभिमानित्वं चेति । तत्राऽद्यं प्रवहस्यैव । **आतिवाहिकस्तल्लिङ्गात्** इत्यादौ सिद्धत्वात् । अतोऽमुख्याभिमानित्वमेव मरीचेर्भूतवायुत्वम् । तस्य गणपत्यधमत्वं तु **ततः सनाद्याश्च मरीचिमुख्या देवाश्च** इति भारततात्पर्ये तृतीयाध्याये विहिताद्गणपतिसमानाश्विदेवाधमत्वात् सिद्ध्यति । **मरीचिर्मरुतामस्मी**ति गीतायामुक्तं मरीचिपदं प्रधानवायुपरम् । **उदवन्मेघचलनान्मरीचि**रिति गीतातात्पर्योक्तोदवन्मेघचालयितृत्वस्य मरीचिपदप्रवृत्तिनिमित्तस्य **स्वकीयमुदकं नद्य** इति प्रधानवायौ सिद्धत्वात् । मेघे कृत्वा प्रवर्षतीत्यस्य मेघान् सम्प्रेष्य तद्द्वारा तत्तद्देशे वर्षतीत्यर्थः । वायुपदं च निरुपपदं प्रधानवायुपरमेव । मुख्यस्य निर्विशेषेण शब्द इति वचनात् ।

**चरणपतिमुखाः** । **पादौ तु विष्णुनाऽविष्टौयज्ञशम्भू शचीसुतौ** इति गीतातात्पर्योक्तौ पादाख्यतत्वाभिमानिनौ यज्ञशम्भू ग्राह्यौ । तयोस्तत्वाभिमानित्वेऽपि प्रागनुक्तत्वेनोक्तान्यत्वात् । पर्जन्यादिवक्ष्यमाणदेवान्यत्वाच्च । अतोऽत्र कक्षायां केचन तत्वदेवाः सर्वेऽपि कर्मदेवास्तत्समानदेवाश्चोच्यन्ते । शतस्थान्तदेवान्यत्वे सति पर्जन्याद् आजानजदेवान्यत्वे च सति देवत्वमिह कर्मदेवकक्षोक्तदेवानां सङ्ग्राह्यत अवच्छेदकम् । ते च देवा जयन्तादयः केचित्तत्वदेवाः प्रल्हादादिदेवाः

मरीचिपावकाख्यौ द्वावेव कलादेवौ बल्याद्याश्चेत्यालोचनीयम् । मरीचिपावकयोः साम्येऽपि **तस्मादग्निः पावकाख्य** इति तयोस्तारतम्यकथनपरं षट्प्रश्नभाष्यं देवादिष्वेषु सर्वेष्विति बृहद्भाष्योक्तदिशेषन्न्यूनाधिकभावाभिप्रायम् ।

**धूममार्गादिदेवाः ।**

**स ऐच्छद् भगवान् विष्णुः स्रष्टुं लोकाभिमानिनः ।**
**लोकाभिधानवद्देवान् जडलोकांश्च शाश्वत ॥**

इत्यैतरेयभाष्योक्तिबलाद् धूमार्चिरादिनामकजडलोकाभिमानिनो देवास्तत्तल्लोकनामवाच्याः । ब्रह्माण्डाद् बहिः स्वस्वाभिमतलोकोत्पत्त्यभावेन वेदोक्ततत्तन्नामवत्त्वादिकं न प्राप्ताः । किन्तु ब्रह्माण्डान्तरेव धूमादिलोकोत्पत्त्या पूर्वकल्पीयधूमार्चिरादिलोकपालसदृशनामवत्वं तत्सदृशरूपवत्वं चाऽप्नुवन्तीत्यन्तराप्राप्तदेवता इत्युक्तकर्मदेवलक्षणं तेषामस्तीति । **धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्** इति पितृयानमार्गस्था धूमादिदेवाः ।

**उत्क्रान्तस्तु शरीरात्स्वाद्गच्छत्यर्चिषमेव तु ।**
**ततोऽहः पूर्वपक्षं चाप्युदक् संवत्सरं तथा ।**
**तडितम्**

इत्यन्तोक्ता अर्चिराद्यास्तडिदन्ताः । **ध्रुवं देवीम्** इत्युक्तो ध्रुवः । **अहरभिजिते**त्यादिगीताभाष्योक्ता अभिजित्पौर्णमासी विषुवदेवाश्च । **माताऽस्य देवीति च रौहिणेयी भीमप्रियासीद्या पुरा सैव राका** इति भारततात्पर्योक्ता राकाऽपीति देवयानमार्गस्था । अर्चिरादिदेवाश्च कर्मदेवकक्षायां ग्राह्याः । **पूर्णे राका निशाकर** इत्युक्तेः पूर्णेन्दुयुक्तपौर्णमास्या एव राकात्वात् तस्याश्च गीताभाष्ये पौर्णमास्या ग्रहणेन सङ्गृहीतत्वात् । अन्येऽप्येवं प्रसिद्धस्वपदमधिगता उक्तशिष्टाश्च देवाः । उक्तेभ्यः विष्वादिशतस्थान्तदेवेभ्यः शिष्टाः अन्ये उपलक्षणया वक्ष्य-

माणपर्जन्याद्यन्ये च ये नवकोट्यन्तर्गताः प्रसिद्धस्वपदमधिगताः सुप्रसिद्धाधिकारास्ते सर्वेऽत्र ग्राह्याः । शतस्थान्तदेवान्यत्वे सति पर्जन्याद्याजानजदेवान्यत्वे सति ये देवास्ते कर्मदेवकक्षायां सङ्ग्राह्या इत्यर्थः । **नवकोट्यो हि देवानामि**ति स्मृतेर्देवा नवकोटिसङ्ख्याकाः । तेषु ये सुप्रसिद्धाधिकाराः कर्मदेवलक्षणयोगिनश्च ते सर्वेऽप्युक्तशिष्टा देवा इत्यत्र ग्राह्याः । अप्रसिद्धाधिकारास्तु **येभ्योऽन्ये** चेति सूक्ष्मतारतम्यानुसारेणानधिगतपदाः शिष्टदेवाश्च सर्व इत्यत्र ग्राह्याः । एतच्च सन्न्यायरत्नावल्यनुसारेण । तत्र **तदन्ये तु ततोऽवरा** इत्यनुव्याख्यानस्य तदन्ये ये अप्रसिद्धाधिकारा देवास्ते ततोऽवराः पर्जन्यादवरा इत्यर्थ इति व्याख्यातत्वादिति ध्येयम् ।

**अन्याश्चासुर्वासुदेव्यो दिशो या आपश्च पूर्वं विंशतिरग्र्यरूपाः** इति भारततात्पर्योक्ता दिगभिमानिन्यो भीमभार्याः **ओषधयः संवदन्त** इत्यादि श्रुतौ अभिमान्यधिकरणन्यायेन औषध्यादिपदवाच्यास्तत्तद्वस्त्वभिमानिदेवा अपि कर्मदेवसमाः ।

देवानां पारिजातादिवृक्षाः गंजा हया गावश्चात्र ग्राह्याः । शेषशतांतस्थदेवभिन्नत्वे सति पर्जन्यादिदेवभिन्नत्वे च सति अन्तराप्राप्तसुप्रसिद्धाधिकारत्वरूपावच्छेदकाक्रान्तत्वात् । अत्र **विप्रराजन्यविशेषोऽत्रापि कश्चने**त्यनुव्याख्यान **एतेष्वपि विप्रराजन्यनिमित्तः कश्चन विशेषोऽस्ति मुक्तावपि स्वरूपत्वादेर्भावादिति** सुधायां च च्यवनोचथ्ययोः कार्तवीर्यादिराजापेक्षया स्वरूप एव विशेषोऽभिहितः । **स चाऽनन्दाद्याधिक्यरूपो वा तदीयस्पष्टतादेरतिशयरूपो वेति विचार्यम्।**

**।। इत्येकोनविंशी कक्ष्या ।।**

**।। अथ विंशी कक्ष्या ।।**

## तारतम्यनवश्लोकीमुक्तामाला

**गङ्गा पर्जन्य एवं शशियमदयिते सा विराट् कूर्ममुख्या**
**एभ्यः किञ्चिद् विहीना अनधिगतपदाः शिष्टदेवाश्च सर्वे ।**
**तेभ्यः किञ्चिद् विहीनाऽनलपतिमहिला गङ्गया द्व्यंशहीना**
**तस्याः किञ्चिद् विहीनः सलिलपतिबुधः किञ्चिदूनाश्विभार्या**
**।। ६ ।।**

**(गङ्गापर्जन्यसञ्ज्ञादयः कर्मदेवेभ्यः किञ्चिन्नीचाः)**

गङ्गापर्जन्य एवं शशियमदयिते सा विराट् । सूर्यपत्नी संज्ञा । गङ्गा वरुणभार्या । पर्जन्य आदित्यः । शशिदयिता रोहिणी । यमदयिता श्यामला । विराट् अनिरुद्धभार्या । तेभ्यः पूर्वकक्षोक्तकर्मजतत्समान देवेभ्यः किञ्चिन्नीचाः । मित्रतः मित्रापेक्षया द्विगुणितं अधमाः द्विगुणावराः । अत्र **पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च । द्विगुणा एव** इति छान्दोग्यभाष्यं मानम् ।

**।। इति विंशी कक्ष्या ।।**

**।। अथ एकविंशी कक्ष्या ।।**

**(गङ्गादिभ्यः अनाख्याता देवाः अवराः)**

**कूर्ममुख्या एभ्यः किञ्चिद् विहीना अनधिगतपदाः शिष्टदेवाश्च सर्वे** । एभ्यः उक्तेभ्यः गङ्गापर्जन्यादिभ्यः कूर्ममुख्या देवाः अनधिगतपदाः अप्रसिद्धाधिकाराः उक्तवक्ष्यमाणशिष्टा नवकोट्यन्तर्गताः किञ्चिद् विहीनाः किञ्चिदवरा इत्यर्थः । **तदन्ये तु ततोऽवरा** इत्यनुव्याख्यानं, तदन्ये, अनतिप्रसिद्धाधिकारास्ते ये देवाः पर्जन्यादवरा इति सन्न्याय-रत्नावली चात्र मानम् । **कूर्मो दृष्टो विष्णुपद्यां मयोक्तस्त्वमुत्तमो**

**नास्त्यधिकस्तवेति** । **ऊचे गङ्गामुत्तमाम्** इति तात्पर्यनिर्णये कूर्मस्य पर्जन्यसमानगङ्गावरत्वोक्तिश्चात्र मानम् ।

शतस्थान्तदेवातिरिक्तनवकोट्यन्तर्गता हि देवाः द्विविधाः प्रसिद्धाधिकाराः अप्रसिद्धाधिकाराश्च । तत्राऽद्यानां **तदन्ये उक्तेभ्योऽन्ये देवास्ततः शतान्तर्गतदेवताभ्यः अवराः अवरमनुसमाना** इति सुधायां तदन्ये तु ततोऽवरा इत्यनुव्याख्यानव्याख्यानरूपायां एकादशमनुसमानत्वमुक्तम् । द्वितीयानां **तदन्ये अनतिप्रसिद्धाधिकाराः ये देवास्ते पर्जन्यादवरा** इति सन्न्यायरत्नावल्यां पर्जन्यादवरक्तमुक्तम् । तेन सुधासन्न्यायरत्नावल्योर्न विरोध इति ध्येयम् ।

**।। इत्येकविंशी कक्ष्या ।।**

**।। अथ द्वाविंशी कक्ष्या ।।**

**(स्वाहा अनाख्यातदेवेभ्यः किञ्चिन्नीचा)**

**तेभ्यः किञ्चिद्विहीनाऽनलपतिमहिला गङ्गाया द्व्यंशहीना ।**
अनलपतिमहिला अग्निभार्या स्वाहा । एभ्यो गङ्गाधमकूर्मादिभ्यः किञ्चिन्नीचा। गङ्गया पर्जन्यसमानया द्व्यंशहीना द्विगुणाधमा । **पर्जन्यमित्रशिखिन** इति छान्दोग्यभाष्ये पर्जन्यस्य स्वाधमाद् द्विगुणाधिकत्वोक्तेः । **उषा स्वाहा च पर्जन्य** इति अनुव्याख्याने **ततः पर्जन्य उद्भूतः स्वाहातो मन्त्रदेवतेति** षट्प्रश्नभाष्ये च स्वाहाया एव पर्जन्याधमत्वस्य सूचितत्वात् ।

**।। इति द्वाविंशी कक्ष्या ।।**

**।। अथ त्रयोविंशी कक्ष्या ।।**

**(स्वाहायाः बुधः किञ्चिदवरः)**

**तस्याः किञ्चिद्विहीनः सलिलपतिबुधः ।** जलाख्यकलाभिमानी बुधः तस्याः स्वाहायाः सकाशात् किञ्चिन्न्यूनः । **उदकात्मको बुधस्तस्या** इति षट्प्रश्नभाष्यं अत्र मानम् ।

**।। इति त्रयोविंशी कक्ष्या ।।**

**।। अथ चतुर्विंशी कक्ष्या ।।**

## तारतम्यनवश्लोकी मुक्तामाला

**तस्मादेषाऽग्निपत्न्या दशगुणमधमा भूमिमानी शनिर्वै**
**केचिन्न्यूनोऽत एषः शनित इह तथा पुष्करः कर्मपोऽपि ।**
**किञ्चिन्न्यूनोऽप्युषस्तो दशगुणमधमः कर्मजेभ्यः कलाभ्यः**
**आजानेयाः शतोनास्तत अध ऋषयो ये प्रतीकावलम्बाः**
**।। ७ ।।**

**(अश्विभार्या बुधात् किञ्चिदवरा)**

**किञ्चिदूनाऽश्विभार्या ।। 6 ।।**

**तस्मादेषाऽग्निपत्न्या दशगुणमधमा** । एषा नामाख्यकलाभिमानिनी अश्विभार्या उषा तस्माद् बुधात् किञ्चिदवरा । अग्निपत्न्याः स्वाहायास्तु दशगुणाधमा । **उषा नामात्मिका तत** इति षट्प्रश्नभाष्यम् । **सर्व एते दशोत्तरा** इति छान्दोग्यभाष्यं च क्रमादुक्तेऽर्थे प्रमाणम् ।

**।। इति चतुर्विंशी कक्ष्या ।।**

**।। अथ पञ्चविंशी कक्ष्या ।।**

**(अश्विभार्यायाः शनैश्चरः अवरः)**

**भूमिमानी शनिर्वै किञ्चिन्न्यूनोऽत एषः** । भूम्याख्यकलाभिमानी शनैश्चरः अतः अश्विभार्यायाः किञ्चिन्न्यून इति प्रसिद्धम् । **ततः शनिः पृथिव्यात्मे**ति षट्प्रश्नभाष्योक्तेः ।

**।। इति पञ्चविंशी कक्ष्या ।।**

**।। अथ षड्विंशी कक्ष्या ।।**

**(शनैश्चरात् पुष्करोऽवरः)**

**शनित इह तथा पुष्करः कर्मपोऽपि । किञ्चिन्न्यूनोऽप्युषस्तो दशगुणमधमः ।** कर्माख्यकलाभिमानी पुष्करः इह संसारे मुक्तौ च तथाऽश्विभार्यायाः शनिवत् शनितः शनैश्चरात् किञ्चिन्न्यूनोऽपि, उषस्तः उषसः, दशगुणाधमः । **सर्व एते दशोत्तरा** इति छान्दोग्यभाष्यं **कर्मणो नाम दशोत्तरम्** इति तट्टीका चात्र मानम्, दशगुणाधमत्वे - कर्मात्मा पुष्करस्ततः । क्रमात् प्रत्यवरा एते मुक्ताः सर्वगुणैरपि इति षट्प्रश्नभाष्यं शनेः पुष्करस्याधमत्वे प्रमाणम् । अत्र पुष्करः सर्वदेवावर इति सुधोक्तिः तद्भार्यातिरिक्तपरा । देवाद् **देवस्त्रियो दशांशोना** इत्युदाहृतप्रमाणात् पुष्करभार्या ततोऽधमा ज्ञेया ।

अत्रेदं मन्तव्यम् । तन्त्रसारोक्तमहदादितत्वाभिमानिनामेव तात्विकत्वम्। पर्जन्यमारभ्य पुष्करान्तानां तदभावादतात्विकत्वम् । तत्र भूतानि द्विविधानि। अण्डाद् बाह्यान्यसंसृष्टानि । **असंसृष्टं महानहम् । बुद्धिर्मनः खानि दश मात्रा भूतानि पञ्च चे**त्युक्तेः । तेषां भूदेवी वरुणो वह्निः प्रवहो गणपतिश्च देवताः । अण्डान्तस्थानि संसृष्टानि । भूदेव्यादय एव महाभूतरूपतत्वानाम् अण्डान्तस्थानां पृथिव्या-

दितत्वानामपि देवताः । कठिनत्वेन मेवदिः पृथिव्या अपि देवता । **धरादेवी सप्तमाब्धेर्बाह्योदस्य च वारिप** इति भूदेवीवरुणयोः संसृष्टा संसृष्टदेवतात्वोक्तेः ।

शनिबुधपावकमरीचयस्तु न तत्वदेवाः, किन्तु शरीरोपादानत्वेन तद्भागतया कलारूपाणां भौतिकानां देवताः । एते च शन्यादयः कलारूपेष्वेव तिष्ठन्ति न तत्वरूपेषु । **स्थानेषु त्ववरेषां तु परे सन्त्य-भिमानिन** इति गीतातात्पर्योक्तेः । अधमानामुत्तमाभिमन्यमान-स्थानेऽभावात् । एवं पर्जन्यादीनां पुष्करस्य च तत्त्वाभिमानित्वप्रसक्ति-रेव नास्ति । तदभिमतानामिन्द्रियगोलकादीनां कर्मणश्च तन्त्रसारो-क्ततत्त्वसञ्ज्ञाभावात् ।

**कलाभ्यश्चान्यदेवेभ्यः कर्म प्रत्यवरं यतः ।**
**कलाभ्यः पृथगुक्तं तत्पुष्करः कर्म चोच्यते ।।**

इत्याथर्वणभाष्ये अन्यदेवेभ्यः प्रत्यवरमिति पुष्करस्य तात्त्विकेभ्योऽध-मत्वाभिधानाच्च ।

**।। इति षड्विंशी कक्ष्या ।।**

**।। अथ सप्तविंशी कक्ष्या ।।**

**(कर्मजेभ्यः आजानेयाः शताधमाः)**

अत्र केचित् स्वयूथ्याः । **यथाऽनृतं परिणामतः प्रकृतिप्राकृतं प्रोक्तम्** इत्यादौ भूतान्यपि प्रकृतय उच्यन्त इति तट्टीकावाक्यात् प्राकृतशब्देन प्राकृतभौतिकान्युच्यन्ते । **तथाऽऽजानजाः कर्मजाश्च तात्विकाश्चेत्या-**दिषु तात्विकशब्देनानन्तप्राणिषु विद्यमानानि चतुर्विंशतितत्वानि तत्का-र्याणि च लोमदन्तनखादयः प्राणादिपञ्चावयवा अस्थिमांसादयः सप्त-धातवः कर्मेन्द्रियसाध्यानि कर्माणि अक्षिपक्ष्मचलनादीनि ज्ञानेन्द्रिय-साध्यानि ज्ञानानि मनः कार्याणि स्मृत्यादीनि सर्वाण्युच्यन्ते तदभिमानि-

नश्च मुख्यप्राणमारभ्य पुष्करान्ताः सर्वेऽपि देवास्तात्विकशब्देनोच्यन्ते। सृष्ट्यादौ देवतां गता इत्यादिसृष्टौ वैराजपुरुषादुत्पन्नानां तात्विकदेवतापदप्राप्तेरुक्तत्वात् । कश्यपसृष्टेः पाद्मसृष्टेः प्राक् वैराजपुरुषादुत्पत्तिकाले देवतां गता इत्यर्थकत्वेन पुष्करा तास्तात्विका एव । भारततात्पर्ये च **ततः सनाद्याश्च मरीचिमुख्या देवाश्च सर्व** इति सर्वदेवनामुत्पत्तेरुक्तत्वात् । **तात्त्विकानथ देवान् को वैराजः पुरुषोऽसृजत्** इति मणिमञ्जरीवाक्येऽपि वैराजादुत्पन्नानां पुष्करान्तानामेव तात्विकत्वाभिधानात् । यदि वैराजपुरुषात् चतुर्विंशतितत्वाभिमानिनां शतस्थपर्यन्तानामेवोत्पत्तिस्तर्ह्यैतरेये तद्भाष्ये च **त्वङ् निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयः । नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुरिति ।**

**त्वचश्च लोमनामानो वृक्षनामान एव च ।**
**द्विविधाः पारिजाताद्या बभूवुर्ब्रह्मदेहतः ।।**

इति । उपलक्षणया लोमाभिमानिनां पारिजातादीनां श्वासाभिमानिनां चोत्पत्तिर्नोच्येत । तस्मात् तात्विकशब्देन पुष्करान्ताः सर्वे देवा ग्राह्याः । न च पुष्करान्तानां तात्विकत्वाभ्युपगमे **देवाः पृथगनाख्याताः स्मृताः सात्विकतामसाः** । अतात्विकास्तथाख्याताः स्मृताः सात्विकराजसाः । **सात्विकाः सात्विकाश्चैव तात्विकाः परिकीर्तिता** इति द्वितीयस्कन्धभागवततात्पर्यवचनेन **सादि च तात्विकेभ्योऽन्यत्रेति** प्रमाणलक्षणवचनेन च विरोधः । तत्र तात्विका अतात्विका इति स्फुटोक्तेः । तस्मात् शतस्थान्तानामेव तात्विकत्वं तदितरेषां पर्जन्यादिपुष्करान्तानामतात्विकत्वमिति वाच्यम् ।

**आजानेभ्यः कर्मजांश्च विद्यात् शतगुणाधिकान् ।**
**तत्वाभिमानिनो देवान् विद्यात् शतगुणाधिकान् ।।**

इति स्कान्दवैशाखमाहात्म्यात् तेभ्योऽग्र्याः कर्मदेवताः । ताभ्यश्च तात्विका

देवा इति तैत्तिरीयभाष्याच्च कर्मजानामेव तात्विकत्वमङ्गीकृत्य पुष्करान्ततात्विककक्ष्यानन्तरमतात्विकदेवानां कक्ष्या । तत आजानजादीनां कक्ष्येति वर्णयन्ति ।

**तेषामाकूतं न विजानीमः ।**

एवं तत्वदेवानां कर्मदेवानां च तारतम्यमभिधायेदानीं कर्मजेभ्य आजानजदेवाः शताधमा इत्याह । **कर्मजेभ्यः कलाभ्यः** । आजानेयाः शतोनाः । कर्मजेभ्यो बल्यादिभ्यः। कलाभ्यः पर्जन्यादिपुष्करान्तदेवताभ्यः । आजानेया देवाः शताधमाः । **कार्तवीर्यादिराजभ्यो देवभृत्याः शतावराः । आजानदेवास्ते प्रोक्ता** इति बृहद्भाष्यमत्र मानम् । कार्तवीर्यादिराजापेक्षया शताधमत्वोक्त्या राजसमानकर्मदेवापेक्षया शताधमत्वलाभात् । **अनाख्याता देवता हि जाता देवकुले च याः । आजानदेवतास्ता हि** इति तैत्तिरीयभाष्ये तल्लक्षणमुक्तम् । तत्वदेववत् कर्मदेववच्च नामविशेषैर्वेदे अनाख्याता आजानदेवाः । तथा याः देवकुले जाता देवतास्ताश्चाजानदेवता इति आजानद्वैविध्यम् । एते द्विविधा अपि देवभृत्या एव । देवकुलोत्पन्ना देवाः क इति चेत् । इत्थम् । देवसर्गश्चाष्टविधः

**विबुधाः पितरोऽसुराः ।**
**गन्धर्वाप्सरसः सिद्धाः यक्षरक्षांसि चारणाः ।**
**भूतप्रेतपिशाचाश्च विद्याधाः किन्नरादयः ।।**

इति तृतीयभागवतैकादशाध्याये जातिभेदेन देवानां चतुर्विधत्वात् कथमष्टविधत्वमित्याशङ्कानिरासाय तत्तात्पर्ये -

**प्रोक्ता अष्टविधा देवाः विबुधाः सर्व एव तु ।**
**पितृणां शतमेवात्र असुरास्त्रिंशदेव च ।**
**गन्धर्वाप्सरसां चैव द्विशतं परिकीर्तितम् ।**
**सप्ततिर्यक्षरक्षस्तु त्रिंशच्चारणजातिषु ।**

**शतं सिद्धास्तथाऽन्यासु सप्ततिः सर्वजातिषु ।**
**वैकारिकेषु देवेषु एते वै मुग्धभोगिनः ।।**

इति विभाजकोपाधिपुरस्कारेणाष्टविधत्वमुक्तम् । तद्वाक्यं पित्रादीनां देवत्वे स्पष्टं प्रमाणम् । तत्र मुग्धभोगिन इत्यस्येषद्भोगिन इत्यर्थः । ईषद्भोगश्च यज्ञाङ्गहविरादिभोग एवेति यज्ञभोक्तृत्वरूपं देवलिङ्गं सूचितम् ।

**विद्याधराप्सरोयक्षरक्षोगन्धर्वकिन्नराः।**
**पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ।।**

इत्यमरकोशेनापि विद्याधरादीनां देवा योनयो मूलकारणानि येषां त इति विग्रहेण देवकुलोत्पन्नत्वसिद्धिः । अतो देवकुलोत्पन्नत्वाद् देवत्वाच्च संख्याविशेषनिष्ठाः पित्रादय एवाऽजानदेवा इति सिद्धम् । **कर्मदेवगणा अष्टगन्धर्वास्तत्परे शतम् । आजानदेवा** इति बृहद्भाष्याद् गन्धर्वशतमप्याजानजकक्ष्यायां ग्राह्यम् । पित्रादीनां देवभृत्यत्वं तु -

**सर्वज्ञास्तैः सहाऽराध्या भक्तास्तेष्वन्तरेव च ।**
**नृत्तगानादिकर्तारो वाहनादिकृतस्तथा ।**
**सिद्धसिद्धेति वक्तारश्चारश्चैषां पृथक् पृथक् ।**
**सेवाकरा इति ह्येतैर्भेदैरष्टविधा मताः ।।**

इति तृतीयातात्पर्यगप्रमाणसिद्धम् । अत्र यद्यपि पितॄणां तैः सहाऽराध्या इति देवैः सह पूज्यत्वमेवोक्तम्। तथाऽपि **धर्मराजः पितृपतिः** इत्यादौ पितृत्वोक्तेः पितॄणां यमभृत्यत्वेन देवभृत्यत्वं बहिरेव द्रष्टव्यम् । अन्तरेव हि देवेषु भक्तिं कुर्वन्ति बहिस्तु भृत्यसमाधानाय देवान् द्विषन्तीत्यर्थकेन **भक्तास्तेष्वन्तरेव च** इत्यनेनासुराणां देवभृत्यत्वसिद्धिः । एतदेव मूलीकृत्य असुराः **साधवोऽपि सन्ती**ति सुधायामुक्तम् ।

**नृत्तगानादिकर्तार** इत्यनेन गन्धर्वाप्सरसां देवभृत्यत्वं सिद्ध्यति । आदिपदेन चतुर्विधवाद्यवादनं गृह्यते । चातुर्विध्यं च -

**ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् ।**
**वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् ।**
**चतुर्विधमिदं वाद्यम्**

इत्यमरकोशादवगन्तव्यम् । **वाहनादिकृत** इति यक्षरक्षसां देवभृत्यत्वमुक्तम्। वाहनं शिबिकारथाश्वगजात्मकम् । **सर्वं स्याद्वाहनं यानम्** इत्यमरोक्तेः । तेन शिबिकारथप्रवर्तनाश्वबन्धनदूतत्वादिव्यापारो लक्ष्यते। सिद्धसिद्धेति वक्तार इति सुरकार्यं सिद्धं सिद्धमिति वक्तृत्वेन तेषां देवसेवाकारित्वं लक्ष्यते । **चाराश्चैषां** इत्यनेन **चारणा देवचारका** इति बृहद्भाष्यसिद्धं देवभृत्यत्वमुक्तम् । क्वचित् क्वचित् कार्यविशेषे देवानां सेवाकरा इत्यनेन भूतप्रेतादीनां देवभृत्यत्वमुक्तम् ।

**किन्नरादय** इत्यादिपदेन गुह्यका नागाश्च ग्राह्याः।तत्र गुह्यकानां **यक्षराट् गुह्यकेश्वरः** इति कुबेरस्य गुह्यकस्वामित्वोक्तेः कुबेरभृत्यत्वम्। **वरुणस्यानुगा नागाः** इति तात्पर्यनिर्णये नागानां वरुणभृत्यत्वमिति आलोचनीयं सूरिभिः । तदेवमनाख्यातदेवाः देवकुलोत्पन्ना देवा इत्याजानजदेवद्वैविध्यं सिद्धम् । **सेवका ब्रह्मणश्चैव देवा वेदाश्च सर्वश** इति तात्पर्यनिर्णये सर्वदेवानां ब्रह्मभृत्यत्वं स्पष्टम् ।

अत्रेदमपि द्रष्टव्यम् । अत्र केचित् **'तुम्बुरुप्रमुखा ये च तथोर्वश्यादिका अपि । विश्वामित्रब्रह्मपुत्रान् ऋते चाप्यृषयोऽखिलाः । सूर्यादिभ्योऽधमाश्चैव मन्वादिभ्यस्तथैव च वैवस्वतो मनुर्नित्यं विष्णवावेशी ततोऽधिकः। कार्तवीर्यादिराजभ्यो देवभृत्याः शतावराः। आजानदेवास्ते प्रोक्ता** इति बृहद्भाष्ये तुम्बुरुप्रमुखा एते आजानदेवा इत्याद्यन्वयमङ्गीकृत्य तुम्बुर्वादिगन्धर्वाणां शतं ऊर्वश्यादि शतं नारदादिद्वादशव्यतिरिक्ताः सर्वे ऋषयश्चाऽजानदेवा इत्याहुः ।

**तन्मृग्यम्** । तुम्बुरुप्रमुखा इत्यस्य मन्वादिभ्योऽधमाश्चेत्यव्यवहितवाक्येन अन्वयप्रतीत्या वैवस्वतो मनुरिति श्लोकव्यवहितेनाऽजानदेवा इत्यनेनान्वयायोगात् । **मध्यमा ऋषिगन्धर्वा देवास्तत्रोत्तमा मताः** इति

सूत्रभाष्ये दर्शितत्वेन मध्यमाधिकारित्वेनोक्तानाम् ऋषीणाम् उत्तमाधिकारिभूताजानदेवाधमत्वस्य वक्ष्यमाणत्वेन तत्समत्वायोगाच्च। तस्मादनाख्याता देवा देवकुलोत्पन्ना देवाश्चेति द्विविधा एव देवा आजानदेवाः । ते सर्वे देवभृत्या एवेति प्रागुक्तमेव युक्तम् ।

अत्रेदमपि द्रष्टव्यम् । अग्निपुत्राः शतोत्तरषोडशसहस्रसङ्ख्याकाः कृष्णपत्न्य आजानदेवतासमाः । **पुत्रा अग्नेः पूर्वमासंस्तथे**ति पूर्वजन्मनि अग्निपुत्रत्वमुक्त्वा **आजानदेवैः सर्वगुणैः समास्ताः स्वभावतोऽथेन्दिरावेशतोऽतः । गुणाधिका** इति भारततात्पर्यनिर्णये स्वभावत आजानदेवतासमानत्वस्य लक्ष्म्यावेशप्रयुक्तगुणाधिकत्वस्य चोक्तेः । अत्र पावकातिरिक्ताग्निपुत्राणामेवाऽजानसमानत्वम् । तस्य कर्मदेवसमानत्वस्य उक्तत्वात् । काश्चित्तत्राऽसन् **देवगन्धर्वकन्यास्तासां प्रधाना त्वष्टृपुत्री कशेरुः** इत्युक्तेः कशेरुनाम्ना जातोऽग्निपुत्र इतराग्निपुत्रापेक्षया किञ्चिदुत्तमः ।

पुनरन्यच्च बोध्यम् । अग्निपुत्रस्वरूपाभ्यः शताधिकषोडशसहस्रमहिषीभ्यः **कात्यायनीव्रतधराः स्वपतित्वहेतोः कन्या उवाह भगवान्** इत्युक्तेः कृष्णेनोद्वाहिता नारायणाह्वयदशलक्षगोपालानां जनन्य, **अन्यैर्धृता अयुगबाणशराभिनुन्नाः प्राप्ता निशास्वरमयत्** इत्युक्ता अन्यैरुद्वाहिताः कृष्णभुक्ताश्चेति द्विविधा गोपाङ्गना द्विगुणाधमा इति ।

**कृष्णप्रियाभ्यो गोपीभ्यो भक्तितो द्विगुणाधिकाः ।**
**महिष्योऽष्टौ विना यास्ताः कथिताः कृष्णवल्लभाः।।**

इत्येकादशतात्पर्योदाहृतस्मृतावुक्तार्थस्य सूचनाद् द्विविधा अपि गोपाङ्गनाः **परमाप्सरसः पुरा या** इति निर्णयोक्तेः । ऊर्वश्यादिषडप्सरोव्यतिरिक्ताः अप्सरसः शताधिकषोडशसहस्रवनिताभ्योऽधमा इति आजानजर्ष्यन्तरालिका एवेति द्रष्टव्यम् । षडप्सरसां कर्मदेवकक्ष्यायामुक्तत्वात् शताप्सरसामाजानजकक्ष्यायां उक्तत्वात् । अन्ये त्वप्सरसां शतमित्य-

ल्पाधिकारिगणनपरपञ्चमतात्पर्येऽभिहितशताप्सरसामाजानसाम्य-मङ्गीकृत्य तन्न्यायेन कृष्णाङ्गसङ्गयोग्याप्सरसाम् अपि परमाप्सरस इत्यु-क्तेराजानसाम्यमभ्युपेत्य कृष्णप्रियाभ्य इति वचनस्य -

**देवादिष्वेषु सर्वेषु प्रोक्ता अपि विशेषिणः ।**
**पञ्चाशतो दशांशाद्वा स्वस्वजात्यां परस्परम् ।।**

इति बृहद्भाष्योक्तन्यायेनाऽजानतुल्येष्वपि द्व्यंशन्यूनाधिक्यं सम्भ-वतीत्यभिप्राय इति वर्णयन्ति । **अप्रधानानि च गुणा निगद्यन्त** इति गीताभाष्याद् गुणशब्दस्य । प्रधानवाचित्वात् द्विगुणाधिका इत्यस्य द्व्यंशाधिका इत्यर्थसम्भवात् इति । तथा च कतिपयाप्सरसः कर्मजसमाः तदन्याः शतसङ्ख्या आजानजसमाः । तदन्याः कृष्णप्रियारूपाप्सरसः शिष्टाश्चाऽजानेभ्यो न्यूना इति विवेक्तव्यमिति सम्प्रदायः ।

**।। इति सप्तविंशी आजानदेवकक्षा ।।**

**।। अथ अष्टाविंशी कक्ष्या ।।**

**(आजानेयदेवेभ्यः ऋषयः प्रतीकावलम्बाः शतावराः)**

शतर्षीणां व्याप्तदर्शित्वेनोक्तत्वादन्तर्दर्शिनः सर्वेऽप्यृषयः आजान-देवापेक्षया शतगुणाधमा इत्याह तत अध ऋषयो ये प्रतीकावलम्बाः ।

**नवकोट्यस्तु देवानामृषीणां शतकोटयः ।**
**नारायणायनाः सर्वे ये केचित् तत्परायणाः ।।**

इति षष्ठस्कन्धतात्पर्याद् ऋषयस्तावच्छतकोटिसङ्ख्याः ।

**ज्ञात्वा ज्ञात्वा हरिं ध्यात्वा स्वान्तः पश्यन्ति केचन ।**
**ऋषयः केचिदृषयो नारदाद्या बहिस्त्वपीति ।।**

गीतातात्पर्ये नारदादीनामन्तर्बहिश्च व्याप्तिदर्शनं उक्तम्। तत एव सूत्रभाष्ये ऋषीणां शतमेव चेत्यप्रतीकालम्बनत्वेनोक्ताः । **तेषामृष्या-**

**दयः क्रमश ऊनगुणाः शतांशादिति** तात्पर्यनिर्णये सर्वदेवाधमत्वोक्त्या तदन्तर्गताजानदेवाधमत्वमपि सिध्यति । तदिदमाजानदेवेभ्यः शतगुणाधमत्वं न तावद् व्याप्तदर्शिनामृषीणां युक्तम् । तदन्तर्गतनारदादिदशर्षीणां यथायथं तात्विककक्ष्यास्वेवोक्तत्वेन आजानजाम् अधमत्वायोगात् । तदन्तर्गतच्यवनादिनवतेश्च कर्मदेवसमानतयोक्तत्वात् । अतः परिशेषादन्तर्दर्शिनां शतोनशतकोटिसङ्ख्यानामृषीणामेव आजानदेवाधमत्वं सिध्यति । **प्रतीकं देह उद्दिष्टो येषां तत्रैव दर्शनम्** । ते प्रतीकावलम्बाः । **ऋषयोऽन्तःप्रकाशा** इत्युक्ताः शतोनशतकोटिऋषय आजानजानन्तरकक्षास्थाः । **'वैष्णवैरपि मर्त्यैर्यत् कृतं शतगुणं ततः। गान्धर्वं कर्म तस्माच्च पितृभिर्मुनिभिस्ततः। देवशक्रशिवब्रह्मकृतं तस्मात् क्रमेण च । शतोत्तरमिति ज्ञेयम्'** इति तात्पर्यनिर्णये त्रिंशेऽध्याये पितृकृतान्मुनिकृतं मुनिकृताद् देवकृतं कर्म शतोत्तरमित्यभिहितम् । तेन तत्कर्तॄणां शताधिकत्वं सिध्यति । कर्तॄणां तारतम्याभावे तत्कृतकर्मणां शतोत्तरत्वायोगात् । **स्वाधिकाराधिको यत्नः कथञ्चिन्नोपपद्यते** इति न्यायविवरणस्मृतौ योग्यतातिरेकेण साधनानुष्ठाननिषेधात् । **द्वात्रिंशल्लक्षणैः सम्यग्युक्ता वायुत्वयोग्यकाः** इत्यादिना बृहद्भाष्ये देवानां लक्षणमुक्त्वा **अष्टकादृषयः प्रोक्ताः** इत्यनेन ऋषीणां देवापेक्षया न्यूनलक्षणाभिधानात् । ऋषीणां सर्वदेवाधमत्वं ज्ञायते । न च **देवेष्ववरवद् ज्ञेयम् ऋषीणां चक्रवर्तिनाम्** इति गीतातात्पर्यविरोधः । व्याप्तदर्शिनामृषीणां चक्रवर्तिनामेव देवावरसमानलक्षणाभिधानात् । तेषां च कर्मजदेवतातुल्यत्वात् । **मनुष्येभ्यो गन्धर्वाणां गन्धर्वेभ्य ऋषीणां ऋषिभ्यो देवानां देवेभ्य इन्द्रस्य** इत्युपासनापादीयसूत्रभाष्योदाहृतश्रुतेश्च । **देवर्षिपितृपनरा** इति तत्वसङ्ख्यानाच्च देवानन्तरमृषिकक्ष्येति सिद्धम् ।

**।। इत्यष्टाविंशी ऋषिकक्ष्या ।।**

**।। अथ एकोनविंशी कक्ष्या ।।**

## तारतम्यनवश्लोकीमुक्तामाला

**तद्विप्रेभ्यः शताधश्चिरपितृनिकरा देवगन्धर्वसङ्घा**
**स्तेभ्यस्तावद् द्विनीचाः शतगुणमवरा मर्त्यगन्धर्वसंज्ञाः ।**
**तेभ्यो भूचक्रपालाः शतगुणमधमाः भूमिपेभ्यो मनुष्या-**
**वर्णाचाराश्रमेताः शतगुणमधमा विष्णुभक्त्युच्चयेताः ।। ८ ।।**

**(ऋषिभ्यः पितरः शतावराः)**

तद्विप्रेभ्यः शताधश्चिरपितृनिकराः । **पितृभिर्मुनिभिस्तथा** इत्युक्तार्थापत्या **देवर्षिपितृपनरा** इति तत्वसङ्ख्याने देवपितृमध्ये ऋषिगणनाच्चान्तर्दर्श्यृषिभ्यः पितरः शताधमा इति ज्ञायते ।

**अन्येभ्यस्तु विमुक्तेभ्य आनन्दश्चक्रवर्तिनाम् ।**
**मुक्तानां हि शतोद्रिक्तः पितृणां तेभ्य एव च ।**
**तेभ्योऽप्यृषीणां मुक्तानाम्**

इति बृहद्भाष्ये चिरपित्रानन्दापेक्षया मुक्तानामृषीणामानन्दः शतोद्रिक्त इत्युक्तत्वेन पितृणामृष्यपेक्षया शतावरत्वलाभात् । तस्माद्दशोत्तरशतव्यतिरिक्ताः सर्वे पितरः ऋष्यपेक्षया शताधस्ताच्छताधमा इत्यर्थः । अत्र पितृत्रयं सोमपानार्हशतस्थदेवतासमानमित्युक्तम् । पितृसप्तकं कर्मदेवता सममुक्तम् । **पितृणां शतमेवात्र** इति तृतीयभागवततात्पर्योक्तरीत्या पितृशतमाजानदेवत्वेन उक्तम् । अतस्तद् व्यावृत्यै दशोत्तरशतव्यतिरिक्ता इति विशेषणमभिहितमिति द्रष्टव्यम् । विश्वामित्रो ब्रह्मपुत्रसमो मुनिरुदाहृतः। आचार्यः पितृणां चासौ पितृभिः सह पठ्यत इति बृहद्भाष्यात् विश्वामित्रस्यपितृत्वविवक्षायामेकादशोत्तरशतव्यतिरिक्ता इति विशेषणं द्रष्टव्यम् ।

**।। इत्येकोनत्रिंशी कक्ष्या ।।**

**।। अथ त्रिंशी कक्ष्या ।।**

**(चिरपितृभ्यः देवगन्धर्वाः अवराः)**

**देवगन्धर्वसङ्घास्तेभ्यस्तावद् द्विनीचाः ।** अष्टोत्तरशतातिरिक्ताः सर्वेऽपि गन्धर्वास्तेभ्यश्चिरपितृभ्यस्तावद् द्विनीचाः शतगुणा इत्यर्थः ।

अत्र तु बर्वादिगन्धर्वाष्टकं कर्मदेवसमानमित्युक्तम् । तद्व्यतिरिक्त-गन्धर्वशतं त्वाजानजकक्षायां गृहीतम् । अतस्तद्व्यावृत्यै अष्टोत्तर-शतगन्धर्वातिरिक्ता इति विशेषणम् । अत्र प्रमाणं तु -

**कर्मदेवगणा अष्टगन्धर्वास्तत्परे शतम् ।**
**आजानदेवास्तेभ्योऽपि पितृभ्यश्च शतावराः ।**
**स्वमुखेनैव देवैर्य आज्ञाप्याः सर्वदा गणाः ।**
**आख्याता देवगन्धर्वाः**

इति बृहद्भाष्यम् ।

**।। इति त्रिंशी कक्षा ।।**

**।। अथ एकत्रिंशी कक्ष्या ।।**

**(देवगन्धर्वेभ्यः मनुष्यगन्धर्वाः शतावराः)**

**शतगुणमवरा मर्त्यगन्धर्वसंज्ञाः** । अत्र तेभ्य इत्यनुवर्तते । तेभ्यो देवगन्धर्वेभ्यः मर्त्यगन्धर्वसंज्ञाः मनुष्यगन्धर्वा इति संज्ञा नाम येषां ते। शतगुणमवराः शतावरा इत्यर्थः । **ये त्वन्यमुखगोचराः । मानुषास्ते तु गन्धर्वास्तेभ्यस्ते च शतावराः** इति बृहद्भाष्यमत्र मानम् ।

**।। इत्येकत्रिंशी कक्ष्या ।।**

**।। अथ द्व्युत्तरत्रिंशी कक्ष्या ।।**

**(मनुष्यगन्धर्वेभ्यः चक्रपालाः अधमाः)**

**तेभ्यो भूचक्रपालाः शतगुणमधमाः** । तेभ्यो मनुष्यगन्धर्वेभ्यो भूचक्रपालाः क्षितिपाः शतावराः । अत्र व्याप्तदर्शिराजव्यतिरिक्ता एव क्षितिपा मनुष्यगन्धर्वेभ्योऽवरा इति द्रष्टव्यम् । कार्तवीर्यप्रियव्रतादि-राजशतस्य कर्मदेवसमानत्वेनैकोनविंशतिकक्ष्यायामुक्तत्वात् । अत्र -

**भूपा मनुष्यगन्धर्वा देवाः पितर एव च ।**
**आजानेयाः कर्मदेवास्तत्वरूपाः पुरन्दरः ।**
**शिवो विरिञ्च इत्येते क्रमात् शतगुणोत्तरा**

इति गीतातात्पर्यं मानम् । **मानुषा वर्णभेदेन तथैवाऽश्रमभेदतः । क्षितिपा मनुष्यगन्धर्वा** इत्यादिसूत्रभाष्यं च ।

**।। इतिद्व्युत्तरत्रिंशी कक्ष्या ।।**

**।। अथ त्र्युत्तरत्रिंशी कक्ष्या ।।**

**(चक्रवर्तिभ्यः मनुष्योत्तमाः शतावराः)**

**भूमिपेभ्यो मनुष्या वर्णाचाराश्रमेताः शतगुणमधमा विष्णुभक्त्यु-च्चयेताः** । भूमिपेभ्यः क्षितिपेभ्यः मनुष्या मनुष्योत्तमाः शतावराः । अत्र -

**अन्येभ्यस्तु विमुक्तेभ्य आनन्दश्चक्रवर्तिनाम् ।**
**मुक्तानां हि शतोद्रिक्तः**

इति बृहद्भाष्यम् । **मुक्तावपि तदन्यं ये भूपाच्छतगुणावराः** इति गीतातात्पर्यं, अन्ये मनुष्योत्तमा इति तट्टीका न्यायदीपिका च मानम् । विष्णौ माहात्म्यज्ञानपूर्वकस्नेहोत्कर्षेणेता युक्ताः मनुष्योत्तमा अपि ब्रह्म-क्षत्रादिवर्णभेदेन तारतम्यवन्तः ।

**'जम्बूद्वीपवती मही यद्वशे सुदृढा विद्वान् युवा चिन्तादिवर्जितः ।**
**तत्सौख्यतुल्यसुखयुक् मुक्तौ क्षितिप ईरितः ।**
**क्षितिपाच्च शतांशोना ईरिता मानुषोत्तमाः ।**
**जम्बूद्वीपवती राजा हृष्टश्च सततं स्वतः ।**
**स्वेष्टस्त्रीपुत्रभृत्याद्यैः सम्भृतो वैरिवर्जितः ।**
**यस्तस्य यत् सुखं लोके मुक्तौ विप्रस्य तादृशम् ।**
**विप्रादिवर्णभेदेन तथैवाऽश्रमभेदतः ।**
**तेष्वपि ह्युच्चनीचत्वं वेदवाक्ये प्रकीर्तितम् ।**
**ब्राह्मणः सर्वतः श्रेष्ठस्तुर्यांशस्तस्य बाहुजः ।**
**वैश्यस्तु तत्पञ्चमांशः षष्ठांशस्तस्य शूद्रजः ।**
**आनुलोम्यप्रातिलोम्याद् जातीनां क्रमतः सुखम् ।**
**वंशैर्दीर्घा षण्णवत्या आशीत्या भूः सुविस्तृता ।**
**क्षेत्रमित्युच्यते प्राज्ञैर्वंशस्तु दशहस्तकः ।**
**पञ्चोत्तरैर्विंशतिभिः सहस्राणां च षट्शतैः ।**
**क्षेत्रैर्युतं च यत्स्थानं यस्य स्यान्निरुपद्रवम् ।**
**सुखं तदधिकं यस्य स्याद्यदा स्वकमीरितम् ।**
**प्रतिलोमेषु हीनो यस्तस्य स्यादन्त्यजस्य तु ।।'**

इति विष्णुरहस्यानुसारेणेदं बोध्यम् । स्मृत्यर्थस्तु जातीनां विप्रत्वादि-जातिचतुष्टयव्यतिरिक्तसूतादिविलोमजातीनामानुलोम्यनिमित्ततारतम्येन सुखं तत्र प्रतिलोमजात्यपेक्षया अनुलोमजातौ सुखविशेषः । विप्रा-द्युत्तमजातिपुरुषेभ्यः क्षत्रियाद्यधमस्त्रीषूत्पन्नप्रजासु या जातिः सा प्रातिलोम्यजातिः। प्रतिलोमजातिहीनस्यान्त्यजस्य सुखस्य परिमाणं वक्तुमाह - **वंशैर्दीर्घेति** । षण्णवत्या षडधिकनवत्या । षडधिकनवति-सङ्ख्याकैर्वंशैर्दीर्घाकारेण परिमिता या भूरेखाऽशीतिसङ्ख्याकैर्वंशैर्विस्तृता सती क्षेत्रेत्युच्यते । वंशः क इत्यत आह - **वंशस्त्विति** । दशहस्ताः परिमाणमस्येति दशहस्तकः । सहस्राणां पञ्चोत्तरैर्विंशतिभिः । षट्-

**शतैश्च षट्शताधिकपञ्चविंशत्सहस्रसङ्ख्याकैः क्षेत्रैरित्यन्वयः । यस्य पुरुषस्यैतावत् स्थानं निरुपद्रवं राजचोराद्युपद्रवशून्यं स्वकीयं यदा स्यात् तदधिकस्यैतत्क्षेत्रसमुदायवतो यत्सुखं स्यात् । तत्सुखं प्रतिलोमहीनस्य मुक्तान्त्यजस्य स्यादिति भाव इति ।** त्रिवर्णा अपि यतिवानप्रस्थ-ब्रह्मचारिगृहस्थभेदेन तारतम्यवन्तः। **मानुषा वर्णभेदेन तथैवाऽश्रमभेदतः** इति सूत्रभाष्योक्तेः । यतयोऽपि परमहंस हंस बहूदक कुटीचकभेदेन तारतम्यवन्तः । तथा गीतातात्पर्योक्तेः ।

**।। इति त्र्युत्तरत्रिंशी कक्ष्या ।।**

अत्र सर्वत्रेदं बोध्यम् । नीचापेक्षयोत्तमेषु ज्ञानादिगुणानां सङ्ख्या-परिमाणाभ्यां शतगुणाद्युत्तमत्वेऽपि अंशवैचित्र्यस्पष्टताभिराधिक्यम् अस्ति । अत्र सङ्ख्याधिक्यं नाम तावदानन्दाख्यो गुणो नीचेषु एक-जातीयविषयव्यङ्ग्यो यावत्सङ्ख्याको वर्तते तादृशा एव तज्जाती-यानेकविषयव्यङ्ग्यतया बहुसङ्ख्याका उत्तमेष्वानन्दा वर्तन्ते इति । एवं ज्ञानादिगुणान्तरेष्वपि, परिमाणाधिक्यं नाम,

**विषयेभ्योऽधिकसुखव्यक्तिः प्राकाम्यमिष्यते ।**
**इतरेषां सुराणां तु निःसीमानन्दभोजनम् ।।**

इत्येकादशतात्पर्ये प्राकाम्यसिद्धिरहितस्य कदलीफलादिविषयभोगा-दिना यावत्सुखव्यक्तिस्तदपेक्षया तत्सिद्धिमतस्तस्मादेककदलीफल-भोगादधिकसुखव्यक्तिः । तत्सिद्धिमान् यदि देवस्तर्हि तस्मादेव निःसीमानन्दव्यक्तिः इत्युच्यमानत्वात् परिमाणोत्कर्ष उपपद्यते । प्रमेय-दीपिकायां **मय्यनन्तगुण** इत्यत्र सङ्ख्यापरिमाणाभ्यां गुणानामानन्त्यम् अनेनाऽचष्ट इत्युक्तेः सङ्ख्याधिक्यं नाप्रामाणिकम् । न च गुणे गुणा-योगः । **अस्मत्पक्षे गुणाद्याश्च तद्वन्तो हि विशेषत** इत्यनुव्याख्याने तदु-पपादनात् । अंशाधिक्यं नाम यथा तूलपिण्डसमपरिमाणस्यापि वज्र-मणेरतिनिबिडतया स्थितत्वेनांशाधिक्यं दृश्यते । तथा रुद्राद्यानन्दा-

पेक्षया सरस्वत्याद्यानन्दादेः शतगुणितपरिमाणाद्याधिक्येऽपि अंशानां न शतादिगुणितत्वेनोत्तमत्वमात्रम्, अपि तु ततोऽप्यनन्तगुणितत्वमिति । न चाद्रव्यत्वाद् गुणानामंशाभावः । **तस्माद् गुणादिकमपि नास्त्यनंशतया क्वचित्** इति गीतातात्पर्ये समाहितत्वात् । **वैचित्र्याधिक्यं नाम**, तत्तद्विषयव्यङ्ग्यमोदप्रमोदमुत्प्रमुत्प्रियादिषु प्रत्येकम् अवान्तरवैचित्र्याधिक्यम् । मोदो ह्यप्रकृष्टविषयोत्थः । अप्रकृष्टविषये वैचित्र्यान्मोदवैचित्र्यम् । प्रकृष्टविषयोत्थो हि प्रमोदः । प्रकृष्टविषये वैचित्र्यात् प्रमोदवैचित्र्यम् इत्याद्यवान्तरवैचित्र्याधिक्यम् । एतदपि शिवाद्यानन्दापेक्षया सरस्वत्यानन्दादेरनन्तत्वमेव । यथोक्तं - **प्रवाहतस्तु वृद्धिर्वा ह्रासो वा नैव कुत्रचित् । भोगानां तु विशेषेषु वैचित्र्यं लभ्यते क्वचित्** इति सूत्रभाष्ये भगवदानन्द इव सर्वथा ह्रासाभावो न मन्तव्यः। किन्तु भोगानां विशेषेषु सत्सु तद्विशेषतदल्पत्वादिभिः मोदप्रमोदमुदाद्यानन्दवैचित्र्यविशेषा व्यज्यन्त इति । **स्फुटताधिक्यं तु 'परिमाणे शतगुणेऽप्यानन्दस्फुटतावशात् । यथा दीपाच्छतगुणाऽप्यग्निज्वाला न दीपवत् । स्फुटीभवद्यथैवाग्निर्बहुलोऽपि न सूर्यवत्'** इत्यादितैत्तिरीयभाष्ये ह्युपपादितमनुसन्धेयम् । तस्माद् 'उमा यावदनन्तांशान्' इत्यनुव्याख्याने ।

**एते समा व्यास्या ब्रह्मेरौ गुणतोऽधिकौ ।**
**अनन्ताश्च गुणा ह्येषामन्यजीवव्यपेक्षया ।**
**तेभ्योऽप्यनन्ता विष्णोस्तु**

इति बृहद्भाष्ये ।

**मध्यमो वायुरेवैक उत्तमः केवलो हरिः ।**
**सर्वशब्दोदितौ तस्मादेतौ द्वावेव नापरः ।**
**अन्ये चैव मितैः शब्दैरुच्यन्ते नामितैः क्वचित् ।**
**श्रीरप्यखिलवेदोक्ता विष्णुवन्न तु मुख्यतः ।**
**तस्मादमितनामानावपि तौ मितनामवत् ।**

**श्रीश्च वायुश्च विष्णुस्तु मुख्योक्तेरमिताभिधः ।**
**अनन्तनामवत्त्वाच्च सोऽनन्तगुण ईरितः ।।**

इत्यैतरेयभाष्ये च लक्ष्म्यादेर्यदनन्तगुणत्वाभिधानं तद् ऋग्भाष्यबृहद्भाष्यादौ कोटिशतदशाद्याधिक्योक्तेरशेषगुणेषु स्फुटतापेक्षयैवानन्तगुणत्वपरमिति मन्तव्यम् ।

**यथाऽनन्दे तथा ज्ञाने विष्णुभक्तौ बलादिके ।**
**सर्वैर्गुणैः शतगुणा क्रमेणोक्तेन तेऽखिलाः ।।**

इति पूर्ववाक्येन **उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटा** इत्युत्तरवाक्ये चाऽनन्दाद्यशेषगुणानामाधिक्यस्योक्तेर्लक्ष्मीब्रह्मसरस्वतीरुद्रोमानां ज्ञानादिसर्वगुणैरपि कोटिशतदशांशन्यूनत्वमेव । स्फुटत्वापेक्षया अनन्तन्यूनत्वोक्तिः इति सिद्धम् ।। ३३ ।।

मनुष्योत्तमानन्तरकक्ष्यामाह ।

## तारतम्यनवश्लोकीमुक्तामाला

**एकानन्दादिरूपप्रमितगणयुता उत्तमा ये मनुष्या-**
**स्तेभ्यो हीनाः सचित्ताः पशुविहगमुखा जङ्गमा चित्तहीनाः ।**
**तेभ्योऽधस्तात् सुखाद्यैर्महितगुणगणैः स्थावरास्तैरुपास्यं**
**वन्दे नारायणं तं सकलसुरगणान् तद्गुरून् मद्गुरूंश्च ।। ९ ।।**

**।। अथ चतुस्त्रिंशी कक्ष्या ।।**

**(मनुष्योत्तमेभ्यः पशुविहगमुखाः जङ्गमाः अवराः)**

**एकानन्दादिरूपप्रमितगणयुता उत्तमा ये मनुष्यास्तेभ्यो हीनाः सचित्ताः पशुविहगमुखा जङ्गमाः** इति ।

**एकानन्दस्वरूपोऽसौ मानुषो मुक्त इष्यते ।**
**तस्माच्छतगुणानन्दा गन्धर्वा मानुषात्मकाः ।।**

इत्युक्तप्रकारेणैकानन्दैकगुणोपासनायुताः **आत्मेत्येव परं देवमुपास्य हरिमव्ययम्** इत्यादिप्रमाणप्रमितगुणोपेता ये मनुष्योत्तमास्तेभ्यः सचित्ताः चित्तव्यापारसहिता जङ्गमाः हीनाः अवरा इत्यर्थः।

**गजाद्यास्त्वधमास्तेभ्यस्तेभ्यश्चाश्वास्ततो मृगाः ।**
**पशवश्च ततः पक्षिजातयो जलजा अपि ।**
**ततः क्षुद्रा जन्तवस्तु ततो वृक्षास्ततो लताः ।**
**गुल्मास्ततश्चौषधयस्ततस्तृणमुखाः क्रमात् ।**
**द्विगुणावरा**

इति विष्णुरहस्यवाक्यं मानम् । वक्ष्यमाणकक्ष्यायां च **चित्तं प्राणभृत्सु प्राणभृत्स्वेवाविस्तरामात्मे**त्यैतरेयश्रुतिश्च अत्र मानम् । प्राणभृत्सु चेष्टावत्सु पश्वादिषु चित्तं दृश्यते तस्मादात्मा प्राणभृत्स्वेवा विस्तर-मोषध्यादिभ्यो विशेषेणाऽविर्भवतीति श्रुत्यर्थः ।

**।। इति चतुस्त्रिंशी कक्ष्या ।।**

**।। अथ पञ्चत्रिंशी कक्ष्या ।।**

**(जङ्गममुक्तेभ्यः स्थावराः किञ्चिदवराः)**

चित्तहीनाः । **तेभ्योधस्तात्सुखाद्यैर्महितगुणगणैः स्थावरा** इति । चित्तहीनाः चित्तव्यापारशून्याः स्थावराः, पश्वादिजङ्गमेभ्यः सुखाद्यैः पूज्यैर्गुणैर्विष्णुरहस्योक्तरीत्या द्विगुणाधमा इत्यर्थः । **न चित्तमितरेषु** इति श्रुतिरेव प्रमाणम् । **इतरेषु** ओषधिवनस्पतिषु रसो दृश्यत इति प्रकृतेषु ओषध्यादिषु रस एव न चित्तं चित्तं न दृश्यते । अतो रसरहितेभ्यः शिलादिभ्योऽवराः । चित्तवद्भ्यः पश्वादिभ्योऽवरा इति तदर्थः ।

**श्रीश्च वायुश्च विष्णुस्तु मुख्योक्तेरमिताभिधः ।**
**अनन्तनामवत्त्वाच्च सोऽनन्तगुण ईरितः ।।**

इत्यैतरेयभाष्ये च लक्ष्म्यादेर्यदनन्तगुणत्वाभिधानं तद् ऋग्भाष्यबृहद्भाष्यादौ कोटिशतदशाद्याधिक्योक्तेरशेषगुणेषु स्फुटतापेक्षयैवानन्तगुणत्वपरमिति मन्तव्यम् ।

**यथाऽनन्दे तथा ज्ञाने विष्णुभक्तौ बलादिके ।**
**सर्वैर्गुणैः शतगुणा क्रमेणोक्तेन तेऽखिलाः ।।**

इति पूर्ववाक्येन **उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटा** इत्युत्तरवाक्ये चाऽनन्दाद्यशेषगुणानामाधिक्यस्योक्तेर्लक्ष्मीब्रह्मसरस्वतीरुद्रोमानां ज्ञानादिसर्वगुणैरपि कोटिशतदशांशन्यूनत्वमेव । स्फुटत्वापेक्षया अनन्तन्यूनत्वोक्तिः इति सिद्धम् ।। ३३ ।।

मनुष्योत्तमानन्तरकक्ष्यामाह ।

## तारतम्यनवश्लोकीमुक्तामाला

**एकानन्दादिरूपप्रमितगणयुता उत्तमा ये मनुष्या-**
**स्तेभ्यो हीनाः सचित्ताः पशुविहगमुखा जङ्गमा चित्तहीनाः ।**
**तेभ्योऽधस्तात् सुखाद्यैर्महितगुणगणैः स्थावरास्तैरुपास्यं**
**वन्दे नारायणं तं सकलसुरगणान् तद्गुरून् मद्गुरूंश्च ।। ९ ।।**

**।। अथ चतुस्त्रिंशी कक्ष्या ।।**

**(मनुष्योत्तमेभ्यः पशुविहगमुखाः जङ्गमाः अवराः)**

**एकानन्दादिरूपप्रमितगणयुता उत्तमा ये मनुष्यास्तेभ्यो हीनाः सचित्ताः पशुविहगमुखा जङ्गमाः** इति ।

**एकानन्दस्वरूपोऽसौ मानुषो मुक्त इष्यते ।**
**तस्माच्छतगुणानन्दा गन्धर्वा मानुषात्मकाः ।।**

इत्युक्तप्रकारेणैकानन्दैकगुणोपासनायुताः **आत्मेत्येव परं देवमुपास्य हरिमव्ययम्** इत्यादिप्रमाणप्रमितगुणोपेता ये मनुष्योत्तमास्तेभ्यः सचित्ताः चित्तव्यापारसहिता जङ्गमाः हीनाः अवरा इत्यर्थः।

**गजाद्यास्त्वधमास्तेभ्यस्तेभ्यश्चाश्वास्ततो मृगाः ।**
**पशवश्च ततः पक्षिजातयो जलजा अपि ।**
**ततः क्षुद्रा जन्तवस्तु ततो वृक्षास्ततो लताः ।**
**गुल्मास्ततश्चौषधयस्ततस्तृणमुखाः क्रमात् ।**
**द्विगुणावरा**

इति विष्णुरहस्यवाक्यं मानम् । वक्ष्यमाणकक्ष्यायां च **चित्तं प्राणभृत्सु प्राणभृत्स्वेवाविस्तरामात्मे**त्यैतरेयश्रुतिश्च अत्र मानम् । प्राणभृत्सु चेष्टावत्सु पश्वादिषु चित्तं दृश्यते तस्मादात्मा प्राणभृत्स्वेवा विस्तर-मोषध्यादिभ्यो विशेषेणाऽविर्भवतीति श्रुत्यर्थः ।

**।। इति चतुस्त्रिंशी कक्ष्या ।।**

**।। अथ पञ्चत्रिंशी कक्ष्या ।।**

**(जङ्गममुक्तेभ्यः स्थावराः किञ्चिदवराः)**

चित्तहीनाः । **तेभ्योधस्तात्सुखाद्यैर्महितगुणगणैः स्थावरा** इति । चित्तहीनाः चित्तव्यापारशून्याः स्थावराः, पश्वादिजङ्गमेभ्यः सुखाद्यैः पूज्यैर्गुणैर्विष्णुरहस्योक्तरीत्या द्विगुणाधमा इत्यर्थः । **न चित्तमितरेषु** इति श्रुतिरेव प्रमाणम् । **इतरेषु** ओषधिवनस्पतिषु रसो दृश्यत इति प्रकृतेषु ओषध्यादिषु रस एव न चित्तं चित्तं न दृश्यते । अतो रसरहितेभ्यः शिलादिभ्योऽवराः । चित्तवद्भ्यः पश्वादिभ्योऽवरा इति तदर्थः ।

**तत्र स्थावरमुक्तेभ्योऽवरा जङ्गममुक्तिगाः ।**
**तेभ्यो मानुषमुक्ताश्च**

इति तृतीयभागवततात्पर्यमुक्तकक्ष्याद्वये प्रमाणम् ।

**।। इति पञ्चत्रिंशी कक्ष्या ।।**

एवं हरगरुडसुरवरदिवाकरनिशाकरपुरस्सरामरवरैरनारतमाराधित चारुतरचरणसरोरुहः सकलसज्जनसमूहमानससन्ततान्धतमससन्तति विध्वंसनप्रचण्डमार्ताण्डो मायावादिमुखवादिमहामत्तमातङ्गमस्तक-विदारणसिंहराजः स्वभक्ताघौघमहाकक्षक्षपणदक्षाशुशुक्षणिः भगव-दाज्ञया भुवि गृहीतमनुष्यविग्रहः साक्षान्मरुद्देवः श्रीमदानन्दतीर्थमुनि-रनुव्याख्यानादौ देवताक्रमनिबन्धं चकार -

**उषा स्वाहा च पर्जन्यो मित्रोऽग्निर्वरुणो विधुः ।**
**प्रवहोऽनिरुद्ध इन्द्रोमे रुद्रो वाणी च मारुतः ।**
**उत्तरोत्तरतस्त्वेते गुणैः सर्वैश्च मुक्तिगाः ।**
**सूर्यधर्मौ यथासोमो मनुर्दक्षो बृहस्पतिः ।**
**शची रतिश्चानिरुद्ध समास्तारा च मित्रवत् ।**
**सोमवच्छतरूपा तु प्रसूतिर्वह्निवद् विराट् ।**
**पर्जन्यवद् वारुणी च तथा सञ्ज्ञा च रोहिणी ।**
**धार्मी च मित्रवत्त्वेव प्रावही परिकीर्तिता ।**
**मित्रपर्जन्यमध्यस्थावश्विनौ विघ्नवित्तपौ ।**
**भृगुरग्निसमो मित्रतन्मध्ये ब्रह्मपुत्रकाः ।**
**वरुणाग्न्यन्तरा तत्र नारदः प्राय इन्द्रवत् ।**
**कामः सुपर्णी चोमावद् वीन्द्रो रुद्रवदीरितः ।**
**निर्ऋतिर्मित्रसदृशो विश्वामित्रः कसूनुवत् ।**
**वैवस्वतो मनुश्चाश्विपश्चादन्ये ततोऽवराः ।**
**च्यवनोचथ्यवैन्याश्च शशबिन्दुश्च हैहयः ।**

**तद्वच्च विप्रराजन्यविशेषोऽत्रापि कश्चन ।**
**तद्वत् प्रियव्रतश्चापि तदन्याः शतदेवताः ।**
**पर्जन्यमित्रान्तराले तदन्ये तु ततोऽवराः ।**
**एतेभ्योऽभ्यधिका श्रीस्तु सदामुक्ता विशेषतः ।**
**तत्समो नास्ति परमो हरिरेव न चापरः ।**
**संहितायां बृहत्यां तु स्वयं भगवतोदितम् ।**
**तदेतदखिलं प्राण आहङ्कारिक एव च ।**
**इन्द्रादनन्तर**

इत्युपासनापादे । एवमृग्भाष्यबृहच्छान्दोग्यभाष्यादिषु अपि -

**अस्मादसावुच्च इति क्रमस्यान्तगतं हरिम् ।**
**एकमेवेति ये विद्युस्ते ह्येकान्तिन ईरिताः ।।**

इति छान्दोग्यभाष्ये ।

**पञ्चरात्रविदो मुख्या यथाक्रमपरा नृप ।**
**एकान्तभावोपगता वासुदेवं विशन्ति ते ।।**

इत्यनुव्याख्याने ।

**तारतम्यं ततो ज्ञेयं सर्वोच्चत्वं हरेस्तथा ।**
**एतद्विना न कस्यापि विमुक्तिः स्यात् कथञ्चन ।।**

इति श्रीमद्भारततात्पर्यनिर्णये च तत्र तत्र देवानां यथावद् गुणतारतम्यज्ञानपूर्वकं विष्णोः पारम्यज्ञानं मोक्षसाधनमित्युक्तम् । तत्तारतम्यमनेकग्रन्थाविरोधेन विष्वादिस्थावरान्तं पञ्चत्रिंशत्कक्ष्यासूक्त्वा तारतम्यान्तगं हरिं सुरान् ऋषिगन्धर्वादीन् स्वसाक्षाद्गुरूंश्च प्रणमति। तैरुपास्यं वन्दे नारायणं तं सकलसुरगणान् तद्गुरून् मद्गुरूंश्च । तैः श्रीदेव्यादिभिर्वेदभारताद्युक्तानुक्तसम्प्रदायागतगुणक्रियाद्युपसंहारपूर्वकं यथायोग्यमुपास्यं तं नारायणं वन्दे । अभिवादयामि स्तौमि च।

ब्रह्माद्याजानदेवान्तान् सुरगणांश्च वन्दे । तद्गुरून् ते सकलसुराः गुरवो येषामृष्यादिमनुष्योत्तमान्तानां ते तद्गुरवस्तान् ऋषिचिरपितृदेव-गन्धर्वमनुष्यगन्धर्वक्षितिपमनुष्योत्तमान्तांश्च वन्दे । मद्गुरून् साक्षाद्-गुरून् । आचार्याश्चैव सर्वेऽपि यैर्ज्ञानं सुप्रतिष्ठितम् इति प्रमाणोक्त-रीत्या ब्रह्मज्ञानोत्पत्तिहेतूंश्च वन्दे । यद्यपि केनचित्सिद्धान्ताभिज्ञेन प्रणीता तारतम्यपञ्चश्लोकी स्रग्धरावृत्तनिबद्धा वर्तते। तथाऽपि तस्यां पुष्करान्ततारतम्यस्यैवोक्तत्वेन क्षितिपान्ततारतम्यानभिधानात् तत्रापि परमरहस्यत्वेन गुणतारतम्यानुक्तेस्तदुभयकथनायाज्ञानुजिधृक्षया तारतम्यनवश्लोकी प्रणीता यदुपत्याचार्यनिर्व्याजदयासमाजसम्पन्ने-नास्मद्गुरुशेखरेण । तरप्तमप्प्रत्ययाभ्यां भिन्नोऽयं तारतम्यशब्दो अस्मादसावुच्च इति क्रमे रूढः । **आदघ्रास** इत्यत्र दघ्नशब्दोऽप्रत्ययोऽप्यस्ति इति सुधानुसारेण दघ्नशब्दवदित्यखिलं समञ्जसमतिमङ्गलम् ।

## तारतम्यनवश्लोकीमुक्तामाला

**ध्रियतां श्रीनिवासेन निर्मिता मुक्तिकाङ्क्षिणा ।**
**तारतम्यनवश्लोकीमुक्तामाला बुधैर्हृदि ।। १० ।।**

तारतम्यनवश्लोकीग्रन्थकर्ता स्वकृतग्रन्थस्य नामस्थापनपूर्वकं विद्व-दुपादेयत्वमाशास्ते ।

**ध्रियतां श्रीनिवासेन निर्मिता मुक्तिकाङ्क्षिणा ।**
**तारतम्यनवश्लोकीमुक्तामाला बुधैर्हृदि ।।**

इति श्रीमद्यदुपत्याचार्यनिजशिष्यश्रीनिवासतीर्थविरचिता तारतम्य-नवश्लोकी समाप्ता ।

तारतम्यनवश्लोकीति समाहारद्विगुः । नवश्लोक्येव मुक्तामाला बुधैर्हृदि ध्रियतामिति सम्बन्धः ।

**श्रीनिवासार्यवर्याणां वेङ्कटेशेन सूनुना ।**
**भूयात् कृतो भावदीपः प्रीत्यै मध्वपतेर्हरिः ।**
**तत्वाभिमानिनो देवाः ब्रह्मरुद्रपुरःसराः ।**
**यत्परीवारतामाप्तास्तं वन्दे कमलापतिम् ।**
**गृहीतुरिव दीपस्य स्खलनं स्यात् पदेपदे ।**
**तथाऽपि मम तत्सन्तः शोधयन्तु कृपायुताः ।**

इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकश्रीनिवासाचार्यगुरुशेखरकृतायाः तारतम्यनवश्लोकीमुक्तामालायाः दीपिका तच्छिष्याणां कनिष्ठेन वेङ्कटेशेन विरचिता समाप्ता ।

**।। श्रीकृष्णार्पणमस्तु ।।**

## 10. श्रीश्रीनिवासतीर्थविनेयश्रीवेङ्कटपतिविरचितः

# तारतम्यसङ्ग्रहः

वेदव्यासपदद्वन्द्वं ध्यात्वा वेङ्कटसूरिणा ।
वक्ष्यते मध्वशास्त्रोक्तं तारतम्यं यथामति ।। १ ।।

**।। प्रथमकक्ष्या ।।**

रमाब्रह्मादिजगतो ह्यनन्तानन्तसद्गुणैः ।
तारतम्यान्तगो विष्णुः उत्तमो योऽष्टमो रसः ।। २ ।।
'विष्णुमाहात्म्यलेशस्य विभक्तस्य च कोटिधा ।
पुनश्चानन्तधा तस्य पुनश्चापि ह्यनन्तधा ।। ३ ।।
नैकांशसममाहात्म्याः श्रीशेषब्रह्मशङ्कराः' ।
इति भारततात्पर्यनिर्णयेऽस्ति यतो वचः ।। ४ ।।

**।। द्वितीयकक्ष्या ।।**

विष्णोर्द्वितीय[1]कक्ष्यास्था हीनानन्तगुणै रमा ।
ततोऽनन्तांशहीनाऽपि बलज्ञप्तिसुखादिभिः ।। ५ ।।
इतीयं बृहदारण्यभाष्योक्तिर्मानमत्र हि ।

**।। तृतीयकक्ष्या ।।**

विष्णोः तृतीयकक्ष्यास्थौ ब्रह्मवायू समौ च तौ ।। ६ ।।
अवराविति विज्ञेयौ रमायाः कोटिभिर्गुणैः ।
विष्णोः प्रियत्वे तद्भक्तौ तज्ज्ञाने च श्रियश्च ते ।। ७ ।।

1. कक्षिस्था

मुक्ता अप्यवरा नित्यं सर्वे कोटिगुणेन च' ।
इति मानं बृहद्भाष्यं

## ।। चतुर्थकक्ष्या ।।

ब्रह्मवाय्वोः शताधमे ।। ८ ।।
ज्ञेये चतुर्थकक्ष्यास्थे ब्रह्माणी भारती तथा ।
चन्द्रेत्यादिस्वरूपायास्तेभ्यः शतगुणाधमाः ।। ९ ।।
इति भाष्यं बृहच्चास्याः मुख्यवायुः शतोत्तरः ।
इति छान्दोग्यभाष्यं च मानं ।। १० ।।

## ।। पञ्चमकक्ष्या ।।

कक्ष्याऽथ पञ्चमी
विपशेषशिवास्ताभ्यां नीचाः स्युः शतसद्गुणैः ।
इदं तु बृहदारण्यभाष्ये स्फुटतयेरितम् ।। ११ ।।
पूर्वोक्तैश्च गुणैः सर्वैः ताभ्यां शतगुणाधमाः ।
इति ते गरुडाद्यास्तु स्वभार्याभ्यो दशाधिकाः ।। १२ ।।
'ताभ्यश्च ते शतगुणैः दशतो वरिष्ठाः ।
पञ्चोत्तरैरपि यथाक्रमशः श्रुतिस्थाः' ।
इति भारततात्पर्यनिर्णयेऽस्ति यतो वचः ।। १३ ।।
सप्तमाध्यायछान्दोग्यभाष्येऽप्यस्यास्ति निश्चयः ।

## ।। षष्ठकक्ष्या ।।

गरुडादिकाद् विष्णुजायाः ज्ञेयाः पञ्चगुणाधमाः ।। १४ ।।
भद्रा नीला जाम्बवती मित्रविन्दा च लक्षणा ।
कालिन्दीति समाख्याताः षष्ठकक्ष्यास्थिताः समाः ।। १५ ।।
तत्र जाम्बवती किञ्चिद् उत्तमोक्ता स्वभावतः ।

।। सप्तमकक्ष्या ।।

ततः सप्तमकक्ष्यास्थाः ताभ्यस्तु द्विगुणाधमाः ।। १६ ।।
सौपर्णीवारुणीगौर्यो व्यासाचार्योक्त[1]मानतः ।
अतिनिर्मलबुद्धित्वाल् तदुक्तेर्न हि शक्यता ।। १७ ।।

।। अष्टमकक्ष्या ।।

ताभ्यस्त्वष्टमकक्ष्यास्थौ इन्द्रकामौ दशाधमौ ।
अनुव्याख्यानुसारेण तत्रेन्द्रः किञ्चिदुत्तमः ।। १८ ।।
विष्णोः षण्महिषीणां तु प्रद्युम्नात् कामरूपतः ।
विंशाधिकत्वं युक्तं स्यात् गुणस्य गणनार्थतः ।। १९ ।।

।। नवमकक्ष्या ।।

(ताभ्यां) नवमकक्ष्यास्थो नाशिक्यापरनामकः ।
तैजसाहम्भवः प्राणो ज्ञेयो दशगुणावरः ।। २० ।।

।। दशमकक्ष्या ।।

ततो दशमकक्ष्यास्थाः अनिरुद्धो गुरुः शची ।
स्वायम्भुवो मनुर्दक्षः रतिरेते दशाधमाः ।। २१ ।।
अनिरुद्धाद् रतिः किञ्चित् मातृत्वादधिका मता ।
स्वपतिभ्यां शचीरत्यौ ज्ञेये शतगुणाधमे ।। २२ ।।
व्यासाचार्यकृताद् ग्रन्थसङ्घादेषः प्रतीयते ।

।। एकादशकक्ष्या ।।

अनिरुद्धादिषट्केभ्यो एकादशमकक्ष्यगः ।। २३ ।।

---

1. क्ति?

प्रवहो भूतवायुस्तु ज्ञेयः पञ्चगुणाधमः ।
प्रधानवायुजो भूतवायुर्नाम्ना मरीचकः ।। २४ ।।
इति त्रयोदशाध्यायगीतातात्पर्यमानतः ।
मरीच्यपरनामा तु प्रवहस्त्विति भासते ।। २५ ।।

### ।। द्वादशकक्ष्या ।।

सनत्कुमारादितरे सनकाद्यास्त्रयस्ततः ।
किञ्चिन्न्यूनास्तु दक्षात्तु ज्ञेयाः सप्तगुणावराः ।। २६ ।।
नारदात् त्रिगुणोच्चाः स्युः भृग्वादेस्तु चतुर्गुणैः ।
किञ्चिदूनैरुत्तमास्त इति सम्यग्विनिर्णयः ।। २७ ।।
'सनकाद्या नारदश्च दक्षभृग्वादयोऽपि च ।
देवावरा यथा तद्वत् मनवोऽपि प्रकीर्तिताः ।। २८ ।।
त्रिचतुर्भागभेदेन तेऽप्यन्योन्यविशेषिणः' ।
इत्येवं बृहदारण्यभाष्योदाहृतमानतः ।। २९ ।।
अन्यथाऽनुपपत्त्यायमर्थो ग्राह्यः प्रतीयते ।
त्रिचतुःपदयोरत्र सप्तसङ्ख्यार्थकत्वतः ।। ३० ।।
अनयोः पुनरावृत्त्या त्रिचतुष्ट्वार्थकत्वतः ।
इति गौर्जालव्यासार्यैरुक्तस्तं विवृणोम्यहम् ।। ३१ ।।
तस्माद् द्वादशकक्ष्यास्थाः सनाद्या इति भासते ।
विवस्वान्नामकः सूर्यो मानवी यमरात्रिपौ ।। ३२ ।।
सनादिभ्योऽधमाः किञ्चिद् भूतवायोस्तथैव च' ।
इति छान्दोग्यभाष्योक्तेः प्रवहाद् द्विगुणाधमाः ।। ३३ ।।

### ।। त्रयोदशकक्ष्या ।।

त्रयोदशमकक्ष्यास्था शतरूपा तु मानवी ।
तत्र ज्ञेया स्वभर्तुस्तु अधमा दशभिर्गुणैः ।। ३४ ।।

**।। चतुर्दशकक्ष्या ।।**

चतुर्दशमकक्ष्यास्थो ह्यप्पश्चन्द्रादितोऽधमः ।
सार्धपादैर्गुणैर्युक्तो अध्यर्धोनसमो मतः ।। ३५ ।।
इति छान्दोग्यभाष्योक्तेः

**।। पञ्चदशकक्ष्या ।।**

वरुणान्नारदोऽधमः ।
कक्ष्यापञ्चदशस्थोऽथ

**।। षोडशकक्ष्या ।।**

अथ षोडशकक्ष्यगाः ।। ३६ ।।
भृगुः प्रधानवह्निश्च प्रसूतिर्नारदाधमाः ।
वरुणात् पादहीनाः स्युः समास्तेऽन्योन्यतस्त्रयः ।। ३७ ।।
इति विंशद्गुणैर्नीचाः तृतीयांशेन संयुतैः ।
दक्षात् प्रसूतिर्भर्तुस्त्विति सूक्ष्मविनिर्णयः ।। ३८ ।।
व्यासाचार्यैः कृतो ह्यस्ति भृग्वादिभ्योऽधमा इमे ।

**।। सप्तदशकक्ष्या ।।**

मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।। ३९ ।।
वसिष्ठश्चेत्यजसुता मनुर्वैवस्वताह्वयः ।
विश्वामित्रः समाश्चैते कक्षिसप्तदशस्थिताः ।। ४० ।।

**।। अष्टादशकक्ष्या ।।**

मरीच्यादिनवभ्यस्तु आदित्यो मित्रनामकः ।
पत्नी सुरगुरोस्तारा निर्ऋतिः प्रावही तथा ।। ४१ ।।
किञ्चिंदूना इति ज्ञेया कक्ष्यष्टादशसंस्थिताः ।
वह्नेर्द्विगुणतो नीचाः चत्वारोऽन्योन्यतः समाः ।। ४२ ।।

भर्तृभ्यां प्रावही तारे ज्ञेये दशगुणावरे ।
देवस्त्रियो दशांशोना इत्येवंरूपकेण तु ।। ४३ ।।
बृहद्भाष्यप्रमाणेनाप्यन्यासामित्थमेव हि ।

**।। एकोनविंशकक्ष्या ।।**

एकोनविंशकक्ष्यास्थाः विष्वक्सेनोऽथ वित्तपः ।। ४४ ।।
विघ्नेशोऽप्यश्वियुक्तैकन्यूना नवतिदेवताः ।
शतस्थान्तर्गताः मित्रादधमाः किञ्चिदीरिताः ।। ४५ ।।
शतस्थानां तु गणना क्रियते बुद्धिशुद्धये ।
प्रधानवायुर्नासाख्यो पञ्चाशन्मरुतस्तथा ।। ४६ ।।
रुद्रा एकादशादित्या एकादश हरिं विना ।
उरुक्रमस्तु विष्णुत्वात् शतस्थान्तर्गतो न हि ।। ४७ ।।
विष्णुस्तूपास्यरूपत्वात् नोपासकगुणैर्युतः ।
इति छान्दोग्यभाष्यस्य तृतीयाध्याय ईरितम् ।। ४८ ।।
विश्वेदेवा दशाष्टौ च वसवो ऋभवस्त्रयः ।
तथाह्यृग्भाष्यटीकायां ऋभूणां [1](त्रय)मीरितम् ।। ४९ ।।
द्वे भारतीधरादेव्यौ द्यावापृथिविनामिके ।
अश्विनौ द्वावपि ह्यत्र पितरस्त्रय ईरिताः ।। ५० ।।
बृहस्पतेः शतस्थत्वे कश्चिदेष्वविवक्षितः ।
एते शतस्था तन्मध्ये पूर्वोक्ता मरुतस्त्रयः ।। ५१ ।।
प्रधानवायुः प्रवहस्तेजसश्च सदाशिवः ।
रुद्र एकस्तथाऽदित्याः विवस्वान् वरुणस्तथा ।। ५२ ।।
मित्रः शक्रश्च चत्वारो वसुष्वग्निः समीरितः ।
द्युनाम्नी भारती चेति दशोक्तास्त्वथ वक्ष्यते ।। ५३ ।।

---

1. x x

पर्जन्यनामा त्वादित्यः स्थले एकादिविंशके ।
उक्तोच्यमानातिरिक्तैकोना नवतिदेवताः ।। ५४ ।।
शतस्थान्तर्गताः शिष्टाः विष्वक्सेनादयस्त्रयः ।
इत्येते व्युत्तरनवतयो देवाः समा मताः ।। ५५ ।।
भारत्यन्या देवता तु (द्यवाख्य)लोकस्य मानिनी ।
तदोक्तानां नवत्वेन नवतिस्त्र्युत्तराऽत्र हि ।। ५६ ।।
देवतानामिति ज्ञेयाः स्थान एकोनविंशके ।
अश्विनोः सुमहत्त्वेऽपि उक्तशेषपदेन तु ।। ५७ ।।
सोमाधिकारस्तु तयोर्नैमित्तिक इतीरितम् ।
ग्रहणं तु पृथक्सूक्ष्मतारतम्यस्तवे कृतम् ।। ५८ ।।
मनुप्रभृतिदेवानाम् आहान्योन्यविशेषकौ ।
कथ्येते ग्रन्थसम्मर्शात् न तु कल्पनया मया ।। ५९ ।।
प्राणोऽपानस्तथा व्यान उदानश्च समानकः ।
नागश्च कृकलः कूर्मो देवदत्तो धनञ्जयः ।। ६० ।।
प्रवहो विवहः शंयुः संवहश्च परावहः ।
उद्वहश्चाऽवहः शङ्कुः कालः श्वासोऽनलोऽनिलः ।। ६१।।
प्रतिभः कुमुदः कान्तः शुचिः श्वेतोऽजितो गुरुः ।
सञ्ज्ञाप्रवर्तकः कालो दितिः सौम्यः कपिर्जडः ।। ६२ ।।
मण्डूकः सन्ततः सिद्धो रक्तः कृष्णः कविः शुकः ।
यतिर्भीमो हनुः पिङ्गोऽहंप्राणः कम्पनस्तथा ।। ६३ ।।
सप्तसप्तकसङ्ख्याकाः मरुतोऽमी प्रकीर्तिताः ।
द्वावत्रापरनामानौ सम्पाती केसरीति च ।। ६४ ।।
एतेषां मरुतां मध्ये त्रयो मरुत एव हि ।
चक्रगन्धर्वान्तरिक्षनामभेदाः प्रकीर्तिताः ।। ६५ ।।

अतो बृहद्भाष्यसंस्थप्रमाणादेकवाक्यता ।
आपिबन्त्यखिलान् भोगान् इत्यापश्चक्रवर्तिनः ।। ६६ ।।
मुक्तास्तेषां वायुसुतश्चक्रो नाम व्यपाश्रयः ।
मुक्तस्तस्य च मुक्तस्तु मरुद्गन्धर्वनामवान् ।। ६७ ।।
सुतो वायुस्तत्सुखानां मौक्तानामन्तरिक्षगः ।
मरुतामेक एवासौ अन्तरिक्षश्च वायुजः ।। ६८ ।।
इतीदं ते बृहद्भाष्यं ते सर्वे मरुतः समाः ।
प्राणादिपञ्चकं त्यक्त्वा तैजसप्रवहावपि ।। ६९ ।।
मरुतश्च समाः सर्वे सप्त तेषु प्रधानकाः ।
एवं दशमतात्पर्याद् विशेषोऽयं प्रतीयते ।। ७० ।।
आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत् ।
इति षट्प्रश्नभाष्ये च अधमत्वं विनायकात् ।। ७१ ।।
यदुच्यते तत्सप्तकेभ्योऽन्येषां तु परं नयेत् ।
द्वयोः प्रागुत्तमत्वोक्तेः प्राणादेस्तत्समत्वतः ।। ७२ ।।
द्विचत्वारिंशतां किञ्चिद् अवमत्वं ततो भवेत् ।
मरुदित्यस्य भाष्यस्य जातावेकवचत्वतः ।। ७३ ।।
रैवतोऽजो भवो भीमो वाम उग्रो वृषाकपिः ।
अजैकपाद् अहिर्बुध्निः बहुरूपो महानिति ।। ७४ ।।
पार्वतीशं परित्यज्य दशरुद्राः समा मताः ।
विष्कम्भः पत्रतापाख्यः विरूपाक्ष इति त्रयः ।। ७५ ।।
उक्तेष्वेतेषु रुद्रेषु नामभेदाः प्रकीर्तिताः ।
विवस्वानर्यमा पूषा त्वष्टाऽथ सविता भगः ।। ७६ ।।
धाता पर्जन्यवरुणौ मित्रश्शक्र उरुक्रमः ।
एतेषूरुक्रमं शक्रं सूर्यं च वरुणं तथा ।। ७७ ।।

पर्जन्यमित्रौ च विना षडादित्याः समा मताः ।
एतेष्वेकस्य सूर्यस्य अंश इत्यपि नाम हि ।। ७८ ।।
अर्यण्मंशादिचतुर्षु पुरार्यमांशकौ सुरौ ।
इति क्रमाद् बृहद्भाष्ये भारतस्य विनिर्णये ।। ७९ ।।
सत्यो वसुः क्रतुर्दक्षः कामः कालो धनुर्धरः ।
पुरूरवा आर्द्रवश्च विश्वेदेवा अमी दश ।। ८० ।।
दशष्वेतेष्वन्यतरः धुरो लोचननामकः ।
द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषा वस्तुर्विभावसुः ।। ८१ ।।
द्यु इत्यपरनामा तु एतेष्वेवाष्टमो वसुः ।
अयं विशेषो विज्ञेयो श्रीमद्भारतभावतः ।। ८२ ।।
अनलेन्द्रं विना सप्त वसवस्तु समा मताः ।
एकोनविंशत्कक्ष्यास्था देवतासमुदायतः ।। ८३ ।।

### ।। विंशकक्ष्या ।।

विंशकक्ष्यागता देवाः कर्मजास्तत्समा अपि ।
अधमा इति विज्ञेया नवकोट्योऽपि देवताः ।
तेषां शतस्थाधमत्वं तदन्ये तु ततोऽवराः ।। ८४ ।।
इत्यनुव्याख्यानटीका सुधा कथयति स्फुटम् ।
तथा बृहत्तारतम्यटीकाऽत्रानुमताऽस्ति हि ।। ८५ ।।
तस्मात् तान्नवकोट्यो हि त्यक्त्वा सोमार्हदेवताः ।
उक्तेतरा इति पदात् ग्राह्याः स्युः सूक्ष्मसंस्तवे ।। ८६ ।।
देवयाने ब्रह्मयाने भाष्ये प्राप्यतयेरितः ।
प्रधानाग्नेर्ज्येष्ठसूनुः यस्सोऽप्यत्र विवक्षितः ।। ८७ ।।

यतो मनुष्यो ह्यधमः प्रोक्तः षट्प्रश्नभाष्यके ।
शतस्थेभ्यो हि देवेभ्यः ततो वायोः सुतो मरुत् ।। ८८ ।।
तस्मादग्निः पावकाख्यः प्रथमोऽग्नेः सुतस्त्विति ।
पादमानी जयन्तोऽपि अत्र ग्राह्यो मनीषिभिः ।। ८९ ।।
**हुक्केरीसंस्थरामार्यकृतैरेषः प्रतीयते ।**
कर्मजास्तत्समाश्चापि कथ्यन्ते नामपूर्वतः ।। ९० ।।
पृथुर्गयः कार्तवीर्यः आर्षभो भरतस्तथा ।
दौष्यन्तिर्भरतश्चैव शशबिन्दुप्रियव्रतौ ।। ९१ ।।
इत्यादिराजशतकं सत्येन्द्रबलिपूर्वकाः ।
विरोचनसुतः शम्भुः अद्भुतो विधृतः शुचिः ।। ९२ ।।
ऋतधामा दिवःपाल इत्यन्ये सम्प्रकीर्तिताः ।
इन्द्रेषु यज्ञनामा तु विष्णुर्वायुस्तु रोचनः ।। ९३ ।।
सत्याक्षरयमश्चाश्विनावुभौ त्रिशिखस्तथा ।
बलिभुक् शक्र एकस्तु मन्द्रद्युम्नः पुरन्दरः ।। ९४ ।।
षष्ठश्च सप्तमश्चेति मनवश्च चतुर्दश ।
तेषु स्वायम्भुवं त्वाद्यं चतुर्थं तापसं विना ।। ९५ ।।
वैवस्वतं सप्तमं च मनुस्वारोचिषोत्तमौ ।
रैवतश्चाक्षुषश्चैव मनुः सावर्णिनामकः ।। ९६ ।।
अपरे ब्रह्मरुद्रेन्द्रवीन्द्रदक्षादयस्तथा ।
सावर्णयो धर्मपूर्व इत्येते कर्मजा मताः ।। ९७ ।।
उचथ्यच्यवनौ चैव पितॄणां सप्तकं तथा ।
पितॄणां सप्तकं यत्तत् कर्मदेवसमं मतम् ।। ९८ ।।
कर्मदेवगणा अष्टगन्धर्वा इति रूपतः ।
वाक्यद्वयाद् बृहद्भाष्ये गन्धर्वाणां तथाऽष्टकम् ।। ९९ ।।

कर्मदिवसमं ज्ञेयं प्रह्लादश्चाऽपि तादृशः ।
समेष्वेषु विशेषोऽस्ति विप्रराजन्यलक्षणः ।। १०० ।।

**।। एकविंशकक्ष्या ।।**

अवरा कर्मदिवेभ्य अप्पभार्या सवृष्टिपा ।
यमभार्या श्यामला च चन्द्रज्याया च रोहिणी ।। १०१ ।।
सूर्यपत्नी तथा सञ्ज्ञा अनिरुद्धपरिग्रहा ।
विराडपरनाम्नी तु उषा इति तु षट्सुराः ।। १०२ ।।
एकविंशत्कक्ष्यसंस्था मित्रात्तु द्विगुणाधमाः ।
पर्जन्यमित्रेति भाष्यं छान्दोग्यस्यात्र साधकम् ।। १०३ ।।
स्वभर्तृभ्योऽधमास्तास्तु व्यासाचार्योक्तिरीतितः ।

**।। द्वाविंशकक्ष्या ।।**

पर्जन्यादधमा ज्ञेया अनुक्ता देवसर्गिणः ।। १०४ ।।
द्वाविंशतमकक्ष्यास्था एतेभ्योऽन्ये चेति मानतः ।
सूक्ष्मे तु तारतम्यस्य सर्वे तेभ्योऽधमा मता ।। १०५ ।।

**।। त्रयोविंशकक्ष्या ।।**

स्वाहा नाम्न्यग्निभार्या तु पर्जन्याद् द्विगुणाधमा ।
त्रयोविंशतिकक्ष्यास्था तस्या अप्यधमो बुधः ।। १०६ ।।

**।। चतुर्विंशकक्ष्या ।।**

चतुर्विंशत्कक्ष्यसंस्थाद् बुधात्

**।। पञ्चविंशकक्ष्या ।।**

अप्यधमा उषा ।
गुणैः कतिपयैर्ज्ञेया पञ्चविंशतिकक्ष्यगा ।। १०७ ।।

स्वाहाया अग्निभार्याया अधमा दशभिर्गुणैः ।
षट्प्रश्नोपनिषद्भाष्ये उषा नामात्मिका ततः ।। १०८ ।।
इति स्फुटं बुधादुक्तम् अधमत्वमथोषसः ।

**।। षड्विंशकक्ष्या ।।**

उषसोऽप्यधमः किञ्चित् भूमिमानी शनैश्चरः ।। १०९ ।।
षड्विंशकक्ष्या संस्थः

**।। सप्तविंशकक्ष्या ।।**

शनेरप्यवरो मतः ।
कर्ममानी पुष्करस्तु सप्तविंशतिकक्ष्यगः ।। ११० ।।

**।। अष्टाविंशकक्ष्या ।।**

तत्वाभिमानिदेवेषु ह्यधमात् पुष्करादपि ।
अवरा इति विज्ञेया देवा आजानजाभिधाः ।। १११ ।।
अष्टाविंशतिकक्षिस्था शतमप्सरसां तथा ।
ऊर्वशीप्रभृतीनां तु उक्तान्ये ऋषयः शतम् ।। ११२ ।।
सनकाद्यास्त्रयः सप्त मरीच्यादय एव च ।
सनत्कुमारश्च भृगुरुचथ्यच्यवनावपि ।। ११३ ।।
नारदश्चेत्यमी पञ्च दशोक्ता ऋषयः पुरा ।
तुम्बुरुप्रमुखानां तु गन्धर्वाणां शतं तथा ।। ११४ ।।
एते आजानजा ज्ञेयाः पावकाख्यं विनाऽखिलाः ।
अग्निपुत्राः शुचिः शुन्ध्यः पवमान इति त्रयः ।। ११५ ।।
शताधिद्व्यष्टसाहस्राः ये कृष्णस्त्रीत्वमापिरे ।
कशेरुं त्वाष्ट्रजां त्यक्त्वा आजानजसमास्त्वमी ।। ११६ ।।

यशोदा प्राक् धरादेवी कथिताऽजानजाधिका ।
ततोऽप्यदितिरुत्कृष्टा तस्याः कश्यप उत्तमः ।। ११७ ।।
शतन्यूना कर्मजेभ्यो गीतातात्पर्यमानतः ।

### ।। एकोनविंशकक्ष्या ।।

अप्सरसः एकोनत्रिंशकक्ष्यगाः ।। ११८ ।।
आजानजेभ्यो देवेभ्यो द्विगुणैरधमा मताः ।
कृष्णप्रियाभ्यो गोपीभ्यो भक्तितो द्विगुणाधिकाः ।। ११९ ।।
महिष्यष्टौ विना यास्ताः कथिताः कृष्णवल्लभाः ।
इति ह्येकादशस्कन्धश्रीमत्तात्पर्यमानतः ।। १२० ।।

### ।। त्रिंशकक्ष्या ।।

तेभ्योऽपि ह्यधमा ज्ञेयाः पितरश्चिरनामकाः ।
आजानेभ्यः शतन्यूनाः त्रिंशत्कक्ष्यागतास्तु ते ।। १२१ ।।
भूपा मनुष्यगन्धर्वा देवाः पितर एव च ।
आजानेयाः कर्मदेवाः तत्स्वरूपा पुरन्दराः ।। १२२ ।।
शिवो विरिञ्च इत्येते क्रमाच्छतगुणोत्तराः ।
तात्पर्येणेति गीताया वचसोक्तेन च ह्ययम् ।। १२३ ।।

### ।। एकत्रिंशकक्ष्या ।।

ग्राह्यः स्यादिति मे भाति पितृभ्यस्तु शताधमाः ।
एकत्रिंशत्कक्ष्यसंस्था देवगन्धर्वसञ्ज्ञकाः ।। १२४ ।।

### ।। द्वात्रिंशकक्ष्या ।।

ऋषयोऽपि तथा न्यूनाः शतोनशतकोटयः ।
सुधियः कथयन्त्येवं तत्पन्त्यश्च ततोऽधमाः ।। १२५ ।।
द्वात्रिंशत्कक्ष्यगास्ताभ्यः

## ।। त्रयस्त्रिंशकक्ष्या ।।

त्रयस्त्रिंशतिकक्ष्यगाः ।
नीचा मनुष्यगन्धर्वा देवेभ्यस्ते शताधमाः ।। १२६ ।।
सुरभृत्याः सारमेयाः तदन्ये सर्वशोऽपि हि ।
गजा हयाश्च देवानां गावो वृक्षाश्च दैविकाः ।। १२७ ।।
विद्याधराश्च सिद्धाश्च चारणाः किन्नरादयः ।
पक्षिणो जरितर्याद्या सर्पा वासुकिपूर्वकाः ।। १२८ ।।
विश्वकर्मादयश्चैव मयाद्या भौमभार्गवौ ।
देवतायोनयः सर्वे अत्र ग्राह्या मनीषिभिः ।। १२९ ।।

## ।। चतुस्त्रिंशकक्ष्या ।।

**रामाचार्यै**रुक्तमिदं नृपाः शतगुणाधमाः ।
गन्धर्वेभ्यो मानुषेभ्यश्चतुस्त्रिंशतिकक्ष्यगाः ।। १३० ।।

## ।। पञ्चत्रिंशकक्ष्या ।।

न्यूनास्तेभ्यः शतगुणैः विज्ञेया मानुषोत्तमाः ।
चतुर्गुणोपासकास्ते पञ्चत्रिंशतिकक्ष्यगाः ।। १३१ ।।
वर्णाश्रमादिभेदेन तारतम्यं तु तेष्वपि ।
प्रमाणोक्तानुसारेण द्रष्टव्यं सूक्ष्मबुद्धिभिः ।। १३२ ।।

## ।। षट्त्रिंशकक्ष्या ।।

तेभ्योऽपि किञ्चिन्न्यूनाः स्युः जङ्गमाः पशुपक्षिणः ।
षडधित्रिंशत्कक्ष्यास्था

**।। सप्तत्रिंशकक्ष्या ।।**

न्यूनास्तेभ्योऽपि स्थावराः ।। १३३ ।।
भगवद्भक्तियुक्तास्ते श्रीमत्तात्पर्यमानतः ।
तत्र स्थावरमुक्तेभ्यो'वरा जङ्गममुक्तिगाः ।। १३४ ।।
तेभ्यो मानुषमुक्ताश्च इति भागवतस्य तु ।
सप्तत्रिंशत्कक्ष्यगास्त इति सर्वं समञ्जसम् ।। १३५ ।।

**।। ग्रन्थोपसंहारः ।।**

**गुरुभिः श्रीनिवासार्यैः** उपदिष्टं यदत्र हि ।
निबद्धं तारतम्यं तद् वेङ्कटेशाख्यसूरिणा ।। १३६ ।।
श्रीनिवासार्यहृद्धाम्नि मञ्चे धूर्जटिमानसे ।
मध्वतल्पे शयानोऽस्तु प्रसन्नो बादरायणः ।। १३७ ।।
मारुतेशः प्रसन्नो मे यदि केनापि कर्मणा ।
भूयात् तर्हि सतां ग्राह्यः तारतम्यस्य सङ्ग्रहः ।। १३८ ।।

**।। इति श्रीनिवासतीर्थपूज्यपादानां शिष्येण**
**वेङ्कटपतिना विरचितः**
**तारतम्यसङ्ग्रहः समाप्तः ।।**

**।। श्रीमध्वेशार्पणमस्तु ।।**

## 11. श्रीराघवेन्द्रतीर्थप्रशिष्यप्रणीतः
## (आर्यनारायणाचार्यतनयकृष्णाचार्यप्रणीतः)

# तारतम्यप्रबन्धः

श्रीशं नारायणं देवमानन्दादिगुणार्णवम् ।
जगज्जन्मादिकर्तारं दोषदूरं नमाम्यहम् ।। १ ।।
रमाब्रह्मादिकान् देवान् नत्वा तत्करुणाबलात् ।
तद्गुणानां तारतम्यमुच्यते मद्गुरूदितम् ।। २ ।।
सदागमज्ञैस्तैरेव विज्ञेयं सूक्ष्मबुद्धिभिः ।
तद्वक्तुकामेऽप्यल्पज्ञे मयि कुर्वन्तु ते कृपाम् ।। ३ ।।
आर्यनारायणार्याणां तनयः कृष्णकोविदः ।
तारतम्यं यथाबुद्धि वदामि विदुषां मुदे ।। ४ ।।
विष्णुः सर्वोत्तमोऽनन्तगुणपूर्णः श्रुतौ श्रुतः ।
अनन्तगुणतस्तस्मात् अवरा सकलैर्गुणैः ।। ५ ।।
विष्णोर्भार्या रमा देवी दे(शका)लव्याप्ता तु तत्समा
।। ६ ।।
दक्षिणाख्या स्वयं देवी स्वस्या एवोत्तमा मता ।
प्रोक्तौ ब्रह्मा च वायुश्च सम(मौ) कोटिगुणाधमौ
।। ७ ।।
मुक्तावपि च संसारे [1]---नन्तगुणाधमौ ।
वर्णतः पदतो वायुः किञ्चिदूनो विधेः सृतौ ।। ८ ।।

---

1. ज्ञानेऽ इति पाठः सम्भाव्यते

सरस्वती भारती च विधेः शतगुणाधमे ।
मुक्तौ सृतौ भारतीं तु सरस्वत्यधमाल्पतः ।। ९ ।।
वाग्रूपिकायाः स्वस्यास्तु वरिष्ठा ऋक्स्वरूपिणी ।
सुपर्णशेषरुद्राश्च ताभ्यां शतगुणाधमाः ।। १० ।।
तत्रेदानीं किञ्चिदूनो रुद्रः शेषत्वमेष्यति ।
नीला भद्रा मित्रविन्दा कालिन्दी लक्षणा हरेः ।। ११ ।।
भार्याः, जाम्बवती तुल्यास्तासु जाम्बवती वरा ।
श्रीविशेषावेशकाले शेषादिसदृशा मता ।। १२ ।।
श्रीविशेषावेशहीनास्तेभ्यः पञ्चगुणाधमाः ।
सौपर्णी वारुणी चोमा नीलादेः [1]--- गुणाधमाः ।। १३ ।।
तत्रेदानीं किञ्चिदूना वारुणीत्वमुमैष्यति ।
शक्रकामा उमादिभ्यो दश न्यूना उभावपि ।। १४ ।।
प्रायः समौ काम इन्द्रादूनः कतिपयैर्गुणैः ।
सुपर्णशेषरुद्रादेः सदा दशगुणाधमौ ।। १५ ।।
तैजसाहम्भवः प्राणः ताभ्यां [2]--- गुणाधमः ।
[3]--पः सनकाद्याश्च (+ +)मेवाधमाः मताः ।। १६ ।।
स्वायम्भुवो मनुर्दक्षः शची रतिगुरू तथा ।
अनिरुद्धः समाः सर्वे तैजसात्तु दशाधमाः ।। १७ ।।
अनिरुद्धाद् रतिः किञ्चित् अधिकोक्ता [4]-- ।
मुक्तौ सृताविन्द्रदेवात् [5]-------------- ।। १८ ।।

---

1. x x द्वि इति पाठः पूरणीयः
2. x x दश इति पूरणीयम्
3. x x x
4. हि मातृतः?
5. x x x

स्वायंभुवादेः प्रवहो वायुः पञ्चगुणाधमः ।
शुक्रः [1]काष्यभृतामीशः गुरोरवर ईरितः ।। १९ ।।
यमश्च शतरूपा च चन्द्रसूर्यौ समा मताः ।
शतरूपा [2]विधेः किञ्चिदधिकोक्ता तदाश्रयः ।। २० ।।
प्रवहाद् द्विगुणान्न्यूना [3]---- दशाधमा ।
--- विवहश्चैवमुद्वहः संवहस्तथा ।। २१ ।।
प्रवहः परावहश्चैव परीवाहस्तथैव च ।
प्रधानमरुतः सप्त तेषु प्रवहमारुतम् ।। २२ ।।
विना सर्वे समाः षट् ते यमादेरवरा मताः ।
यमादेर्वरुणो ह्यर्धगुणोनो नारदाधिकः ।। २३ ।।
भृगुरग्निः प्रसूतिश्च वरुणा [4]x xदवराः ।
द्यावापृथिव्यौ वरुणादवरे परिकीर्तिते ।
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।। २४ ।।
वसिष्ठविश्वामित्रौ च वैवस्वतमनुर्नव ।
वन्ह्यादेरवरा नित्यं मित्रादेरुत्तमा मताः ।। २५ ।।
यमानुजोऽन्यः कालाख्यः वन्ह्यादेरवरो मतः ।
मित्रादित्यो निर्ऋतिश्च तारा च प्रावही समाः ।। २६ ।।
मरीच्याद्यवराः सर्वे वन्ह्यादेर्द्विगुणावराः ।
आकाशदेवता विघ्नविष्वक्सेन उभौ समौ ।। २७ ।।

---

1. काव्य?
2. विधोः इति स्यात्
3. स्वपत्युश्च इति पाठः स्यात्
4. त्पादतोऽ

मित्रादेरवरौ ज्ञेयौ भूतवायोर्वरौ मतौ ।
अन्तरिक्षाभिमानी यो विघ्नसूनुरुदाहृतः ।। २८ ।।
[1]x x विघ्नास्तदितरे विघ्नेशादवरा मताः ।
प्रधानवायुर्वसवो रुद्रादित्या मरुद्गणाः ।। २९ ।।
[2]व्र --- स्पतिर्द्यावापृथिव्यावश्विनौ तथा ।
विश्वेदेवाश्च पितरः शतस्था देवताः मताः ।। ३० ।।
द्रोणः प्राणः ध्रुवोऽर्कोऽग्निः दोषो वस्तुर्विभावसुः ।
प्रधानाग्निमृते सप्त वसवश्च समा मताः ।। ३१ ।।
रैवतोऽजो भवो भीमो वाम उग्रो वृषाकपिः ।
अजैकपादहिर्बुध्निर्बहुरूपो महानिति ।। ३२ ।।
उमापतिं विना रुद्रं [3]पञ्च रुद्राः समा मताः ।
धातार्यमा च मित्रश्च वरुणश्चन्द्र एव च ।। ३३ ।।
विवस्वानथ पूषा च पर्जन्या [4]x x x x x ।
भगवस्त्वष्टा च विष्णुश्च ह्यादित्या द्वादशेरिताः
।। ३४ ।।
मित्रं च वरुणं चेन्द्रं विवस्वन्तं तथैव च ।
पर्जन्यविष्णुं सन्त्यज्य षडादित्याः समा मताः ।। ३५ ।।
प्राणोऽपानस्तथा व्यान उदानश्च समानकः ।
नागश्च कृकलः कूर्मो देवदत्तो धनञ्जयः ।। ३६ ।।

---

1. x x x
2. बृहस्पतिः इति पाठः
3 दश इति पाठः स्यात्
4. x x x x x

प्रवहो विवहः [1]संयुः संवहश्च परावहः ।
उद्वहश्चाऽवहः शङ्कुः कालः श्वासोऽनिलोऽनलः ।।३७।।
प्रतिभः कुमुदः कान्तः शुचिः श्वेतोऽजितो गुरुः ।
[2]संज्ञाप्रवर्तकः कीलो दितिः सौम्यःकपिर्जडः ।। ३८ ।।
मण्डुकः[3] ---- रक्तः कृष्णः पिकः शुकः ।
मतिर्भीमो हनुः पिङ्गो [4]x x x कम्पनस्तथा ।। ३९ ।।
सप्तसप्तकसङ्ख्याकाः मरुतोऽमी प्रकीर्तिताः ।
प्रधानमरुतं प्राणं तैजसं च विना समाः ।। ४० ।।
चक्रवायोर्वंशवायुर्मरुद्गन्धर्वनामवान् ।
वरोऽन्तरिक्षणस्तस्मादन्तरिक्षाधिको मरुत् ।। ४१ ।।
ऋभवो नाम तपसा सोमं प्राप्ता सहस्रशः ।
अश्विनौ प्राणनामानौ अन्योन्यसदृशौ मतौ ।। ४२ ।।
सत्यो वसुः क्रतुर्दक्षः कामः कालो [5]x x x ।
पुरूरवार्द्रवाश्चैव विश्वेदेवा अमी समाः ।। ४३ ।।
अग्निष्वात्ता बर्हिषदः सोम्याः पितर [6]x x ।
साग्नयोऽनग्नयश्चेति पितरः सप्त कीर्तिताः ।। ४४ ।।
पितरस्तेषु [7]x x x प्रकीर्तिताः ।
(ज)यन्तश्च तथा शम्भुः पादयोस्तौ नियामकौ ।। ४५ ।।

---

1. शम्भुः
2. x x x इति स्यात् नामे भेदः स्यात्
3. x x x
4. x x x
5. x x x
6. x x x
7. x x x

च्यवनोचथ्यनामानौ विप्रौ राजाधिकौ मतौ ।
विघ्नादेरवराः प्रोक्ताः कर्मजा उत्तमा मताः ।। ४६ ।।
स्वायम्भुवः स्वारोचिषोत्तमतापसरैवताः ।
चाक्षुषः श्राद्धदेवश्च सावर्णिर्मनुरष्टमः ।। ४७ ।।
दक्षसावर्णिनामा च ब्रह्मसावर्णिरेव च ।
धर्मसावर्णिनामाऽथ रुद्रसावर्णिनामकः ।। ४८ ।।
वेदसावर्णिनामासाविन्द्रसावर्णिरन्तिमः ।
एते मनव इत्युक्ता येषु स्वायम्भुवं मनुम् ।। ४९ ।।
तापसं श्राद्धदेवं च विना सर्वे समा मताः ।
कार्तवीर्यः पृथुश्चैव दौष्यन्तिर्भरतस्तथा ।। ५० ।।
शशबिन्दुश्च मान्धाता ककुस्थाद्यास्तथाऽपरे ।
बल्याद्या अन्तराप्राप्तदेवताः कर्मदेवताः ।। ५१ ।।
प्रियव्रतो गयश्चैव कर्मदेवसमौ मतौ ।
सोम्यं पितृसमं त्यक्त्वा पितरः षट् च तादृशाः ।। ५२ ।।
यज्ञश्च रोचनश्चैव सत्यजित् त्रिशिखो विभुः ।
मन्द्रद्युम्नान[1]भिख्यातः पुरन्दरबली तथा ।। ५३ ।।
अद्भुतश्च तथा शम्भुः वैधृतस्तृत[2]धामकः ।
[3]---- विः शुचिश्चैव इन्द्राश्चतुर्दश ।। ५४ ।।
यज्ञनामा तु भगवान् रोचनो वायुरुच्यते ।
सत्यजिन्नामको धर्मः त्रिशिखो विभुरेव च ।। ५५ ।।

---

1. x x x
2. नामकः?
3. x x x

? दस्रौ मन्द्रद्युमानिन्द्रः पुरन्दरपदोदितः ।
एतान् विनाऽन्ये बल्याद्याः कर्म [1]--- ।। ५६ ।।
आर्षभो भरतश्चैव पावकोऽग्नेः सुतस्तथा ।
उक्तशेषान्यदेवाश्च वस्वादेरवरा मताः ।। ५७ ।।
पर्जन्यगङ्गा सञ्ज्ञा च रोहिणी श्यामला विराट् ।
षडन्योन्यं समाः प्रोक्ताः मित्रात्तु द्विगुणावराः ।। ५८ ।।
पर्जन्याद्यवराः [2]-------- उत्तमा मताः ।
स्वाहा प्रधानाग्निभार्या पर्जन्याद् द्विगुणाधमा ।। ५९ ।।
उदकात्मको बुधस्तस्याः अवरः परिकीर्तितः ।
उषा नामात्मिका देवी स्वाहा दशगुणाधमा ।। ६० ।।
पृथिव्यात्मा शनिस्तस्या अवरः परिकीर्तितः ।
कर्मात्मा पुष्करो देवः शनेरवर ईरितः ।। ६१ ।।
शतं तथा सहस्राणि वह्निपुत्रास्तु षोडश ।
पितॄणां शतमेवात्र ह्यसुरास्त्रिंशदेव च ।। ६२ ।।
गन्धर्वाप्सरसां चैव द्विशतं परिकीर्तितम् ।
ऊर्वशी पूर्वचित्तिश्च सहजन्या च मेनका ।। ६३ ।।
विश्वाची च घृताची च षडेवाप्सरसां वराः ।
सप्त तिर्यक्षु रक्षस्सु त्रिंशच्चारणजातिषु ।। ६४ ।।
शतं सिद्धास्तथाऽन्याश्च सप्ततिस्सर्वजातिषु ।
ऊर्ध्वस्रोतस इत्युक्ता ऋषीणां च शतं तथा ।। ६५ ।।

---

1. जा वै ततः स्मृताः इति पाठः स्यात्
2. x x x

अनाख्याता देवतास्तु जाता देवकुले च याः ।
आजानजा इति प्रोक्ताः देवभृत्या इतीरिताः ।। ६६ ।।
पुष्करादवरा प्रोक्ताः कर्मजेभ्यः शतावराः ।
कृष्णप्रियाश्च या गोप्यः आजानाद् द्विगुणावराः ।।६७।।
पितरश्चिरनामानः सप्तोत्तरशतं विना ।
कृष्णप्रियाभ्यो गोपीभ्यो सर्वे पञ्चगुणावराः ।। ६८ ।।
ततस्तु देवगन्धर्वा अष्टोत्तरशतं विना ।
स्वमुखेनैव देवैर्ये आज्ञाप्याः सर्वदा गणाः ।। ६९ ।।
ऋषीणां शतकं त्यक्त्वा ऋषयः शतकोटयः ।
अप्सरस्त्रीशतं त्यक्त्वा शिष्टा अप्सरसस्तथा ।। ७० ।।
असुरा यक्षरक्षांसि चारणाः सिद्धकिन्नराः ।
विद्याधराश्च सिद्धाश्च भूतप्रेतपिशाचकाः ।। ७१ ।।
नागाः किम्पुरुषाश्चैव भेतालाश्चैव गुह्यकाः ।
स्कन्द [1] x x x x --------- व भैरवाः ।। ७२ ।।
रोयिन्यश्चैव डाकिन्यः शाकिन्यश्चारिका अपि ।
अपस्माराश्च मोहिन्यो वैष्णव्यो देवताधमाः ।। ७३ ।।
वैदिकाश्चैव तिर्यञ्चः सर्वे स्थावरजङ्गमाः ।
[2] ---------- पितृभ्यश्च शतावराः ।। ७४ ।।
देवप्रेष्याश्च गन्धर्वा ये वाऽन्यमुखगोचराः ।
ते हि मानुषगन्धर्वा गन्धर्वेभ्यः शतावराः ।। ७५ ।।

---

1. x x x x x
2. x x x x

यस्तु साधुगुणैर्युक्तः तस्यैषाऽप्यखिला मही ।
त्रेतायुगे चक्रवर्ती यदा मुक्तस्तु संसृतेः ।। ७६ ।।
एकानन्दस्वरूपोऽसौ मानुषो मुक्त इष्यते ।
मनुष्यगन्धर्वगणात्[1]---- शतगुणाधमः ।। ७७ ।।
मर्त्योत्तमस्ततो विप्राः क्षितिपेभ्यः शतावराः ।
मुक्तसङ्गा[2]----- हीनः स्वकर्मणा ।। ७८ ।।
तेभ्यः स्वकर्म[3]----- चरमाः संशयच्छिदः ।
संशयच्छेदकृद्भ्यश्च हीना वेदार्थवेदिनः ।। ७९ ।।
वेदार्थवेदिनस्तस्माद् अधमः श्रुतिमात्रवित् ।
तेषु संन्यासिनो वर्गादधमा ब्रह्मचारिणः ।। ८० ।।
ब्रह्मचारिगणेभ्यश्च वनस्था अधमा मताः ।
वनस्थेभ्यश्च सर्वेभ्यो गृहस्था अधमा मताः ।। ८१ ।।
ब्राह्मणेभ्यो गृहस्थेभ्यः क्षत्रिया अवमा मताः ।
तेभ्यः क्षत्रियजीवेभ्यः वैश्याश्चैवाधमा मताः ।। ८२ ।।
सर्वेभ्यो वैश्यजीवेभ्यः शूद्राः सर्वेऽधमा मताः ।
शूद्रेभ्यश्च क्रमेणैव वर्णबाह्याः सदावराः ।। ८३ ।।
मर्त्योत्तमेभ्यः सर्वेभ्यः चतुष्पात् पशवोऽवराः ।
अष्टाविंशद्विशेषेण यज्ञेषूपकृतं यतः ।। ८४ ।।
तिरंश्चां तावदेतस्माद् भण्यते शास्त्रवेदिभिः ।
गोरजो महिषः कृष्णः सूकरो गवयो रुरुः ।। ८५ ।।

1. ज्ञेयः इति स्यात्
2. x x x
3. x x x

अव्युष्ट्रौ च गजाश्वौ च तथैव खरोऽपरः ।
गौरश्च शरभश्चैव चमरी श्वसृगालकौ ।। ८६ ।।
वृको व्याघ्रश्च मार्जारो --- शशशाल्मकौ ।
कपिर्गजश्च गोधाद्या --जाः पक्षिणस्तथा ।। ८७ ।।
चतुष्पात्पशुजीवेभ्यः बहुपादोऽधमा मताः ।
बहुपद्भ्यश्च जीवेभ्यो अधमा उभयोदतः ।। ८८ ।।
रूपभेदविदो जीवा न्यूना उभयतो दतः ।
रूपभेदविदो जीवादधमाः शब्दवेदिनः ।। ८९ ।।
शब्दविद्भ्यश्च जीवेभ्योऽधमा गन्धवेदिनः ।
गन्धविद्भ्यश्च जीवेभ्यो ह्यधमा रसवेदिनः ।। ९० ।।
प्राणिभ्यो रसवेदिभ्योऽधमाः स्पर्शविदो मताः ।
प्राणिभ्यः स्पर्शवेदिभ्योऽधमा इन्द्रियवृत्तयः ।। ९१ ।।
जीवा इन्द्रियवृत्तिभ्यः सचित्ता अधमा मताः ।
सचित्तेभ्यश्च जीवेभ्यो स्मृताः प्राणभृतोऽधमाः ।। ९२ ।।
प्राणभृद्भ्यश्च जीवेभ्यः स्थावरा अवरा मताः ।
मध्यमा मानुषा ये तु सृतियोग्याः सदैव हि ।। ९३ ।।
विष्णोरुपेक्षाविषया स्थावरेभ्योऽधमा मताः ।
जीवेभ्यो मर्त्यमध्येभ्यो ह्यवरा प्रकृतिर्जडा ।। ९४ ।।
मर्त्याधमा इति ख्याताः विमुखा ये हरेः सदा ।
सुखदुःखादिहीनायाः प्रकृतेरवरा मताः ।। ९५ ।।
अनाख्यातासुरा ये तु तामसेष्वतिसात्विकाः ।
रक्षः पिशाचपूर्वास्तु मानुषाधमतोऽधमाः ।। ९६ ।।
रक्षःपिशाचकेभ्यस्तु दैत्यभृत्याः सदाधमाः ।
तेभ्यस्तु दैत्यभृत्येभ्यो दैत्येशा अधमा मताः ।। ९७ ।।

कलिस्तु सर्वजीवेभ्यो ह्यधमाधम ईरितः ।
विष्ण्वादिकलिपर्यन्तं तारतम्यमिदं मया ।। ९८ ।।
वर्णितं श्रीप्राणनाथः प्रसीदतु हयाननः ।
येन श्रीमध्वशास्त्रेषु शुकवत् शिक्षितोऽभवम् ।। ९९ ।।
आर्यनारायणार्यं तं तातपादं नतोऽस्म्यहम् ।
स्नातो यः शब्दतर्कागमकृतिविषये तन्त्रशास्त्रार्थनीतिं
प्राप्तः श्रीराघवेन्द्रव्रतिकुलतिलकात् सर्वतन्त्रस्वतन्त्रात् ।
नित्यं तत्पादुका तद्बुधगणपरिणीरार्यनारायणार्य- ?
? स्तत्सूनुः कृष्णनामा रचयमिममहं तारतम्यप्रबन्धम्
।। १०० ।।

**।। आर्यनारायणाचार्यसूनुकृष्णप्रणीतः**
**तारतम्यप्रबन्धः समाप्तः ।।**

## 12. छलारिनरसिंहाचार्यकृतः

# तारतम्योक्तिकौस्तुभः

लक्ष्मीपतिं मध्वगुरुं विद्याधीशादिसद्गुरून् ।
नत्वा वक्ष्ये गुणेयत्तातारतम्यं चिदात्मनाम् ।। १ ।।

विष्णुः सर्वोत्तमोऽनन्तगुणैः पूर्णो निरञ्जनः ।
ध्वनिव्य(ञ्जनना)देन वाच्यो वाक्यपदस्वरैः ।। २ ।।

नित्यावियोगिनी लक्ष्मीस्तदनन्तगुणाधमा ।
मुख्यप्राणात्मको ब्रह्मा श्रियः कोटिगुणाधमः ।। ३ ।।

वाणी हि भारतीरूपा विधेः शतगुणाधमा ।
रुद्रात्मशेषताक्ष्यौं च वाण्या शतगुणाधमौ ।। ४ ।।

विष्णुस्त्रियो जाम्बवती नीला भद्रा च लक्षणा ।
कालिन्दी मित्रविन्दा च शेषात्पञ्चगुणाधमाः ।। ५ ।।

उमात्मा वारुणी ताक्ष्र्यी विष्णुस्त्रीद्विगुणाधमे ।
स्वभर्तृभ्यः दश न्यूने सुखवीर्यादिकैर्गुणैः ।। ६ ।।

तथाऽपि वायुभारत्योः पृथगुक्तिः शिवोमयोः ।
स्तुत्यादौ युज्यते [1]--------------- णत्वतः ।। ७ ।।

तत्त्वमानाच्च तज्ज्ञप्तेः मुक्त्यर्थत्वोक्तितः श्रुतौ ।
ब्रह्माद्या वारुणी यावत् ज्ञानेऽनन्तगुणाधमाः ।। ८ ।।

---

1. x x x

उमा यावदनन्तांशान् पूर्वदृष्टेभ्य एव तु ।
विशेषान् वासुदेवस्य पश्चादुक्ता विचक्षते ।। ९ ।।

शक्रकामादयश्चैव विशेषान् ब्रह्मणि स्थितान् ।
उमादिभिः प्रबुद्धेभ्यः शतांशानेव चक्षते ।। १० ।।

इति मानादनुव्याख्यागताद् ज्ञेयो [1] ---- ।
उमाग्रहणात् ज्ञानमात्रग्रहादपि ।
अनन्तांशानिति ह्यस्य न ज्ञाने स्पष्टतार्थता ।। ११ ।।

इन्द्रोनः काम इन्द्रश्च सौपर्ण्यास्तु दशाधमौ ।
ज्ञाने तु शक्रकामाद्याः ज्ञेयाः शतगुणाधमाः ।। १२ ।।

ततोऽहङ्कारिकः प्राणः कामाद्दशगुणाधमः ।
ततः स्वायम्भुवो दक्षो ह्यनिरुद्धो बृहस्पतिः ।
शची रतिस्तथा प्राणाद् ज्ञेया दशगुणाधमाः ।। १३ ।।

मरीचिनामान्तरवान् प्रवहो मुख्यवायुजः ।
कोणाधिपः स एवोक्तो नासिक्यो भौतिकस्तथा ।। १४ ।।

मुमुक्षुभिर्गम्यतया सूत्रे प्रोक्तोऽर्चिरादिके ।
आतिवाहिक इत्युक्तः गुरोः पञ्चगुणाधमः ।। १५ ।।

विवस्वांश्च यमश्चन्द्रश्शतरूपा च मानवी ।
गुरोर्दशगुणाः प्रोक्ताः प्रवहाद् द्विगुणाधमाः ।। १६ ।।

---

1. xxx

यथाऽनन्दे तथा ज्ञाने विष्णुभक्तौ बलादिके ।
इति भाष्ये तैत्तिरीये तारतम्यं सुखादिषु ।। १७ ।।

प्रभानुक्तेर्गुरोश्चन्द्रे प्रभाधिक्ये न दोषता ।
ततस्तु वरुणः सूर्यात् पादपादार्धतोऽधमः ।। १८ ।।

नारदो वरुणान्न्यूनो भृगुवह्निप्रसूतयः ।
नारदात् किञ्चिदवराः वरुणात् पादतोऽधमाः ।। १९ ।।

मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्चेत्यजसुताः वैवस्वतमनुस्तथा ।। २० ।।

विश्वामित्रो वह्निनीचाः मित्रात् किञ्चिद् गुणाधिकाः ।
प्रावही निर्ऋतिस्तारा मित्रोऽग्नेर्द्विगुणाधमाः ।। २१ ।।

उरुक्रमो वायुरुद्रौ शक्रोऽहङ्कारिको गुरुः ।
विवस्वान् मित्रपर्जन्यौ प्रवहोऽग्निरपां पतिः ।
ऋभुत्रयं ह्येकमेव विश्वेदेवा दश स्मृताः ।। २२ ।।

वसवः सत्यरुद्राश्च दशाऽदित्या षडेव तु ।
चत्वारिंशत् तथा सप्त मरुतः पितरस्त्रयः ।
द्यावाभूमी च नासत्यौ शतस्था देवता मताः ।। २३ ।।

ब्रह्मा परब्रह्मनामा विष्णुश्च द्वौ शताधिकौ ।
उरुक्रमादिवरुणपर्यन्ता देवता विना ।। २४ ।।

शतस्थदेवा धनदः विष्वक्सेनो गणाधिपः ।
एते मित्रात् किञ्चिदूनाः परस्परसमा मताः ।
प्राणापानादयश्चैव किञ्चिदुच्चा मरुत्स्वपि ।। २५ ।।

विवस्वानर्यमा पूषा त्वष्टा च सविता भगः ।
धाता पर्जन्यवरुणौ मित्रशक्र उरुक्रमाः ।
एते तु द्वादशाऽदित्याः रुद्रा एकादश स्मृताः ।। २६ ।।

रैवतोऽजो भवो भीमो वाम उग्रो वृषाकपिः ।
अजैकपादहिर्बुध्निर्बहुरूपो महानिति ।। २७ ।।

द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषावस्तुर्विभावसुः ।
एतेऽष्टौ वसवो विश्वेदेवाः पुरूरवार्द्रवौ ।। २८ ।।

पुरुकुत्सौ कामकालौ तथा धुरिविलोचनौ ।
सत्यवसू इति ज्ञेया यज्ञोऽथो रोचनस्तथा ।। २९ ।।

सत्यजित्त्रिशिखविभू मन्द्रद्युम्नपुरन्दरौ ।
बलिरद्भुतशम्भू च विधृतस्त्वृत[1]धामकः ।। ३० ।।

दिवस्पतिः शुचिश्चेति हीन्द्राः स्वायम्भुवो मनुः ।
स्वारोचिषश्चोत्तमश्च तापसो रैवतस्तथा ।। ३१ ।।

चाक्षुषो वैवस्वतश्च सावर्णिर्ब्रह्मपूर्वकः ।
सावर्णीरुद्रसावर्णिर्देवसावर्णिरेव च ।
धर्मसावर्णिरित्येवं मनवश्च चतुर्दश ।। ३२ ।।

बलिपूर्वास्तु सप्तेन्द्राः ततोऽष्टौ देवगायकाः ।
कार्तवीर्यश्च दौष्यन्तिर्भरतः शशबिन्दुपः ।
ककुस्थमान्धातृपृथुमुख्याः कर्मजदेवताः ।। ३३ ।।

---

1. नामकः

तत्समाः पितरः सप्त ह्यार्षभो भरतो गयः ।
प्रियव्रताद्याः भरताद्याः प्रह्लादः स्वायम्भुवमनुं विना
।। ३४ ।।

वैवस्वतस्तापसश्च मनवोऽन्ये च पावकः ।
अग्निजोऽमी विघ्नपोनाः देवेभ्यस्तु शतावराः ।। ३५ ।।

विप्रत्वाच्च्यवनोचथ्यौ तन्मध्ये किञ्चिदुत्तमौ ।
संज्ञा गङ्गा च पर्जन्या नार्यो वै यमचन्द्रयोः ।
अनिरुद्धप्रियोषा च मित्रात्तु द्विगुणाधमाः ।। ३६ ।।

स्वाहादेवी वह्निजाया पर्जन्याद् द्विगुणाधमा ।
बुधो नीचोऽम्बुपस्तस्माद् उषा नामाभिमानिनी ।। ३७ ।।

अश्विभार्या बुधान्न्यूना स्वाहायास्तु दशावरा ।
धराभिमानि[1]--- उषसो ह्यधमः स्मृतः ।। ३८ ।।

शनैश्चरः कर्ममानी पुष्करो ह्यवरः स्मृतः ।
अनाख्याता देवताश्च जाता देवकुले च याः ।। ३९ ।।

गन्धर्वास्तुम्बुरुमुखाः शतमप्सरसां शतम् ।
नारदादीनुचथ्यान्ता नोक्ता हि ऋषयोऽखिलाः ।। ४० ।।

अजानदेवास्ते ज्ञेयाः अग्निजाः पावकं विना ।
शतोत्तराः कृष्णभार्या ह्यष्टसाहस्रसङ्ख्यकाः ।। ४१ ।।

---

1. x x x

आजानेयसमा एताः कशेरुस्तासु चोत्तमा ।
कर्मदेवशतोनास्ते उक्तान्ये पितरश्चिराः ।। ४२ ।।

आजानेभ्यः शतन्यूना पितृभ्यश्च शताधमाः ।
उक्तान्ये देवगन्धर्वा[1]xना नृगायकाः ।। ४३ ।।

गन्धर्वेभ्यो मानुषेभ्यः शतोनाश्चक्रवर्तिनः ।
सर्ववित्तसुपूर्णस्य स्यात् सप्तद्वीपवती मही ।
यदा दृढो विद्वान् युवा चिन्तादिवर्जितः ।। ४४ ।।

तत्सौख्यतुल्यसुखयुक् मुक्तौ क्षितिप ईरितः ।
क्षितिपाच्च शतांशोना ईरिता मानुषोत्तमाः ।। ४५ ।।

जम्बुद्वीपवती राजा दक्षश्च सततं स्वतः ।
स्वेष्टस्त्रीपुत्रभृत्याद्यैः सम्भृतो वैरिवर्जितः ।
यस्य यस्य सुखं लोके मुक्तौ विप्रस्य तादृशम् ।। ४६ ।।

शूद्रादिवर्णभेदेन यत्याद्याश्रमभेदतः ।
तेष्वपि ह्युच्चनीचत्वं पुराणे सम्प्रकीर्तितम् ।। ४७ ।।

ब्राह्मणः सर्वतः श्रेष्ठः तुर्यांशस्तस्य बाहुगः ।
वैश्यस्तु तत्पञ्चमांशः षष्ठांशस्तस्य शूद्रकः ।। ४८ ।।

आनुलोम्यप्रातिलोम्यजातीनां क्रमतः सुखम् ।
वंशैर्दीर्घैषणवत्या भूमिस्तु विस्तृता ।। ४९ ।।

---

1. x x x

क्षत्रमित्युच्यते प्राज्ञैः वंशः स्वदशहस्तकः ।
पञ्चोत्तरैर्विंशतिभिः सहस्राणां च षट्कृतैः ।। ५० ।।

क्षत्रैर्युतं तु यत् स्थानं यस्य स्यान्निरुपद्रवम् ।
सुखं तदधिपस्य स्यात् यत्तत्सुखमुदीरितम् ।। ५१ ।।

प्रातिलोमिषु हीनो यः स्वस्य स्यादन्त्यजस्य तु ।
गजाः शतावरास्तस्मात् तेभ्यश्चाश्वा ततो मृगाः ।। ५२ ।।

पशवश्च त्रयो पक्षिजातयो जलजा अपि ।
ततः क्षुद्रा जन्तवस्तु ततो वृक्षास्ततो लताः ।। ५३ ।।

गुल्माः तृणमुखाः क्रमात् [1]x x x x x x x ।
द्विगुणादवरास्त्वेकक्षेत्राधिपसुखं नृणाम् ।। ५४ ।।

इत्थं विष्णुरहस्योक्तविप्राद्युच्यत्वनीचता ।
विप्रादिमानुषान्ता तु श्रुतिस्मृतिपुराणगा ।। ५५ ।।

मध्यमा मानुषा नित्यसंसारि [2]x x x x x x ।
स्वरूपेणैव दैत्यानां पिशाचानां च रक्षसाम् ।
तत्वसङ्ख्यानप्रभृतौ भाष्ये चैवैतरेयके ।
तमोयोग्येषु गणना ------------ ।। ५६ ।।

प्रह्लादप्रमुखेष्वपि [3]x x x x x x ।
------------------------- ।। ५७ ।।

1. x x x
2. x x x x
3. x x x x

शापाद्दैत्यत्ववचनात् निर्ऋत्याद्यास्तथैव च ।
देवत्ववचनाच्चापि दैत्याद्या नैव मुक्तिगाः ।। ५८ ।।

अविद्यमानं यत्किञ्चित् धर्मज्ञानभ्रमो यतः ।
स्वातन्त्र्यबुद्धेः सर्वत्र तेषां मिथ्यामतिर्भवेत् ।। ५९ ।।

मिथ्याज्ञानस्वरूपत्वाद् अन्धे तमसि संस्थिताः ।
दुःखादिसाधने सौख्यसाधनत्वपरत्वतः ।। ६० ।।

दुःखे च सुखमानित्ववचनं न विरोधकम् ।
अतो नैते तारतम्ये तु मोक्षिणाम् ।। ६१ ।।

श्रीमद्विष्णुरमाब्रह्मपूर्णबोधश्च वैष्णवाः ।
विद्याधीशादिगुरवः प्रीयतां मम नित्यदा ।। ६२ ।।

मध्वशास्त्रामृताब्ध्युत्थतारतम्योक्तिकौस्तुभः ।
? छलारिनरसिंहोक्तो हृदि बिभृयात् हरिः सदा ।। ६३ ।।

**।। इति श्रीमद्विद्वच्चक्रचूडामणिकुलनरसिंहाचार्य**
**कृतस्तारतम्यकौस्तुभः समाप्तः ।।**

## 13. श्रीसत्यव्रतस्वामिपादकृतः

# तारतम्यसङ्ग्रहः

1. आदौ हरिः सर्वोत्तमः ।। १ ।।
2. तदनु लक्ष्मीः । अनन्तगुणेन नीचा ।। २ ।।
3. तदनु ब्रह्मवायू । कोटिगुणेन नीचौ । ज्ञानानन्दापेक्षया अनन्तगुणेन नीचौ ।। ३ ।।
4. तदनु सरस्वतीभारत्यौ । शतगुणेन नीचे । ज्ञानानन्दापेक्षयाऽनन्तगुणेन नीचे ।। ४ ।।
5. तदनु रुद्रशेषगरुडाः शतगुणेन नीचाः ।। ५ ।।
6. तदनु परमात्मपत्न्यः षण्महिष्यः नीला-भद्रा-मित्रविन्दा कालिन्दी-लक्षणा-जाम्बवत्यः पञ्चगुणेन नीचाः । जाम्बवत्याः लक्ष्म्यावेशे सा किञ्चिदधिका ।। ६ ।।
7. ततः सौपर्ण्यादयः षण्महिष्यपेक्षया गुणद्वयेन नीचाः । स्वपत्यपेक्षया दशगुणेन नीचाः ।। ७ ।।
8. ततः इन्द्रकामौ सौपर्ण्यादित्रयापेक्षया दशगुणेन नीचौ ।।८।।
9. तत आहङ्कारिकप्राणः दशगुणनीचः ।। ९ ।।
10. ततः कामपुत्रोऽनिरुद्धः बृहस्पतिः स्वायम्भुवमनुः दक्षप्रजेश्वरः शची रतिः एते षट् दशगुणेन नीचाः ।। १० ।।
11. ततः प्रवहवायुः पञ्चगुणेन नीचः ।। ११ ।।

12. ततः चन्द्रः सूर्यः यमः स्वायम्भुवपत्नी शतरूपा । एते चत्वारः गुणद्वयेन नीचाः ।। १२ ।।

13. ततः वरुणः पादपादार्धगुणेन नीचः ।। १३ ।।

14. ततः नारदः किञ्चिन्नीचः ।। १४ ।।

15. ततः भृगुः अग्निः प्रसूतिः दक्षपत्नी । एते त्रयः किञ्चिन्नीचाः ।। १५ ।।

16. वरुणापेक्षया पादेन नीचाः ततः ब्रह्मपुत्राः । मरीचिः-अत्रिः-अङ्गिराः-पुलस्त्यः-पुलहः-क्रतुः । वसिष्ठः एते सप्त, विश्वामित्रः वैवस्वतमनुः एते नव अग्न्यपेक्षया किञ्चिन्नीचाः ।। १६ ।।

17. ततः बृहस्पतिपत्नी तारा । प्रवहस्य पत्नी प्रावही । निर्ऋतिः, मित्रनामकसूर्यः एते चत्वारः ब्रह्मपुत्रापेक्षया किञ्चिन्नीचाः । अग्न्यपेक्षया द्विगुणेन नीचाः ।। १७ ।।

18. ततः विष्वक्सेनः अश्विनौ गणेश्वरः कुबेरः एते चत्वारः शेषशतस्थेषु नामग्रहणेन किञ्चिदुत्तमाः । एकोनपञ्चाशन्मरुतः (४९), रुद्राः (११), आदित्याः (१२), विश्वेदेवाः (१०), वसवः (८), पितरः (३), ऋभुगणः (१), द्युलोकाभिमानिनी भारती (१), पृथिव्यभिमानी शनैश्चरः (१), प्रधानवायुः (१), बृहस्पतिः (१), अश्विनौ (२) - एते शतस्थाः ।
एतेषु मध्ये उक्ताः षडादित्याः (६), रुद्राः (१), अग्निः (१), बृहस्पतिः (१), आहङ्कारिकप्राणः (१), प्रवहः (१), प्रधान-वायुः (१), अश्विनौ (२), द्युलोकाभिमानिनी भारती (१) = १५ ।। १८ ।।

19. ततः कर्मदेवाः । राजानः (१००), इन्द्राः (७), गन्धर्वाः (८), अप्सरसः (३), मनवः (११), पितरः (७), च्यवनः, उचथ्यः (२), पावकः एते अश्विन्यपेक्षया किञ्चिन्नीचाः ।। १९ ।।

20. तदनु भागीरथी । मेघाभिमानी पर्जन्यः । सूर्यपत्नी संज्ञा चन्द्रपत्नी रोहिणी । यमपत्नी शामला । अनिरुद्धपत्नी उषा । एते षट् कर्मदेवापेक्षया किञ्चिन्नीचाः । मित्रापेक्षया गुणद्वयेन नीचाः ।। २० ।।

21. ततः केचन देवाः केचन ऋषयः किञ्चिन्नीचाः ।। २१ ।।

22. ततः अग्निस्त्री स्वाहा किञ्चिन्नीचा । गङ्गाद्यपेक्षया द्विगुणेन नीचा ।। २२ ।।

23. तदनु जलस्यावान्तराभिमानी बुधः किञ्चिन्नीचः ।। २३ ।।

24. तदनु नामाभिमानिनी उषादेवी बुधापेक्षया किञ्चिन्नीचा । स्वाहापेक्षया दशगुणेन नीचा ।। २४ ।।

25. ततः पृथिव्यात्मा शनैश्चरः किञ्चिन्नीचः ।। २५ ।।

26. तदनु कर्माभिमानी पुष्करः किञ्चिन्नीचः ।। २६ ।।

27. तदनु आजानदेवाः तुम्बुरुमुखाः शतं गन्धर्वाः । ऊर्वशीप्रभृति शतम् अप्सरस्त्रियः । ऋषयः एते आजानदेवाः तत्समाः । अग्नयः । अग्निपुत्राः (१६०००) तत्समाः । कर्मदेवापेक्षया शतगुणेन नीचाः ।। २७ ।।

28. तदनु काश्चन अप्सरस्त्रियः कृष्णाङ्गसङ्गापेक्षाः । एता आजानदेवापेक्षया गुणद्वयेन नीचाः ।। २८ ।।

29. तदनु पितरः ५० गुणेन नीचाः । आजानदेवापेक्षया शतगुणेन नीचाः ।। २९ ।।

30. तदनु देवगन्धर्वाः । तेषु मध्ये शतन्यूनशतकोटयः ऋषयः पित्रपेक्षया शतगुणेन नीचाः ।। ३० ।।

31. तदनु मनुष्यगन्धर्वाः शतगुणेन नीचाः ।। ३१ ।।

32. तदनु क्षितिपाः शतगुणेन नीचाः ।। ३२ ।।

33. तदनु मनुष्योत्तमाः शतगुणेन नीचाः ।। ३३ ।।

**।। इति श्रीसत्यव्रतस्वामिपादकृतः**
**तारतम्यसङ्ग्रहः समाप्तः ।।**

# तारतम्यपञ्चश्लोकीविवृति-विषयसूची

# तारतम्यपञ्चश्लोकीविवृति-
# विषयसूची

## 14. प्रह्लादकृष्णाचार्यविरचिता

# तारतम्यपञ्चश्लोकीविवृतिः

तारतम्यपञ्चश्लोकी -

**विष्णुःसर्वोत्तमोऽथ प्रकृतिरथ विधिप्राणनाथावथोक्ते**
**ब्रह्माणी भारती च द्विजफणिपमृडाश्च स्त्रियः षट् च विष्णोः ।**
**सौपर्णी वारुणी पर्वतपतितनया चेन्द्रकामावथोऽस्मान्**
**प्राणोऽथो योऽनिरुद्धो रतिमनुगुरवो दक्षशच्यौ च पान्तु ।। १ ।।**

तारतम्यविवृतिः -

**(मङ्गलाशंसनम्)**

**[१] श्रीशेषशयनं नौमि निश्शेषगुणबृंहितम् ।**
**अशेषदोषरहितं विशेषज्ञं विमुक्तिदम् ।।**
**गुरुः श्रीतिरुमलाचार्यसूर्यो मे [२] शर्म यच्छतु ।**
**स्वान्तध्वान्तध्वंसकर्ता धर्ममार्गप्रदर्शकः ।।**

---

१. विशेषशयनं - ख.
२. वर्म - ख.

(तारतम्यज्ञानं मोक्षोपयोगि)

इह खलु सज्जनदया[1]परहरिणा दुर्वादिकुयुक्तिघनाच्छन्नं श्रीमद्वैष्णवसिद्धान्तभास्करं निजजनान् सम्यक् ग्राहयितुं तदाच्छादनापनयने आज्ञप्तः श्रीमुख्यप्राणः, श्रीमन्मध्वमुनित्वेन भुव्यवतीर्य तदाज्ञप्तमखिलं सम्पादितवान् । तत्र मोक्षोपयोगिज्ञानविषयं तारतम्यं स्वग्रन्थे प्रायेण स्थाने स्थाने निबद्धवान् । सर्वं [2] तदनुसन्धाय केनचित् सिद्धान्ताभिज्ञेन पञ्चभिः स्रग्धरावृत्तश्लोकैः विष्ण्वादिदेवताक्रमनिबन्धः कृत इति केचित् । अन्ये तु श्रीमध्वाचार्याणां ज्येष्ठभगिन्या कल्याणीदेवीनाम्न्या [3]तदुपदेशानुसारेणेयं पञ्चश्लोकी कृतेत्याहुः । सर्वथाऽपीयं पञ्चश्लोकी मध्वशास्त्रवेदिभिः परमादरेण स्वीकृतेति सा व्याख्यायते ।

*अथ प्रथमकक्ष्या*

(विष्णुः सर्वोत्तमः)

**विष्णुः सर्वोत्तम** इति । अत्र विष्णुः प्रकृतिः ब्रह्मवायू इत्यादि[4]रूपेणास्मिन् श्लोके दशसु कक्ष्यासूक्ता देवा अस्मान् पान्त्वित्यन्वयः । तेषां तारतम्यज्ञानायाथादिशब्दप्रयोग इति ज्ञेयम् । विष्णुः सर्वेभ्यः देवर्ष्यादिभ्यः सर्वैर्गुणैश्चोत्तम इति विष्णुः सर्वोत्तम इत्यस्यार्थः ।।१।।

*अथ द्वितीयकक्ष्या*

(विष्णोः प्रकृतिरनन्तांशन्यूना)

**अथ प्रकृतिरिति** । यद्यपि प्रकृतेर्विष्ण्वनन्तरत्वमात्रमत्रोक्तं, तथाऽपि **'ततोऽनन्तांशहीना च'** (३.५. P. ५६२) इति बृहद्भाष्यानुसारादनन्तगुणन्यूनत्वमेव द्रष्टव्यम् ।। २ ।।

---

१. परिहारिणा - क. २. तेऽनुसन्धाय - क.
३. तदादेशा - ख. ४. रूपणे - ख.

*अथ तृतीयकक्ष्या*

**(विधिवायू श्रियः कोटिगुणाधमौ)**

**अथ विधिप्राणनाथाविति ।** अत्र लक्ष्म्यपेक्षया कोटिगु[१]णन्यूनत्वं ब्रह्मवाय्वोरनुसन्धेयम् । **'एतेभ्यः श्रीस्तु मुक्तेभ्यो गुणैः कोटिगुणोत्तरा'** (३.५. P.५६२) इति बृहद्भाष्यात् ।। ३ ।।

*अथ चतुर्थकक्ष्या*

**(ब्रह्माणीभारत्यौ स्वपतिभ्यः सर्वगुणैः शतांशन्यूने)**

**अथोक्ते ब्रह्माणी भारती चेति।** अत्र ब्रह्मणः स्त्रीः ब्रह्माणीति नार्थः। तथा सति 'पुंयोगादाख्यायाम्' (पा.अ. ४.२.४८) इति [२] ङीषि ब्रह्मणीति स्यात् । न तु ब्रह्माणीति । तथाऽपि ब्रह्माणमानयति जीवयतीति ब्रह्माणी 'कर्मण्यण्'(पा.अ.३.२.२) अण्णन्तत्वात् ङीप् इति बोध्यम् । "सरस्वतीभारत्यौ आनन्दादिभिर्ब्रह्मवायुभ्यां [३] शतावरे । **'शिवादाशा तथैवास्याः मुख्यवायुः शतोत्तरः'** इति छान्दोग्यभाष्यात्(७.१)।

'ज्ञानविषये अनन्तांशन्यूने ।

**'उमा यावदनन्तांशान् पूर्वदृष्टेभ्य एव तु ।**
**विशेषान् वासुदेवस्य पश्चादुक्ता विचक्षते'** ।(अनु.३.४८७ P.४८६)

इति अनुव्याख्यानोक्तेः" इति केचित् । सम्प्रदायविदस्तु - **ज्ञाने आनन्दादौ च ब्रह्मवाय्वपेक्षया शतांशन्यूनत्वमेव सरस्वतीभारत्योः भणन्ति ।**

**चन्द्रेत्यादिस्वरूपायास्तेभ्यः शतगुणावराः ।**
**विष्णुभक्तौ च तत्प्रीतौ ज्ञानानन्दादिकेष्वपि ।।**
**मुक्तेः [४] पश्चादपि गुणैः सर्वैः ब्रह्मभ्य ईरिताः ।**

---

१. गुणेनून - क.  २. अपि - ख.
३. शतदशावरे - ख.  ४. पदादपि - क.

इति बृहद्भाष्ये (अ.३.ब्रा.५ P.५६२) स्पष्टं ज्ञानेऽपि शतांशोनत्वोक्तेः।

किञ्च सरस्वत्यादिज्ञानं ब्रह्मादिज्ञानापेक्षया अनन्तांशोनं तदानन्दादिकं तु ब्रह्माद्यानन्दापेक्षया शतांशन्यूनमित्यङ्गीकारे बहुप्रमाणविरोधः । तथा हि -

**मुख्यं समग्रं तद् ब्रह्म [1]ज्ञानस्यापि समग्रतः ।**
**किञ्चित् समग्रतां देवास्तेषां ज्ञानं हि तादृशम् ।।**
**आपुस्ततोऽधमां ज्ञानतादृक्त्वाद् ऋषयोऽपि तु ।।**
**ऋषिभ्योऽप्यधमां प्रापुर्मानुषा असमग्रताम् ।।**

इति बृहद्भाष्ये (अ.३.ब्रा.५ P.५८३) ज्ञानपूर्णतातारतम्यानुसारेणाऽनन्दादिपूर्णतारतम्यमित्युक्तम्। तस्यार्थः - 'ज्ञानस्य समग्रतः समग्रत्वात् निरवधिकत्वात् तद् ब्रह्म मुख्यं समग्रम् । आनन्दादि[2]भिर्निरवधिकतया पूर्णम् । हिशब्दो हेतौ । यस्मात् तेषां देवानां ज्ञानं तादृशं निरवधिकपूर्णं न भवति । किन्तु यथायोग्यमेव पूर्णम्, अतो देवाः किञ्चित्समग्रतां यथायोग्यमेवाऽनन्दादिपूर्णतामापुः । ऋषयस्तु ततः देवेभ्यः अधमां देवापेक्षया न्यूनाम् आनन्दादिपूर्णतामापुः । तत्र हेतुर्ज्ञानतादृक्त्वादिति । ज्ञानस्य ऋषिज्ञानस्य 'तादृक्त्वात्' देवज्ञानापेक्षया न्यूनत्वादित्यर्थः । मानुषास्तु ऋषिभ्योऽप्यधमाम् असमग्रतामापुः । कुत इत्यतो ज्ञानतादृक्त्वात् इत्यनुवर्तनीयम् इति ।

एवं तत्रैव ज्योतिर्ब्राह्मणे - (अ.६.ब्रा.५ P.७०३)

**स्वयोग्यभगवद्दृष्टेः सर्वैर्मुक्तिरवाप्यते ।**
**पुनर्ज्ञानान्तराधिक्यात् सुखाधिक्यं विमोक्षणे ।।**

इति [3] ज्ञानाधिक्यात् सुखाधिक्यमुक्तम् । एवं -

१. मानस्यापि - क. २. र्निरवद्यतया - क. ३. ज्ञानेऽधिक्यम् - क.

**यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे ।**
**तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने ।।**
(अ.३.४. ब्रा.६५ P.४८८)

इति ज्ञानं यावद्विशेषवत् तावदेव तत्फलभूतमानन्दादिकं विशेषवदित्युक्तम् । माहात्म्यज्ञानसमुदायस्यैव भक्तित्वेन भक्तिविशेषोक्त्यैव ज्ञानेऽपि विशेषतालाभात् । ज्ञानिनां लिङ्गभेदने लिङ्गभङ्गे सति मुक्तिविशेष आनन्दादिविशेषो भवतीत्यर्थः ।

एवं **'यावत्सेवा 'परे तत्त्वे तावत्सुखविशेषता'** इति सेवाशब्दोक्तज्ञानविशेषानुसारेणैव मुक्तौ सुखविशेषः । विशेषतेति तल् प्रत्ययस्तु स्वार्थिकः । ततश्च साधनफलयोः [२] ज्ञानसुखयोः समपरिमाणत्वमुक्तस्मृतावभिहितम् । एवं -

**युक्तं च साधनाधिक्यात् साध्याधिक्यं सुरादिषु ।**
**नाऽधिक्यं यदि साध्ये स्यात् प्रयत्नः साधने कुतः ।।**

इत्यनुव्याख्याने (अ.३.४.३९ P.४८१) **'साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः'** इति ब्रह्मवैवर्ते च साधनफलयोः साम्यमुक्तम्। तदेवं बहुप्रमाणेषु ज्ञानविशेषानुसारेणैव तत्फलं सुखं विशेषवदित्युक्तम् । ततश्च सरस्वतीभारतीज्ञानापेक्षया ब्रह्मवायुज्ञानमनन्तगुणाधिकं तदा[३]नन्दादिकं तु सरस्वत्याद्यानन्दापेक्षया शताधिकमित्यङ्गीकारे उक्तप्रमाणविरोधः। तत्र साधनीभूतज्ञानस्य फलभूतानन्दादेश्च समपरिमाणत्वस्यैवोक्तत्वात्।

न चानुव्याख्यानविरोधः । तस्य स्फुटत्वाभिप्रायकत्वादिति तैत्तिरीयभाष्य एवोक्तत्वात् । यथोक्तं -

---

१. परम् - ख.
२. ज्ञानसुखे समत्वे - क. ३. पदानन्द

**'अनन्तगुणितास्तथा । परिमाणे शतगुणेऽप्यानन्दस्फुटतावशात्'** इति । (तै.भा.२ P.१४१)

न च तत्राऽनन्दमात्रग्रहणात् तस्यैवानन्तांशोनत्वं स्फुटत्वाभिप्रायेण व्याख्यायत इति वाच्यम् । आनन्दशब्दस्य [1]ज्ञानाद्यशेषगुणोपलक्षक-त्वात्। अन्यथा **'यथाऽनन्दे तथा ज्ञाने विष्णुभक्तौ बलादिके'** इति पूर्वेण **'उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटाः'** इत्युत्तरेण विरोधात् । तस्माद् ब्रह्मवायुभ्यां सरस्वतीभारत्यौ ज्ञानादिसर्वगुणैरपि शतांशन्यूने एवेति ।

किञ्चैतरेयभाष्ये - (ऐ.भा.द्वि.प्र. P.२६५)

**ब्रह्मवायू च तद्भार्ये वीन्द्रशेषौ च तत् स्त्रियौ ।**
**शिवस्तद्दयिता शक्रकामौ तद्दयितादयः ।**
**सर्वे सुराः क्रमेणैव विष्णोर्जाता [2]अवाख्यकाः ।**
**ज्ञानानन्दबलाद्येषु विष्णुभक्तौ च सर्वशः ।**
**हीनाः शतगुणेनैव क्रमेणानेन ते मताः ।।**

इति तत्त्वसारवाक्यमुदाहृतम् ।

**क्षितिपा मनुष्यगन्धर्वाः देवाश्च पितरश्चिराः ।**
**[3]आजानजाः कर्मजाश्च तात्विका दक्ष एव च ।।**

(ऐ.भा.प्र.प्र. P.२८५)

**शक्रश्चोमा च रुद्रश्च भारती वायुरेव च ।**
**मुक्तावुक्ताः शतगुणाः बलज्ञानगुणादिभिः ।**
**विष्णुभक्त्यादिभिश्चैव गुणैः सर्वैः क्रमाधिकाः ।**

---

१. ज्ञानविशदात् - क. २. अमा - क.
३. अज्ञानजा - ख.

इति [1]महासंहितावाक्यं च तत्रैवोदाहृतम् । अत्रोभयत्राऽपि आनन्दादाविव ज्ञानेऽपि ब्रह्माद्यपेक्षया सरस्वत्यादेः शतांशावरत्वमेवोच्यते । अतस्तदेवाङ्गीकार्यम् ।

न चोभयत्राऽपि **'शब्दो बहुत्ववचनः शतमित्यतश्च श्रुत्यन्तरेषु बहुधोक्तिविरुद्धता न'** इति भारततात्पर्यानुसारेण (१.१६) [2]शतशब्दस्य गौणार्थत्वमवश्यमङ्गीकार्यम् । अन्यथा शिवाद्यपेक्षया तत्पत्न्यादीनां **'सर्वे त्वेते दशोत्तराः'** इति दशगुणावरत्वप्रतिपादकप्रमाणान्तरविरोधापातादिति वाच्यम् । वाचनिकबलेन तदंशे शतशब्दस्य गौणार्थत्वेऽपि सरस्वतीरुद्रांशे मुख्यार्थत्वस्यैवाङ्गीकार्यत्वात् । अन्यथोक्तबृहद्भाष्यविरोधात् ।

न च सकृत् श्रुतस्यैकत्र मुख्यत्वमन्यत्राऽमुख्यत्वं च विरुद्धमिति वाच्यम् । **"नेक्षेतोद्यन्तमादित्यं [3]नास्तं यन्तं कदाचन । नोपरक्तं न वारिस्थं न मध्यं नभसो गतम्"** । इत्यादावेकस्यैवाऽदित्यशब्दस्य मुख्यामुख्यार्थत्वयोर्दृष्टत्वात् । आदित्यशब्दस्योद्यदादित्यादौ मुख्यत्वेऽपि वारिस्थे मुख्यत्वाभावात्। बिम्बप्रतिबिम्बयोर्भेदाभ्युपगमात् । तस्माद् बृहद्भाष्योक्तप्रमाणबलात् सरस्वतीरुद्रांशे ऐतरेयभाष्योदाहृतप्रमाणाच्च **आनन्दादाविव [4]ज्ञानेऽपि ब्रह्मवाय्वपेक्षया सरस्वतीभारत्योः शतांशन्यूनत्वमेवेति सिद्धम्** ।। ४ ।।

*अथ पञ्चमकक्ष्या*

**द्विजफणिमृडाश्चेति**

द्विजाः पक्षिणश्च फणिनः सर्पाश्च द्विजफणिनस्तान् पात इति

१. महाहिताक्यम् - ख. २. बहुत्वशब्दस्य - क.
३. नष्टं यान्तं - ख. ४. ज्ञान इति नास्ति - क.

द्विजफणिपौ, गरुडशेषौ । तौ च मृडश्चेति तथा गरुडशेषरुद्राः । सरस्वत्याद्यपेक्षया आनन्दादौ शतांशन्यूनाः । ज्ञाने त्वनन्तांशन्यूना इति केचित् ।

(द्विजादयः सरस्वत्यपेक्षया ज्ञानानन्दादिषु शतावराः)

ज्ञाने आनन्दादौ **शतांशोना एव** । बृहद्भाष्यशेषे **'सदाशिवश्चोर्ध्व'** इत्याद्युक्तत्वात् । ऐतरेयभाष्योदाहृततत्वसारवाक्ये महासंहितावाक्ये च गरुडादीनां सरस्वत्याद्यपेक्षया ज्ञानानन्दादिभिस्सर्वैर्गुणैः [1]शतावरत्वस्य स्पष्टमुक्तत्वाच्च । **'शिवादाशा तथैवास्या मुख्यवायुः शतोत्तरौ'** इति छान्दोग्यभाष्योक्तेश्चेति (अ.७. P.४८६) सम्प्रदायविदः ।

(अनुव्याख्यानविरोधपरिहारः)

ननु ब्रह्मापेक्षया सरस्वत्याः तदपेक्षया च रुद्रस्य ज्ञानानन्दादिभिस्सर्वैर्गुणैः शतांशोनत्वमेवेत्युक्तम् । तदयुक्तम् । **उमा यावत्** इत्यनुव्याख्याने ब्रह्मज्ञानात् सरस्वतीज्ञानस्य तस्माच्च रुद्रज्ञानस्यानन्तांशोनत्वाभिधानेन तद्विरोधात् ।

न च बृहद्भाष्याद्युदाहृतबहुप्रमाणेषु सरस्वतीरुद्रज्ञानानां [2]शतगुणतारतम्याभिधानात् तद्विरोध इति वाच्यम् । यदि ज्ञानेऽनन्तांशोनत्वं [3]स्पष्टत्वेन विवक्षितं स्यात् तर्ह्यानन्दादावपि स्पष्टत्वाभिप्रायेणानन्तांशोनत्वं वक्तव्यं स्यात् अविशेषात् । **'परिमाणे शतगुणेऽप्यानन्दस्फुटतावशात्'** (तै.भा.२ P.२४०) इत्यानन्दे स्फुटत्वोक्तेः । **'उत्तरेषा-**

१. दशावरस्य - ख.
२. दशगुण - क.
३. स्पष्टत्वं न - ख.

**मुत्तरेषां गुणा एवमतिस्फुटाः'** (तै.भा.२.प्र. P.२०८) इति सामान्यतः सर्वगुणानां स्फुटत्वोक्तेश्च । तस्मादुक्तातिप्रसङ्गान्नानुव्याख्यानस्य स्पष्टत्वाभिप्रायकत्वं किन्तु वास्तवमनन्तांशोनत्वमेव तत्राभिप्रेतम् । अतस्तद्विरोधाद् ब्रह्मसरस्वतीरुद्रज्ञानानां न शतगुणतारतम्यं युक्तमिति ।

अत्र ब्रूमः - न हि वाङ्मात्रेणानुव्याख्यानोक्तमनन्तगुणतारतम्यं स्पष्टत्वाभिप्रायकमिति ब्रूमः । किन्तु निरवकाशत्वेन बहुत्वेन कारणोत्कर्षे कार्यापकर्षायोगः स्यात् । न चैवम् । अतः कारणीभूतं ज्ञानं [1]नानन्तगुणतारतम्योपेतमित्यनुव्याख्यानादिसूचितवक्ष्यमाणतर्कानुगृहीतत्वेन च प्रबलैर्बृहद्भाष्यतत्त्वसारमहासंहितावाक्यैर्विरोधात् । ततश्च यदि ज्ञानेऽनन्तांशत्वं स्पष्टत्वेन विवक्षितं स्यात्तर्ह्यानन्दादावपि अनन्तांशत्वेन स्पष्टत्वं वक्तव्यं स्यात् अविशेषादित्यतिप्रसङ्गो न युक्तः । ज्ञानस्यानन्तांशोनत्वोक्तौ बहुत्वेन निरवकाशत्वेन प्रबलप्रमाणविरोधवदानन्दादीनां [2]शतांशतारतम्योक्तौ तादृशप्रमाणविरोधाभावात् । ततश्च प्रबलप्रमाणविरोधसदसद्भावाभ्यां विशेषादविशेषोऽसिद्ध इति प्रतिपादनं युक्तं मूलशैथिल्यादिति ।

किञ्च **'ये त्वां पश्यन्ति भगवन् त एव सुखिनः परम्'** इति गीताभाष्योक्तस्मृतौ अपरोक्षज्ञानसुखयोः कार्यकारणभावः सूचितः । **"युक्तं च साधनाधिक्यात् साध्याधिक्यं सुरादिषु"** इत्यनुव्याख्याने (अनु.३.४.३९ P.४८१) [3]कारणोत्कर्षेण कार्योत्कर्ष इत्युपपादितम् ।

तथा च यदि उमारुद्रसरस्वतीब्रह्मज्ञानानाम् अनन्तगुणतारतम्यं

---

१. नानन्तेति नास्ति - क. २. शतशतांश - ख.
३. करणाकर्षणे - ख.

स्यात् तदा [१]तत्साध्यमौक्तसुखानामपि अनन्तगुणतारतम्यमेव स्यात् । न तु शतगुणतारतम्यं, कारणतारतम्यानुसारेण कार्यतारतम्यमिति नियमस्यानुव्याख्याने उपपादितत्वात् । न चेष्टापत्तिः । रुद्रादिब्रह्मान्तानन्दस्य शतगुणतारतम्यमेवेति श्रुत्यादिसिद्धत्वात् । अतो न केवलं [२]प्रबलागमविरोधादेवोक्तानुव्याख्यानस्य स्पष्टताभिप्रायकत्वं किन्तूक्तप्रबलतर्कविरोधादपि ।

किञ्चानन्तांशोनत्वप्रतिपादकस्य शतगुणतारतम्याभावेऽपि शतांशोनत्वप्रतिपादकस्य च सर्वस्याऽपि वाक्यस्य स्पष्टत्वाभिप्रायकत्वं न[३] केवलं प्रबलश्रुत्यादिविरोधमात्रेणाङ्गीकार्यम्, किन्तु तैत्तिरीयभाष्याऽभिहितत्वाच्च । तदुक्तं -

**यथाऽनन्दे तथा [४]ज्ञाने विष्णुभक्तौ बलादिके ।**
**गुणैस्सर्वैः शतगुणाः क्रमेणोक्तेन तेऽखिलाः ।।**
**अथवा सहस्रगुणिता अनन्तगुणितास्तथा ।**
**परिमाणे शतगुणेऽप्यानन्दस्फुटतावशात् ।। इति ।**

(तै.भा.२. P.१४०)

श्लोकद्वयस्यायमर्थः -

अत्र 'यथानन्द' इत्यर्धस्य **'तस्माद् ब्रह्मा शतगुणो मुक्त इत्येव निर्णयः'** इति पूर्ववाक्येनान्वयः । मुक्तो ब्रह्मा तस्माद् रुद्राद् यथानन्दे शतगुणः शतगुणाधिकः, तथा ज्ञाने विष्णुभक्तौ [५]बलादिके सर्वगुणेऽपि शतगुणाधिक इत्येष निर्णय इति ।

---

१. तन्मौक्तसाध्यसुखा - ख. २. प्रबलाविरोधेन - ख.
३. नेति नास्ति - क. ४. ध्यान - क.
५. वराधिके - क.

इदं च शतगुणतारतम्यकथनं यत्र न मानान्तरविरोधस्तत्र मुख्यमेव। यत्र तद्विरोधस्तत्र स्पष्टत्वाभिप्रायकमिति वदन् प्रसङ्गात् सहस्रगुण-तारतम्यकथनम् अनन्तगुणतारतम्यकथनमपि स्पष्टत्वाभिप्रायकमित्याह - **सर्वैर्गुणैरिति** सार्धश्लोकेन ।' ते मनुष्योत्तमाद्या विरिञ्चान्ता अखिला अपि जीवाः परिमाणे आनन्दादीनां परिमितत्वे शतगुणे, अपि [१]शब्दा-द्दशगुणे पञ्चगुणे द्विगुणेऽपीत्यादि ग्राह्यम् । **आनन्दस्फुटतावशादिति।** अत्र क्रमेणेत्यनुषञ्जनीयम् । आनन्दग्रहणं ज्ञानादीनामुपलक्षणम् । 'यथानन्दे तथा ज्ञाने' इति 'सर्वगुणैः' इति च सर्वेषां ज्ञानादिगुणानां प्रकृतत्वात् । **'उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटाः'** इत्युत्तरवाक्ये सर्वेषां (तै.भा.१. P.१४१) [२]ज्ञानादिगुणानां स्पष्टतातारतम्यसूचनाच्च। तथा चानन्दादिगुणानां स्फुटतातारतम्यवशादुक्तेन क्रमेण सर्वगुणैः शतगुणाधिकाः । अथवा सहस्रगुणिता यद्वाऽनन्तगुणिता इत्युच्यत इति ।

अत्रायं विवेकः - कर्मदिवेभ्यस्तत्त्वदेवास्तेभ्यो दक्षश्च कतिपयैरेव गुणैस्तारतम्योपेतः । **'पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च । द्विगुणा एवानिरुद्धोऽनिलात् पञ्चगुणाधिकः'** इति छान्दोग्यभाष्ये (अ.७.P.४८६) तथैव प्रतीतेः । तत्र हि मित्रपर्जन्यमध्यवर्तिबल्यादिकर्मदिवापेक्षया मित्रे किञ्चिदाधिक्यम् । तस्मादग्नेर्द्विगुणाधिकत्वम् । तस्मात् सोमादेः किञ्चिदाधिक्यम् । **'पादोनो वरुणादग्निरध्यर्धोनः स सोमतः'** इत्युक्तेः [३]सोमात्प्रवहस्य द्विगुणाधिकत्वम् । तस्मादनिरुद्धस्य तत्समानदक्षादीनां च पञ्चगुणाधिकत्वमुच्यते । एवं च कर्मदिवतत्वदेवदक्षाणां तैत्तिरीय-श्रुत्याद्यनुसारेण शतगुणतारतम्योक्तौ निरवकाशश्छान्दोग्यभाष्यविरोधः। अतः [४]कर्मदिवतत्त्वदेवदक्षाणां ज्ञानादिस्पष्टतातारतम्याभिप्रायेणैव तैत्ति-

---

१. शब्दगुणे २. x x x - क. ख.
३. सोमप्रभवस्य ४. कर्मत्वकक्षाणां - ख.

रीयश्रुत्यादौ शतगुणतारतम्यमुच्यत इत्यवश्यमङ्गीकार्यम् । एवं दक्षाहङ्कारिकप्राणशक्रोमारुद्राः दशगुणतारतम्यवन्तः । **'सर्व एते दशोत्तराः'** इति छान्दोग्यभाष्ये तथोक्तत्वात् । तथाऽपि शक्रोमा-रुद्राणां **'शक्रश्चोमा च रुद्रश्च भारती वायुरेव च । मुक्तावुक्ताः शतगुणाः बलज्ञानादिभिर्गुणैः'** (ऐ.भा.द्वि.प्र. P.१८५) इत्यैतरेय-भाष्योक्तस्मृतौ ज्ञानादिसर्वगुणैरपि यच्छतगुणतारतम्यमुच्यते । यच्च **'[1]शक्रकामादयश्चैव विशेषान् ब्रह्मणि स्थितान् । उमादिभ्यः [2]प्रबुद्धेभ्यः शतांशानेव चक्षते'** (अनु.३.४.८८.) इत्यनुव्याख्यानोक्तश्रुतौ उमाशक्रा-हङ्कारिकप्राणदक्षाणां ज्ञाने शतगुणतारतम्यमुच्यते । तत्सर्वं स्पष्टत्वा-भिप्रायेणैव । अन्यथा 'सर्व एते दशोत्तराः' इति निरवकाशप्रमाण-विरोधात् । एवं रुद्रभारतीवायवः ज्ञानानन्दादिभिर्गुणैः [3]शतगुणतार-तम्यवन्तः । उदाहृततैत्तिरीयभाष्योक्तस्मृत्यादिसिद्धत्वात् । तथापि **'उमा यावत्'** इति श्रुतौ ज्ञानादिस्फुटतातारतम्याभिप्रायेण ज्ञानेऽन-न्तगुणतारतम्योपेता इत्युच्यते । [4]अन्यथोक्तबहुप्रमाणविरोधात् । एवमेते जीवाः स्पष्टक्रमाभिप्रायेणैव क्वचित् श्रुतौ सहस्रगुणिता इत्यु-च्यन्त इति योज्यम् ।

यत्तु **'उत्क्रान्तिगत्यागतीनाम्'** (ब्र.सू. २.३.२०) इत्यादिसूत्रेण ब्रह्मादिसर्वजीवा[5]नामणुत्वावगमात् तत्स्वभावभूतानामानन्दज्ञाना-दीनामुत्तरोत्तरशतगुणत्वेऽङ्गीकृते परिमाणाधिक्यप्राप्तिरित्यत आह - **परिमाण इति ।** परिमाणे । अपिशब्दात्समान इति गृह्यते । सर्वेषां जीवानामणुपरिमाणे समानेऽपि स्फुटतावशात् आनन्दे अपिशब्दोऽत्रापि

---

१. शक्ति - ख. २. प्रभु x x x - क.
३. शतगुणेति नास्ति - क.
४. अन्योक्त - क. ख.
५. नामवगमात् - क.

**सम्बध्यते** । तेन ज्ञानादिगुणाः गृह्यन्ते । तथा चाऽनन्दादौ सर्वगुणैः स्फुटतावशाच्छतगुणे सति सर्वगुणैश्शतगुणाः सहस्रगुणिता [१]अनन्त-गुणिताश्च भवन्तीति पूर्वेणान्वयः । समपरिमाणानां स्फुटत्वाधिक्यं कथमित्यतः कैमुत्येनोपपादयति - **'यथा दीपाच्छतगुणाऽप्यग्निज्वाला न दीपवत्'** इत्यादिना (तै.भा.२. P.१४१) । यदाऽधिकपरिमाण-काष्ठज्वालापेक्षया स्वल्पपरिमाणस्याऽपि दीपस्याधिकप्रकाशतालक्षण-स्फुटत्वं तदा समपरिमाणस्य जीवस्याऽनन्दस्फुटताधिक्यं किं वक्तव्यम् इति भाव इति ।

तत्र अणुपरिमाणे समानेऽपीत्यनेन यदुक्तं ब्रह्मादिमनुष्योत्तमान्तानां मुक्तानामणुपरिमाणसाम्यं, तत्तावद् बृहद्भाष्यविरुद्धम् । तत्तत्र -

**अल्पतेजस्तथैवाल्पं जीवरूपं हि संसृतौ ।**

**तदेव सुमहत्तेजः करोति भगवान् महत् ।।** (बृ.भा.अ.६ P.७२२)

इति [२]वाक्येन मुक्तौ महत्परिमाणस्यैवोक्तत्वात् । किञ्च ब्रह्मादि मनुष्योत्तमान्तानां मुक्तौ परिमाणान्तरं भवति । अभौतिकानि हि तानि [३]नित्योपाधिविनिर्मितानीश्वरशक्त्या । यथोक्तं - **'शरीरं जायते तेषां षोडश्या कलयैव तु'** इति नारायणरामकल्प इति गीताभाष्य-ग्रन्थेन संसारापेक्षया मुक्तौ जीवानां चिदात्मकशरीरान्तरोत्पादाभिधा-नात् । तथा च प्रमेयदीपिकायां व्याख्यातम् - **अभौतिकानि हीति** । अजडानीत्यर्थः । तर्हि किमात्मकानीत्यत आह - **नित्येति** । विकारित्वे विनाशः स्यादित्यत उक्तं - **ईश्वरशक्त्येति** । कुत एतदित्यत आह - **तथा चेति** । नित्योपाधिरेव षोडशीकलेति । एवं च गीताभाष्यतट्टीकयोः

१. अनन्त इति नास्ति - क.

२. वाक्योक्तो मुक्तो - क.

३. नैयत्य निमित्तानि - ख.

संसारे अल्पं यज्जीवस्वरूपं तदेव मुक्तौ[१] *महाशरीरात्मना परिणमते। ईश्वराचिन्त्यशक्तिबलेन च मुक्तशरीरस्य विकारित्वेऽपि न विनाश इति प्रतिपादितत्वान्मुक्तानामणुपरिमाणाङ्गीकारे तद्विरोध इति ।

यदपि अणुजीव (*स्वभाव) भूतानामानन्दज्ञानादीनामुत्तरोत्तर-शतगुणोद्रिक्तत्वेऽङ्गीकृते परिमाणाधिक्यप्राप्तिरिति ।

तदपि न । मुक्तौ परिमाणाधिक्यापादने इष्टापत्तेः । तत्र परि-माणाधिक्यस्योक्तबृहद्भाष्यादिसिद्धत्वात् । ततः प्राक् जीवन्मुक्त्य-वस्थायां *तदापादने तु इष्टापत्तिरेव । तदा अणिमाद्यष्टसिद्धिसम्पत्त्या परिमाणाधिक्यस्याऽपि सद्भावात् । ततः प्राक् संसारदशायां तदापादनं त्वयुक्तमेव । आपादकस्य जीवस्वरूपभूतगुणानां शतगुणोक्तेश्च संसा-रदशायामभावादिति ।

यदपि आनन्दादौ सर्वगुणे स्फुटतावशाच्छतगुणे सतीति । तदपि न । ब्रह्मादि*नरोत्तमान्तानां मध्ये येषां शतगुणतारतम्यमस्ति, तदी-यज्ञानानन्दादिगुणानां शतगुणोद्रिक्तत्वस्य स्वाभाविकत्वेन स्फुटत्व-प्रयुक्तत्वाभावादिति ।। ५ ।।

*अथ षष्ठकक्ष्या*

(जाम्ववत्यादयः षट्स्त्रियः द्विजादिभ्यः पञ्चगुणावमाः)

**स्त्रियः षट् च विष्णोः इति ।**

नीला-भद्रा-मित्रविन्दा-कालिन्दी-लक्षणा-जाम्बवती चेति विष्णोः षट् स्त्रियो गरुडादिभ्यः पञ्चगुणाधमाः । तासु जाम्बवती[२] किञ्चिद-

१. मही - ख.
* मशरात्मना
* x x x- क. ख.
* तदादाने - ख.
* नरान्तानां - क.
२. किञ्चनाधिका - क.

धिका। **'तासां मध्ये जाम्बवती प्रधाना'** इति भारततात्पर्यनिर्णयोक्तेः। (अ.२०-६१)

षण्णामपि गरुडादिभ्यः पञ्चगुणाधमत्वे प्रमाणं तु श्रुतार्थापत्तिरेव । तथाहि - **'सर्व एते दशोत्तराः'** इति छान्दोग्यभाष्ये (अ.७. P.४८६) गरुडादीनां सौपर्ण्याद्यपेक्षया दशगुणाधिकत्वमुक्तम् । तच्च सौपर्ण्याद्यपेक्षया विष्णुपत्नीनां [1]द्विगुणाधिकत्वं ततो गरुडादीनां पञ्चगुणाधिकत्वमिति कल्पने कृत एव सिद्ध्यति ।

न च सौपर्ण्याद्यपेक्षया विष्णुपत्नीनां पञ्चगुणाधिकत्वकल्पनेऽपि छान्दोग्यभाष्योक्तं दशगुणाधिकत्वमुपपद्यत एवेति वाच्यम् । तथा सति विष्णुपत्नीनां[2] कामापेक्षया विंशतिगुणाधिकत्वोक्त्यनुपपत्तेः । यथोक्तं तात्पर्यनिर्णये **'यदावेशो ह्रासमुपैति तत्र प्रद्युम्नतो विंशगुणाधिकाः स्युः'** (अ.२०.६१) इति । तस्माद् विष्णुपत्न्यो गरुडादिभ्यः पञ्चगुणाधमा एवेति ।। ६ ।।

*अथ सप्तमकक्ष्या*

**(सौपर्ण्यादयः नीलादिविष्णुपत्न्यपेक्षया द्विगुणाधमाः)**

**सौपर्णी वारुणी पर्वतपतितनया च इति**

सौपर्ण्यादयो नीलादिविष्णुपत्न्यपेक्षया द्विगुणाधमाः । उक्तश्रुतार्थापत्तिबलात् । गरुडादिस्वभर्त्रपेक्षया [3]दशगुणाधमाः । **'सर्व एते दशोत्तराः'** (छां.अ.७ P.४८६) इति वचनात् ।

अत्र **उमा यावत्** इत्यनुव्याख्यानेन न विरोधः । **'सर्वे त्वेते दशोत्तराः'** (छां.अ.७ P.४८६) इति छान्दोग्यभाष्योक्तिविरोधेन तस्य स्फुटत्वाभिप्रायकत्वात् ।

---

१. दश - क. २. रामा - ख.
३. शत - क.

**.... उमा च रुद्रश्च भारती वायुरेव च ।**
**मुक्तावुक्ताः शतगुणाः बलज्ञानसुखादिभिः ।।**

इत्यैतरेयभाष्येणापि (ऐ.भा.द्वि.प्र P.१८५) न विरोधः । रुद्रांशे शतशब्दस्य [1]बहुत्वमात्रार्थत्वात् । अन्यथा **'एते दशोत्तरा'** इत्युक्त-वाक्यविरोधात् । शतशब्दस्य बहुत्वार्थकत्वं तु प्रागेवोपपादितमिति ।। ७ ।।

*अथ अष्टमकक्ष्या*

**(सौपर्ण्याद्यपेक्षया इन्द्रकामौ दशगुणावरौ)**

**इन्द्रकामौ इति ।**

इमौ च सौपर्ण्याद्यपेक्षया दशगुणाधमौ । **'सर्व'** इति वचनात् । तत्रापि कामः इन्द्रापेक्षया किञ्चिन्नीचः । **'प्राय इन्द्रवत् कामः'** इत्यनुव्याख्यानात् (अ.३.३.१९७ P.४७३) । [2]सनत्कुमारस्तु कामाव-तारत्वात्कामशब्देनैव लब्ध इति । **'सनत्कुमारस्तु सदा पुरन्दरसमो मतः'** इति बृहद्भाष्यं (अ.३.ब्रा.५ P.५६३) च सङ्गच्छते ।

**(उमाद्यपेक्षया इन्द्रकामयोः ज्ञाने शतांशोनत्वम् ।**
**सुखादौ तु दशावरत्वमिति पक्षप्रतिक्षेपः)**

अत्र केचित् - 'उमापर्यन्तं ज्ञानेऽनन्तांशोनत्वम् । **'उमा यावत्'** (अ.३.४.८७ P.४८६) इत्यनुव्याख्यानात् । उमाद्यपेक्षया इन्द्रकामयोर्ज्ञाने शतांशोनत्वमेव । एवमग्रेऽपि ।

**शक्रकामादयश्चैव विशेषान् ब्रह्मणि स्थितान् । उमादिभिः प्रवुद्धेभ्यः शतांशानेव चक्षते'** इत्यनुव्याख्यानात् (अ.३.४.८८ P.४८६) सुखादौ तु दशावरत्वमेव । **'सर्वे त्वेते दशोत्तराः'** इति वचनात् इत्याहुः ।

---

१. बहुत्वे नार्थः - क. २. सत्यकुरस्तु

तन्न । तथाहि - उमादिज्ञानं यदि [1]शक्रकामज्ञानापेक्षया शताधिकं स्यात्तदा तत्फलं सुखादिकमपि शक्रकामसुखाद्यपेक्षया शताधिकं स्यात् । साधनाधिक्येन साध्याधिक्यस्यानुव्याख्यानादौ उपपादितत्वात् । न चैवम् । उमासुखादेरिन्द्रसुखाद्यपेक्षया दशाधिकत्वस्योक्तत्वात् । अतो नेन्द्रादिज्ञानापेक्षया उमादिज्ञानं शताधिकमिति [2]तर्कपराहतत्वेन **'सर्व एते दशोत्तरा'** इत्याद्यागमविरोधेन **'शक्रकामादयश्चैव'** इत्यनुव्याख्यानं स्पष्टत्वाभिप्रायकमेव । अतो न तद्बलेनोमादिज्ञानस्येन्द्रादिज्ञानापेक्षया शताधिकत्वम् । किन्तूमाद्यपेक्षया शक्रकामयोर्ज्ञाने सुखादौ च दशावरत्वमेव । **'दशोत्तराः'** इति वचनात् । शतांशोनत्वोक्तिस्तु स्फुटत्वाभिप्रायेणेति न तद्विरोधः ।

न चैतरेयभाष्यविरोधः । तत्र - (द्वि.प्र.अ.१ P.१८५)

**शक्रश्चोमा च रुद्रश्च भारती वायुरेव च ।**
**मुक्तावुक्ताः शतगुणाः बलज्ञानसुखादिभिः ।।**

इति वाक्येन ज्ञानसुखादिसर्वगुणैरपि शक्रापेक्षया उमायाः शतगुणाधिकत्वप्रतिपादनादिति चेन्न । **'सर्व एते दशोत्तराः'** इति छान्दोग्यभाष्यविरोधेनोक्तवाक्यस्थशतशब्दस्य बहुत्वार्थकत्वात् ।

तदुक्तम् -

**शब्दो बहुत्ववचनः शतमित्यतश्च**
**श्रुत्यन्तरेषु बहुधोक्तिविरुद्धता न ।** (म.ता.नि. अ.१.१६)

इति । शताधमत्वप्रतिपादकवाक्यस्य मानान्तरविरोधे [3]स्फुटत्वस्य

१. शक्तज्ञाना - क. २. तर्कप्रतिहतत्वेन - ख.
३. स्फुटत्वजत्वे - ख.

जातिरूपत्वेन तत्रावान्तरविशेषाभावात् कथं स्फुटत्वाभिप्रायेण क्वचिदनन्तांशोनत्वोक्तिः क्वचिच्च शतांशोनत्वोक्तिः सङ्गच्छत इति वाच्यम् । यथा शुक्लत्वशुक्लतरत्वादयो जातिभेदास्तथा स्फुटत्वस्फुटतरत्वादयोऽपि जातिभेदाः सन्त्येव **'उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटाः'** इति तैत्तिरीयभाष्ये, 'अतीतिवचनात् **'उत्तरेषामुत्तरेषाम्'** इत्यनेन [१]उत्तरोत्तरस्फुटतारतम्यस्य सूचनाच्च । ततश्च स्फुटत्वाद्यभिप्रायेण शतावरत्वाद्युक्तिसम्भवात् इति ।। ८ ।।

*अथ नवमकक्ष्या*

**(इन्द्रकामाभ्यां दशावरः प्राण आहङ्कारिकः । मुख्यप्राणपुत्रोऽयं नासिक्यप्राणशव्दवाच्यः)**

**प्राण इति**

अयमिन्द्रकामाभ्यां दशावरः । **'सर्वे त्वेत'** इति वाक्यादेव । अपवादाभावे उत्सर्गस्य प्रामाण्यादिति ।। ९ ।।

*अथ दशमकक्ष्या*

**(आहङ्कारिकप्राणापेक्षया अनिरुद्धः - रति-मनुः-गुरुः-दक्षः-शची चेति षट् दशावराः)**

**अथो योऽनिरुद्धो रतिमनुगुरवः दक्षशच्यौ** इति

यच्छब्दश्रवणात् स इत्यपि द्रष्टव्यम् । अनिरुद्धः कामपुत्रः । मनुः स्वायम्भुवः । गुरुः बृहस्पतिः । अनिरुद्धादयः आहङ्कारिकप्राणापेक्षया दशगुणाधमाः । उक्तवाक्यादेवेति ज्ञेयम् ।

**यज्ञनामाऽनिरुद्धकः ।**
**दक्षिणामानिनी देवी रतिरेव तदाश्रया ।।** इति ।

---

१. उत्तरोत्तरोत्तर - क.

बृहद्भाष्ये (अ.५.ब्रा.१ P.६७७) अनिरुद्धस्य रतिपुत्रत्वात् तत्समस्यापि तदाश्रयत्वोक्तिर्युक्तेत्युक्तं **भावबोधे** ।। १० ।।



## तारतम्यपञ्चश्लोकी

**त्रायन्तां नः सदैते प्रवह उत यमो मानवी चन्द्रसूर्यौ**
**चाप्पोथो नारदोऽथो भृगुरनलकुलेन्द्रः प्रसूतिश्च नित्यम् ।**
**विश्वामित्रो मरीचिप्रमुखविधिसुताः सप्त वैवस्वताख्य-**
**श्चैवं वै मित्रतारे वरनिर्ऋतिनामा प्रावही च प्रसन्नाः ।। २ ।।**

**(ता.वि) त्रायन्तामिति ।** प्रवह इत्यादिनोक्ता एते देवाः नः सदा त्रायन्ताम् इत्येकोऽन्वयः । भृग्वादयश्च नित्यम् [1] त्रायन्तामिति इति विवेकः । तेन सदा नित्यं एवं वै इति पदानां सार्थक्यमित्यनुसन्धेयम्।

यद्वा नित्यशब्दो [2] नियमार्थः । एवं शब्दः पूर्वश्लोकोक्तविष्ण्वादिपरामर्शकः । ततश्च प्रवह इत्यादिनोक्ता एते देवाः प्रसन्ना भूत्वा एवं विष्ण्वादिदेवतावदेव सदा सर्वकाले नित्यं नियमेन नोऽस्मान् त्रायन्ताम्। इत्यन्वयः ।

*अथ एकादशकक्ष्या*

**(प्रागुक्तेभ्यः षड्भ्यः पञ्चगुणावरः प्रवहः)**

प्रवहस्तु अनिरुद्धापेक्षया पञ्चगुणाधमः । **'अनिरुद्धोऽनिलात् पञ्चगुणाधिकः'** इति छान्दोग्यभाष्यसमाख्यानात् । (अ.७. P.४८६)

---

१. X X X - ख.
२. नियम्यार्थः - क.

**(प्रवहस्य मरीचिनामत्वं नास्ति)**

अत्र केचित् -

**मरीचिनामान्तरवान् प्रवहो मुख्यवायुजः ।**
**कोणाधिपः स एवोक्तो नासिक्यो भौतिकस्तथा ।।**

इति प्रवहस्वरूपमाहुः । तत्र तावत् प्रवहस्य मरीचिनामत्वं नास्ति । मानाभावात् ।

ननु 'मरीचिर्मरुतामस्मि' इति गीतावाक्यमेव (अ.१०.२१.) प्रवहस्य मरीचिनामत्वे प्रमाणम् । तत्र मरीचिपदेन प्रवहमुक्त्वा तस्य 'मरुताम्' इति तस्य निर्धारणषष्ठीबलेनेतरमरुदपेक्षयोत्तमत्वाभिधानादिति चेन्न। तथा सति वाक्यार्थबाधप्रसङ्गात् । [1]इतरमरुदन्तर्गतप्रधानवाय्वपेक्षया तदन्तर्गताहङ्कारिकप्राणापेक्षया च प्रवहस्योत्तमत्वाभावात् । तस्मात् **मरीचिर्मरुतामस्मीति** गीतायां मरीचिपदं प्रधानवायुपरम् । **'उदवन्मेघचलनान्मरीचिः'** (अ.१०.२१.) इति गीतातात्पर्यनिर्णयोक्तस्योदकयुक्तमेघचालयितृत्वरूपस्य मरीचिपदप्रवृत्तिनिमित्तस्य प्रधानवायौ-

**स्वकीयमुदकं नद्यः समुद्रे नैव[2] जानते ।**
**वायुस्तु तत्पृथक् ज्ञात्वा मेघे कृत्वा प्रवर्षति ।।**

(आथ.भा. P.८९) इति ।

मानसिद्धत्वात् । अत्र मेघे कृत्वा प्रवर्षतीत्यनेन, [3]मेघान् सम्प्रेष्य तद्द्वारा तत्तद्देशे वर्षतीति लभ्यते । वायुपदं च निरुपपदं प्रधानवायुपरमेव । **'मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः'** इति वचनात् । (ब्र.भा.अ.१.पा.१ P.४) ततश्चोक्तप्रमाणान्मुख्यवायोरुदकयुक्त-

---

१. इतरान्तर्गत - ख.		२. जायते - ख.		३. मेधान् - क.

मेघचालयितृत्वं सिद्धम् । अतो मरीचिपदं मुख्यवायुवाचकमेव । न तु प्रवहपरमिति नोक्तगीतावाक्यात् प्रवहस्य मरीचिनामत्वसिद्धिः ।

**(न प्रवहः मरीचिशब्दवाच्यः)**

नापि **'प्रधानवायुजो भूतवायुर्नाम्ना मरीचिकः'** (गी.ता.अ.१३ P.४०१) इति गीतातात्पर्यनिर्णयोक्तप्रमाणबलेन प्रवहस्य मरीचिनामत्वसिद्धिः । तत्र प्रधानवायुजो भूतवायुः इत्युद्दिश्य नाम्ना मरीचिक इति मरीचिनामवत्त्वविधानादिति वाच्यम् । प्रकरणविरोधात्। अस्मिन् प्रमाणे पूर्वत्रोत्तरत्र च महाभूतानीत्यादिगीतोक्तशब्दानां तत्तद्देवतावाचित्वं विधीयते । यथोक्तं गीतातात्पर्यनिर्णयटीकायाम् - **'महाभूतानीत्यादिगीतोक्ताहङ्कारादिशब्दानां देवतावाचित्वं प्रमाणेन दर्शयति'** इति ।

न च मरीचिशब्दो महाभूतानीत्यादिगीतोक्तः । तत्र तदनुपलम्भात्। अतः भूतवायोः मरीचिनामवत्त्वविधानं [1]प्रकरणविरुद्धमेवेति न तदत्र क्रियते । किन्तु नाम्ना मरीचिकः प्रधानवायुज इत्यनूद्य भूतवायुरित्यनेन भूतवायुशब्दवाच्य इति विधीयते । अत एव टीकायां वातीति वायुरिति वायुशब्दनिर्वचनं कृतम् । अतः **प्रमाणाभावात् प्रवहस्य मरीचिनामवत्त्वमयुक्तमिति ।**

**(न प्रवहः नासिक्यापरनामा प्राणशब्दवाच्यो वा)**

यदप्युक्तप्रवहस्य [2]नासिक्यत्वमुक्तं, तदप्ययुक्तम् । तथाहि - नासिकायां भवो नासिक्यः । नासिकाशब्दात्तत्र [3]भव इत्यर्थे 'शरी-

---

१. प्रकरणरुद्ध - क.   २. नासिक्यभवत्व

३. भवती

रावयवाच्च' (पा.अ) इति सूत्रेण यप्रत्ययः । ततश्च नासिकाभवत्वं नासिक्यशब्दप्रवृत्तिनिमित्तमिति लब्धम् । तच्च **"तथैव नासिकातोऽभूत् मुख्यवायोः सुतो मरुत् । प्राणो वायुरिति द्वेधा"** इत्यैतरेयभाष्ये (द्वि.प्र.अ.३ P.२५७) प्राणाख्यस्य [1]प्रधानवायुपुत्रत्वमुच्यते । एवं **'ते ह नासिक्यं प्राणमुद्गीथमुपासाञ्चक्रिरे'** इति छान्दोग्येऽपि (अ.१ P.३३५) [2]नासिक्यवायोः प्राणत्वमुच्यते । **न च प्रवहस्य प्राणशब्दवाच्यत्वमस्ति।** क्वापि तत्र तत्प्रयोगादर्शनात् । किन्तु [3]आहङ्कारिकवायोः प्राणशब्द-वाच्यत्वम्। **'प्राण आहङ्कारिक एव च' । इन्द्रादनन्तर'** इत्यादौ ग्रन्थे तत्र तत्प्रयोगदर्शनात् । अतः प्राणाख्यमुख्यवायुपुत्रस्या[4]हङ्कारिकवायोरेव नासिकाजन्यत्वमैतरेयभाष्य उच्यत इति नासिक्यवायुशब्दप्रवृत्तिनिमित्त-सद्भावादाहङ्कारिकप्राण एव नासिक्यशब्दवाच्यः, न तु प्रवहः। तत्र नासिक्यशब्दप्रवृत्तिनिमित्तस्याभावात् । अतो यदुक्तं प्रवहस्य नासिक्यत्वं तन्निर्मूलमेवेति ।

**(प्रवहयमयोर्मध्ये न सनकादयश्चिन्त्याः, किन्तु नासत्यदस्रयोरनन्तरमेव)**

अत्र केचित् - प्रवहयमयोर्मध्ये सनकादीन् वर्णयन्ति । यथाहुः - **'सनकाद्या [5]यमादुच्चाः कुमारादितरे त्रयः । तदुच्चः प्रवहो वायुः'** इति । तद् भारततात्पर्यनिर्णयविरुद्धम् । तत्र तृतीयाध्याये (श्लो.२७) - **"नासत्यदस्रौ क्रमशः प्रसूतौ । ततः सनाद्याश्च"** इत्यनेन वाक्येन अश्विदेवानन्तरं सनकादीनामुत्पत्तिमुक्त्वा **'उक्तक्रमात् पूर्वभवस्तु यो**

१. प्राधान्य - ख.
२. प्ररहस्य - क.
३. नासिक्यस्य - क.
४. द्वारकवायोः - क. ५. मयादु - क.

**यः श्रेष्ठः स स'** (श्लो.२९) इति तदुत्तरवाक्ये पूर्वोत्पन्नस्योत्तमत्वं तदनन्तरोत्पन्नस्य तदधमत्वमुक्तम् । तेन [१]सनकादीनामश्विदेवानन्तरोत्पन्नत्वात्तदधमत्वं लब्धम् । अतः सनकादीनामश्विपर्जन्यमध्यस्थत्वलाभात् प्रवहयममध्यस्थत्वमुक्ततात्पर्यनिर्णयवाक्यविरुद्धमिति ।

किञ्च सनकादीनां प्रवहाधमत्वोक्तौ बृहद्भाष्यविरोधः । तत्र सनकादिवदेकादशमनूनामश्विदेवाधमत्वकथनेन सनकादीनामश्विदेवाधमत्वलाभात्। अन्यथोपमानोपमेयभावाभावात् । तथा हि -

**सनकाद्या नारदश्च दक्षभृग्वादयोऽपि च ।**
**देवावरा यथा यद्वन्मनवोऽपि प्रकीर्तिताः ।**
**त्रिचतुर्भागभेदेन तेऽप्यन्योन्यविशेषिणः ।।** (अ.३ P.५६३)

इति बृहद्भाष्ये भृगुनारदग्रहणं तेऽप्यन्योन्यविशेषिण इत्यत्र दृष्टान्तप्रदर्शनार्थम् । योग्यतासत्वे ([२]व्यवहितान्वयस्य) अदोषत्वात् ।

भृग्वादय इत्यादिपदेन मरीच्यादयो ब्रह्मपुत्रा ग्राह्याः । मनुशब्देन तापसव्यतिरिक्ताः सर्वेऽपि मनवो ग्राह्याः । तापसस्य भगवदवतारत्वेन देवावरत्वायोगात् । तथा च सनकाद्याः [३]केनचिदंशेन देवावराः, अश्विभ्यामवराः तद्वदेकादशमनवोऽपि किञ्चिदंशेनाश्विभ्यामवराः । एवं दक्षो यथा दशभिर्गुणैराहङ्कारिकप्राणरूपदेवावरः तद्वत् स्वायम्भुवो मनुरपि । [४]दक्षस्वायम्भुवयोराहङ्कारिकप्राणाद्दशगुणाधमत्वस्य शास्त्रेऽभिहितत्वात् । एवं मरीच्याद्या यथा कतिपयांशतो वह्निरूपदेवाधमाः । सुधायां - **'मरीच्याद्याः परस्परं समानाः मित्रादुत्तमाः**

१. सनकाद्यश्विदेवाधमत्वम् - ख.
२. व्याहतान्वयस्य - ख., व्यवहतान्यस्य - क.
३. केनांशेनावरः - क. ४. दक्षभवयोः - क., दक्षाम्भोरुहप्राण - ख.

**अग्नेरधमाः'** इत्युक्तत्वात् । तद्वद् वैवस्वतो मनुरपि कतिपयांशेन वह्निरूपदेवाधमः। **'कसूनुवत्। वैवस्वतो मनुश्च'** इत्यनुव्याख्याने (अ. ३.३.P.४७३) वैवस्वतमनोर्मरीच्यादिसाम्यस्योक्तत्वेनाग्न्यधमत्वलाभात्। अन्यथा वन्ह्यधमत्वाभावे वैवस्वतस्य मरीच्यादिसाम्योक्त्ययोगात् । तत्रापि विशेषं वक्तुं **त्रिचतुर्भागभेदेने**त्युक्तम् । तत्र त्रिशब्दः चतु-श्शब्दश्च [1]वृत्तिविषये पूरणार्थः । तृतीयं विष्टपं त्रिविष्टपमितिवत् । भृगुनारदग्रहणं तद्वदिति चात्रानुवर्तते । तथा च यथा भृगुनारदौ इन्द्रकामवद् ईषद्विशेषयुक्तौ तद्वदत्राऽपि परस्परं समाना अपि सनकाद्या एकादशमनवश्च दक्षस्वायम्भुवौ मरीच्याद्या वैवस्वत[2]श्चेत्येते एकस्य गुणस्य त्रिधा चतुर्धा वा विभागे कृते यस्तृतीयश्चतुर्थो वा भागस्त-द्भेदेनान्योन्यविशेषिणः । तत्र सनकादीनामेकादशमनूनां च परमहंसत्व-गृहस्थत्वकृतो विशेषः । एवं दक्षस्वायम्भुवयोरपि किञ्चिद् विशेषोऽस्ति। तथा हि - दक्षो जामाता । स्वायम्भुवस्तु श्वशुरः । दक्षभार्या या प्रसूतिः, तत्पितृत्वात् । अतः स्वायम्भुवः दक्षापेक्षया ईषदधिकः । दक्षगुरुत्वात्। श्वशुरस्य जामातृगुरुत्वं **'श्वशुरः पञ्चमो गुरुः'** इति स्मृतिसिद्धम् । भृगुनारदयोस्तु **'महर्षीणां भृगुरहं देवर्षीणां च नारदः'** (१०.२५) भगवद्गीताबलेन महर्षिदेवर्षित्वकृतो विशेष इत्यन्योन्यविशेषिण इति सार्धश्लोकार्थः ।

यत्तु -

**त्रिचतुः पदयोरत्र सप्तसङ्ख्यार्थकत्वतः ।**
**अनयोः पुनरावृत्त्या त्रिचतुष्ट्वार्थकत्वतः ।।**

इत्यनेन [3]त्रिचतुर्भागभेदेन तस्याऽवृत्तिः । तत्रैकस्य सप्तगुणत इत्यर्थः।

---

१. वृत्तौ वारणार्थः - ख., वृद्धपूरणार्थः - क.

२. वस्वन्तश्च कस्य गुणस्य - क.          ३. त्रितयभेदेन - क.

द्वितीयस्य त्रिभिर्गुणैश्चतुर्भिर्गुणैरित्यर्थः । ततश्च ते सनकाद्या नारदो दक्षभृग्वादयोऽपि अन्योन्यविशेषिणः । [१]सप्तभिस्त्रिभिश्चतुर्भिर्गुणैः परस्परं तारतम्यवन्त इति व्याख्यातम् । **'त्रिगुणोच्चा नारदात्ते दक्षात् सप्तगुणाधमाः । चतुर्गुणोच्चा भृग्वादेः किञ्चिदूनतया हि ते'** इति सङ्ग्रहं चक्रुः । तत्र प्रवहानन्तरं यमादिभ्यः पूर्वं सनकादीनां ग्रहणे सनकादीनां नारदात् त्रिगुणाधिकत्वं दक्षात् सप्तगुणाधमत्वं भृग्वादिभ्यश्चतुर्गुणाधिकत्वं च कथं सिध्यतीति चिन्त्यम् ।

किञ्च, [२]भागपदमेकस्य गुणस्यानेकधा विभागे कृते य एकोंऽशस्तद्वाचकम् । न तु [३]गुणवाचकम् । मानाभावात् । ततश्च त्रिचतुरित्यादिवाक्ये सनकादीनां त्रिगुणत्वादिकथनमयुक्तम् । गुणवाचकपदाभावात् ।

अपि च 'सनकाद्या' इति श्लोके सनकादिवन्मनवोऽपि प्रकृताः । तेषां तारतम्यमनभिधाय त्रिचतुरित्यादिवाक्येन सनकादीनामेव तारतम्याभिधाने विनिगमकं वाच्यम् । न च तदस्ति । अत एवं व्याख्यानस्यानुपपन्नत्वात् सनकाद्या इति सार्धश्लोकस्योक्तमेव व्याख्यानम् अङ्गीकार्यम् । ततश्चोक्तबृहद्भाष्यबलेन सनकादीनामश्विदेवाधमत्वसिद्धेस्तद्विरोधेन प्रवहाधमत्वमनुपपन्नमिति ।। ११ ।।

*अथ द्वादशकक्ष्या*

**(चन्द्रसूर्यौ यमो मानवी च प्रवहाद् द्विगुणावराः)**

**यमो मानवी चन्द्रसूर्यौ चेति ।**

मानवी स्वायम्भुवपत्नी शतरूपा । यमादयः प्रवहाख्यभूतवायो-

---

१. सप्तचतुर्गुणैः - ख.   २. भक्तमेकस्य - क.
३. गौण - ख.

द्विगुणाधमाः । **'भूतवायुस्तथैव च'** । **'द्विगुणा एव'** इति छान्दोग्यभाष्ये (अ.७. P.४८६) प्रवहस्य [१]स्वाधमापेक्षया द्विगुणाधिकत्वोक्तिबलेन प्रवहाधमानां द्विगुणाधमत्वलाभात् ।

**(देवतातारतम्यमिह न कतिपयगुणैर्विवक्षितम्, अपि तु सर्वैर्गुणैः)**

नन्वेवं सति बृहस्पत्यपेक्षया सूर्यस्य प्रभाधिक्यं न स्यात् । एवं चन्द्रसूर्ययोः समत्वाच्चन्द्रापेक्षया सूर्यस्य प्रभाधिक्यमनुपपन्नमिति चेत्, अत्र वदन्ति - **'यथाऽनन्दे तथा ज्ञाने विष्णुभक्तौ बलादिके'** । इति तैत्तिरीयभाष्ये (P.१४०) आदिपदेन प्रत्यक्षादि[२]बाधितगुणानां ग्रहणात्तैरेव गुणैः सर्वदेवानां तारतम्यं वक्तव्यम् । प्रभायाश्च बृहस्पत्यादिषु न्यूनाधिकभावः प्रत्यक्षसिद्ध इति प्रभागुणेन तारतम्याभावेऽपि न क्षतिरिति।

सम्प्रदायविदस्त्वाहुः - देवानां संसारे मुक्तौ च सर्वैरपि गुणैस्तारतम्यमिह विवक्षितम् । न चेयं [३]प्रभा बृहस्पत्यादिदेवानां, तत्प्रभाया अस्मदादिप्रत्यक्षायोग्यत्वात् । अनुव्याख्याने **'दृश्यन्ते चाधिकारिभिः'** (२.१.६ P.३६१) इत्याभिमानिदेवतानां योगिप्रत्यक्षायोग्यत्वाभिधानात् । किन्त्वियं तत्तन्मण्डलानामेव प्रभा न चाभिमानिनाम्, प्रभातारतम्याभावे तदभिमतमण्डलानां प्रभातारतम्यमाकस्मिकं स्यादिति न वाच्यम्। वरुणापेक्षया गङ्गाया आधिक्याभावेऽपि [४]भगवत्पादतेजोविशेषसन्निधानेन च वरुणाभिमतसमुद्रापेक्षया भागीरथीजले महिमाधिक्यवत् भगवत्तेजोविशेषसन्निधानेन बृहस्पतिमण्डलापेक्षया सोममण्डले तदपेक्षया च सूर्यमण्डले प्रभाधिक्योपपत्तेः । भगवत्तेजोविशेषसन्निधानं च -

**यदादित्यगतं तेजो जगद् भासयतेऽखिलम् ।**

---

१. स्वधर्मापेक्ष्या - ख. २. बाधितेति नास्ति - क.
३. प्रभापत्यादि - ख. ४. भवतेजो - क.

**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्** ।। (१५.१२) इति सिद्धम् ।

'मामकम्' मदीयम् इति तट्टीकायां व्याख्यातत्वात् । **'ज्योतिषां रविरंशुमान् । नक्षत्राणामहं शशी । स्रोतसामस्मि जाह्नवी'** इति गीतायां [1]सजातीयापेक्षया तत्तद्गुणाधिक्यापादकभगवद्विभूतिरूपसद्भावोक्तेश्च।

**यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा ।**
**तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्** ।। (१०.४२)

इति गीताबलेन प्रभाद्याधिक्यस्येश्वरसन्निधानविशेषप्रयुक्तत्वावगमाच्चोक्तं युक्तमिति ।

इदं तु बोध्यम् -

**"तस्यैव च दिगीशितुः । सोमस्य दीक्षारूपा तु शतरूपा समाश्रया"** इति बृहद्भाष्ये शतरूपायाः [2] सोमरूपविशेषाश्रयत्वं यदुक्तं तत् स्वेच्छयैव । अतो न शतरूपासोमयोः साम्योक्तिविरोधः ।

यद्वा, एतदुक्त्यनुरोधेन कामादिन्द्रस्येव शतरूपाया अपि सोमात्किञ्चिदाधिक्यमस्तीति ज्ञायते । साम्योक्तिस्तु इन्द्रकामसाम्योक्तिवद् व्याख्येयम् इत्युक्तं **भावबोधे** ।। १२ ।।

*अथ त्रयोदशकक्ष्या*

**(यमाद्यपेक्षया वरुणः पादार्धयुक्तपादगुणेनावरः)**

**अप्प** इति । वरुण इत्यर्थः । अयं च यमाद्यपेक्षया पादार्धयुक्तपादगुणेन नीचः। **'अध्यर्धोनः स सोमतः'** इति छान्दोग्यभाष्यात्।१३।।

---

१. सजातीयापेक्षया इति नास्ति - क.  २. सौम्यविशेषा - क.

*अथ चतुर्दशकक्ष्या*

**(वरुणान्नारदः किञ्चिदवरः)**

**नारद** इति । अयं वरुणात्किञ्चिन्नीचः ।। १४ ।।

*अथ पञ्चदशकक्ष्या*

**(भृगुः अग्निः - प्रसूतिश्च वरुणात् पादोनाः)**

**भृगुरिति ।** अनलकुलेन्द्रः प्रधानाग्निः । प्रसूतिर्दक्षभार्या । भृग्वादयो नारदात्किञ्चिन्नीचाः । वरुणापेक्षया त्वेकस्य [1]गुणस्य चतुर्धा विभागे कृते यश्चतुर्थोऽशस्तेन नीचाः **'पादोनो वरुणादग्निः'** इति छान्दोग्य-भाष्यबलात् (अ.७ P.४८६) इत्यवगन्तव्यम् ।। १५ ।।

*अथ षोडशकक्ष्या*

**(सप्तर्षयः - वैवस्वताख्यो मनुः विश्वामित्रश्चेति नवसङ्ख्याकाः पूर्वेभ्यः द्विगुणाधमाः)**

**विश्वामित्र इति ।** विश्वस्य मित्रं विश्वामित्रः । **'मित्रे च ऋषौ'** **(पा.अ.)** इति सूत्रेण मित्रशब्दे परे ऋषावभिधेये विश्वपदस्य दीर्घः । **'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य'** इति महाभाष्योक्तेर्विश्वामित्रशब्दस्य पुल्लिङ्गत्वं बोध्यम् । **सप्तेति । 'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्च'** इति सप्तेत्यर्थः । **वैवस्वताख्य** इति । विवस्वतोऽपत्यं पुमानिति वैवस्वत इति व्युत्पत्त्या यः कश्चन सूर्यपुत्र इति प्रतीयते [2]तद्वारणार्थं वैवस्वताख्य इत्युक्तम् । वैवस्वत इति प्रसिद्धो मनुरित्यर्थः। अत्र विश्वामित्रस्य वैवस्वतमनोश्च मरीच्यादिसप्तर्षिसाम्ये **'विश्वामित्रः**

---

१. गौणस्य - ख.

२. तद्वरार्थं - ख. x x x - क.

**कसूनुवत्' 'वैवस्वतो मनुश्चैव'** (३.३. P.४७३) इत्यनुव्याख्यानं मानम्। सप्तर्षीणामग्नेरधमत्वे मित्रादुत्तमत्वे च **'मित्रतन्मध्ये ब्रह्मपुत्रकाः'** (P.४७३) इत्यनुव्याख्यानं मानम् । अत्र तच्छब्देन 'भृगुरग्निसमः' इति अव्यवहितप्रकृतोऽग्निः परामृश्यत इति भावेनोक्तानुव्याख्यानं सुधायां व्याख्यातम् [१] **'ब्रह्मपुत्रका** मरीच्याद्या **मित्रतन्मध्ये** मित्राग्न्योर्मध्ये परस्परं समा मित्रादुत्तमा अग्नेरधमा इत्यर्थः' इति ।

**(मरीच्यादयः मित्रादधमाः पर्जन्यादुत्तमाः मित्रपर्जन्ययोर्मध्येऽपि अश्विदेवकक्ष्या तदधमकर्मजदेवकक्ष्या चेति कक्ष्याद्वयमस्ति । मरीच्यादीनाम् अश्विदेवाधमकर्मजदेवकक्ष्यायां निवेश इति वादनिरासः।)**

अन्ये तु - तच्छब्देन मित्रपर्जन्यमध्यस्थाविति व्यवहितः प्रकृतः पर्जन्यः परामृश्यते । तेन ब्रह्मपुत्रका मित्रादधमा पर्जन्यादुत्तमा इति पर्यवस्यति । तत्र मित्रपर्जन्यमध्येऽपि कक्ष्याद्वयमस्ति । अश्विदेवकक्ष्या तदधमकर्मजदेवकक्ष्या चेति । तत्र [२] नाश्विदेवकक्ष्यायां मरीच्यादीनां ग्रहणं युक्तम् । तेषामश्विदेवसमत्वे मानाभावात् । किन्त्वश्विदेवाधमकर्मजदेवकक्ष्यायामेव । **"नासत्यदस्त्रौ क्रमशः प्रसूतौ । ततः सनाद्याश्च मरीचिमुख्याः । देवाश्च सर्वे क्रमशः प्रसूताः"** । इति भारततात्पर्यनिर्णये **तृतीयेऽध्याये** (३.२७) सनकादीनां मरीच्यादिसप्तर्षीणां चाश्विदेवतानन्तरमुत्पत्तिमुक्त्वा **"उक्तक्रमात् पूर्वभवस्तु यो यः । श्रेष्ठः स स ह्यासुरकान् ऋते च"** इत्युत्तरवाक्येन पूर्वोत्पन्नस्योत्तमत्वं तदनन्तरोत्पन्नस्य तदधमत्वमुक्तम् । तेन सनकादीनां मरीच्यादीनां चाश्विदेवानन्तरोत्पन्नत्वात् तदधमत्वं सिध्यति । अतोऽश्विदेवाधमकर्मजदेवकक्ष्यायां सनकाद्या मरीच्यादयश्च ग्राह्या इत्याहुः ।

---

१. ब्रह्मपुत्रका इति नास्ति - क. २. धर्मजदेवकक्ष्या - क.

**तत्र सुधाविरोधः स्पष्ट एव ।** तामनादृत्यानुव्याख्यानमेव व्याख्यायत इत्यङ्गीकारेऽपि [1]व्यवहितपरामर्शप्रसङ्गः । स चाव्यवहितपरामर्शसम्भवे न युक्तः ।

किञ्च **'विश्वामित्रब्रह्मपुत्रान् ऋते'** च इति विश्वामित्रादिव्यावर्तनबलेन विश्वामित्रस्य ब्रह्मपुत्राणां च अश्विदेवाधमत्वं नास्तीति स्पष्टमवगमात् ।

तथाहि - **'विश्वामित्रब्रह्मपुत्रान्'** इति श्लोके ब्रह्मपुत्रपदेन मरीच्यादयो ग्राह्याः । ऋषय इत्यनेन व्याप्तदर्शिनो ये ऋषयस्ते ग्राह्याः । सूर्यादिभ्योऽधमा इत्यस्य सूर्यचन्द्रयमेभ्यः वरुणाग्निमित्राश्विदेवव्यवधानेनाधमा इत्यर्थः । इत्येतत्सर्वं कर्मजदेवताकक्ष्याव्याख्यानावसरे वक्ष्यते । तथा च विश्वामित्रब्रह्मपुत्रान् विना अखिला अपि व्याप्तदर्शिनो ऋषयः सूर्यादिभ्योऽधमाः सूर्यचन्द्रयमेभ्यो [2]वरुणाग्निमित्राश्विव्यवधानेनाधमा इति विश्वामित्रेत्यादिना बृहद्भाष्यवाक्यार्थः । ततश्च विश्वामित्रब्रह्मपुत्रव्यतिरिक्तानां व्याप्तदर्शिनां सर्वेषामृषीणां कतिपयदेवव्यवधानेन सूर्याद्यधमत्वम् अश्विदेवाधमत्वं तु साक्षादिति लब्धम्। एवं च मरीच्यादीनां साक्षादश्विदेवाधमत्वं [3]नास्तीति लभ्यते । अन्यथा 'ब्रह्मपुत्रान् ऋते' तद्व्यवच्छेदाऽयोगात् । ततश्च मरीच्यादीनामश्विदेवाधमत्वाङ्गीकारे बृहद्भाष्यविरोधः सुस्थ इति । ततश्च मरीच्यादीनामश्विदेवाधमत्वाभावप्रतिपादकबृहद्भाष्यविरोधात् प्रमाणाभावाच्च न सप्तर्षीणामश्विदेवाधमत्वम् । अतोऽश्विदेवकक्ष्यायामिव तदधमदेव-

---

१. अव्यरहित - ख.    २. वरुणाश्वि - ख.

३. नास्तीति नास्ति - क.

कक्षायामपि मरीच्यादीनां ग्रहणं न युक्तम् । किन्तु [१] सुधानुसारेण मित्राग्निमध्य एव ग्रहणं युक्तमिति दिक् ।

ननु यदुक्तं प्रमाणाभावादिति, तदसिद्धम् । तृतीयाध्यायभारततात्पर्यनिर्णयस्यैव प्रमाणत्वात् इति चेत् न । तस्यान्यार्थत्वात् । तथा हि - **"ततः सनाद्याश्च मरीचिमुख्या देवाश्च सर्वे क्रमशः प्रसूताः"** इति भारततात्पर्यनिर्णयवाक्ये तत इत्यस्य नासत्यदस्रयोरुत्पत्त्यनन्तरमित्यर्थः । सनाद्याः सनकाद्याः प्रसूताः एवं मरीचिमुख्याः सर्वे देवाः क्रमशः प्रसूता इत्यन्वयः । मरीचिमुख्या इति तु न मरीच्यादिसप्तर्षिपरं, बृहद्भाष्यविरोधात् । मरीचिमुख्या देवा इति विशेषणविशेष्यभावायोगाच्च । मरीच्यादिसप्तर्षीणां [२] देवत्वाभावात् । किन्तु **'प्रधानवायुजो भूतवायुर्नाम्ना मरीचिकः'** इति गीतातात्पर्यनिर्णयोक्तः (अ.१३ P.४०) **प्रधानवायुपुत्रो मरीचिनामको यो देवविशेषो भूतवायोरवान्तराभिमानी सोऽत्र मरीचिपदेन ग्राह्यः ।** मुख्यपदेन पावकादयः पुष्करान्तास्तदधमा आजानजदेवाश्च ग्राह्याः । ततश्च सर्वे देवाः । नासत्यदस्रयोरुत्पत्त्यनन्तरं मरीचिः प्रसूतः । तदनन्तरं पावकः । तदनन्तरं पर्जन्यः । ततः स्वाहा । ततो जलभूतावान्तराभिमानी बुधः । ततः उषा । ततः पृथिवीभूतमुख्याभिमानी शनिः । ततः कर्माभिमानी पुष्करः । तदनन्तरमाजानजदेवाः प्रसूता इत्येवं क्रमशः क्रमेण मरीचिमुख्याः सर्वेऽपि देवाः प्रसूता इति भारततात्पर्यनिर्णयवाक्यस्यार्थः । अत एवं भारततात्पर्यनिर्णयवाक्यस्यान्यार्थत्वात् मरीच्यादिसप्तर्षीणामश्विदेवाधमत्वे तन्मानं न भवतीति सिद्धम् ।। १६ ।।

---

१. x धा x सा - क.ख.    २. देवत्वात् - क.

*अथ सप्तदशकक्ष्या*

**(मित्रनामकः सूर्यः, निर्ऋतिः-प्रावही-तारा चेति चत्वारः पूर्वोक्तेभ्यः किञ्चिदवराः)**

**मित्रेति ।** मित्र आदित्यः । तारा बृहस्पतिभार्या [१]प्रावही प्रवहपत्नी। मित्रादयो विश्वामित्राद्यपेक्षया किञ्चिन्नीचाः । अग्न्यपेक्षया तु द्विगुणाधमाः। **'पर्जन्यमित्रशिखिनः'** इति छान्दोग्यभाष्यादिति ज्ञेयम् ।।१७।।



## तारतम्यपञ्चश्लोकी

**विष्वक्सेनोऽश्विनौ तौ गणपतिधनपावुक्तशेषाः शतस्थाः**
**देवाश्चोक्तेतरान्ये तदवरमनवश्च्यावनोचथ्यसञ्ज्ञौ ।**
**वैन्यो यः कार्तवीर्यः क्षितिपतिशशबिन्दुः प्रियादिव्रतोऽथो**
**गङ्गापर्जन्यसञ्ज्ञे शशियमदयिते मा विराट् चाऽशु पान्तु ।।३।।**

*अथ अष्टादशकक्ष्या*

**(विष्वक्सेनः गणपतिः धनपतिः अश्विनौ शतगणस्था पञ्चाशीति देवा मित्राद्यपेक्षया किञ्चिदवराः ।)**

**ता. वि. - विष्वक्सेन इति ।** अत्र विष्वक्सेनाद्या [२]विराडन्ता देवा मा माम् आशु पान्त्वित्यन्वयः । तत्र मित्रताराद्यपेक्षयाऽधमानाह - **विष्वक्सेन** इत्यादिना देवाश्चेत्यन्तेन । **अनुव्याख्यानतत्सुधानुसारेणायं** ग्रन्थः प्रवृत्तः । अतो विष्वक्सेनादीनां शतस्थान्तानां मित्राधमत्वे परस्परं साम्ये चानुव्याख्यानमेव मानमिति पृथक् प्रमाणं नोच्यते ।

---

१. प्रवहा - क.　　२. विरजन्ता - ख.

**अश्विनौ ताविति ।** यद्यपि शतस्थान्तर्गतत्वेनैवाश्विनौ लब्धौ । तथाऽपि [१]पृथगश्विग्रहणं शतस्थान्तर्गतदेवापेक्षया किञ्चिदाधिक्यज्ञापनार्थमिति वदन्ति ।

अन्ये तु वायोः सोमाधिकारो नैमित्तिक इति ज्ञापयितुं पृथग्ग्रहणं न त्वाधिक्यज्ञापनार्थं मानाभावादित्याहुः ।

**(पञ्चाशीतिदेवानां साम्येऽपि केषुचित्किञ्चिदाधिक्यादिकं यथाप्रमाणमवसेयम् । यथा भूदेव्या गणपत्यपेक्षयाऽवरत्वम् ।)**

गणपतिस्तु शतस्थान्तर्गतभूदेव्यपेक्षया किञ्चिदधिकः । **"तदा भूमिः पञ्च भूतावरा या"** इति भारततात्पर्यनिर्णये (अ.२०.१०४) भूदेवताया आकाशभूताभिमानिगणपत्यधमत्वोक्तिर्युज्यते । गणपति-भूम्योः साम्योक्तिस्तु अनेकगुणैर्वा एकगुणेन वाऽधमत्वाभावाभिप्रा-येण । नीचोच्चभावस्त्वंशविशेषेणैव । यथोक्तं बृहद्भाष्ये - (बृ.भा.अ.३ P.५६५)

**देवादिष्वेव सर्वेषु प्रोक्ता अपि विशेषिणः ।**
**पञ्चाशतो दशांशाद्वा स्वस्वजात्यां परस्परम् ।।** इति ।

अस्यार्थः - तृतीयं विष्टपं त्रिविष्टपमितिवत् सङ्ख्याशब्दो वृत्तिविषये पूरणार्थः । तेन पञ्चाशतो दशांशाद्वेत्यस्य पञ्चमांशाद्दशमांशाद्वा इत्य-र्थः । तथा चैकस्य गुणस्य पञ्चधा दशधा वा विभागे कृते यः पञ्चमो दशमो वांऽशस्तस्मादित्यर्थः । इत्थं च स्वस्वजात्यां [२]परस्परं देवर्ष्यादिषु [३]समानत्वेनोक्ता अपि देवाद्याः पञ्चमांशाद्दशमांशाद्वा नीचोच्चभावरूप-विशेषवन्तो ज्ञातव्या इति ।

---

१. पृथग्ग्रहणं - क. २. परस्परं इति नास्ति - क.
३. सनकत्वेनोक्ताः - क.

**(एकोनपञ्चाशन्मरुतां मध्ये सप्तव्यतिरिक्तानां सर्वमरुतामपि गणपत्यपेक्षया किञ्चिदवरत्वमस्ति)**

'अत्र न केवलं शतस्थान्तर्गतभूदेव्या एव गणपत्यपेक्षया किञ्चिदधमत्वं किन्त्वेकोनपञ्चाशन्मरुतां मध्ये सप्तव्यतिरिक्तानां सर्वमरुतामपि किञ्चिद्गणपत्यधमत्वमस्ति ।

**'आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत्'** इति षट्प्रश्नभाष्योक्तस्मृतौ (P.६६) मरुतां गणपत्यधमत्वाभिधानात् उक्तश्रुतेरयमेवार्थः ।

**(मरुच्छब्दः समुदायपरः। मरुत्समुदायश्च गणपतेरवर इति वादः, मरुत् इत्येकवचनं व्यक्तिपरं वायुसुतो मरुत् विघ्नेशादवर इति च वादः न प्रामाणिकः)**

मरुदिति समुदायापेक्षयैकवचनम् । **'तस्मादग्निस्ततोऽवरः'** इति पूर्ववाक्यादवर इत्यनुवर्तते । ततश्च 'वायोः सुतो मरुत्' इति मरुत्समुदायः । ततो गणपतेरवर इति केचिदाहुः ।

अन्ये तु मरुदित्येकवचनं व्यक्तिपरमेवेत्यवेत्य **'वायोः सुतो मरुच्चैव [१]विघ्नेशादून उच्यत'** इत्याहुः । तदुभयमनुपपन्नम् । तथा हि -

**विष्णोः प्राणस्ततः श्रद्धा तस्या रुद्रो मनोऽभिधः ।**
**तस्मादिन्द्रस्त्विन्द्रियात्मा तस्य सोमोऽन्नदेवता ।**
**ततस्तु वरुणः सृष्टस्तस्मादग्निस्ततोऽवरः ।**
**आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत् ।**
**तस्मादग्निः पावकाख्यः प्रथमोऽग्नेः सुतस्ततः ।**
**ततः पर्जन्य उद्भूतः स्वाहातो मन्त्रदेवता ।**
**उदात्मको बुधस्तस्या उषा नामात्मिका ततः ।**

---

१. विघ्नादून

**अश्विनौ ताविति ।** यद्यपि शतस्थान्तर्गतत्वेनैवाश्विनौ लब्धौ । तथाऽपि [1]पृथगश्विग्रहणं शतस्थान्तर्गतदेवापेक्षया किञ्चिदाधिक्यज्ञापनार्थमिति वदन्ति ।

अन्ये तु वायोः सोमाधिकारो नैमित्तिक इति ज्ञापयितुं पृथग्ग्रहणं न त्वाधिक्यज्ञापनार्थं मानाभावादित्याहुः ।

**(पञ्चाशीतिदेवानां साम्येऽपि केषुचित्किञ्चिदाधिक्यादिकं यथाप्रमाणमवसेयम् । यथा भूदेव्या गणपत्यपेक्षयाऽवरत्वम् ।)**

गणपतिस्तु शतस्थान्तर्गतभूदेव्यपेक्षया किञ्चिदधिकः । **"तदा भूमिः पञ्च भूतावरा या"** इति भारततात्पर्यनिर्णये (अ.२०.१०४) भूदेवताया आकाशभूताभिमानिगणपत्यधमत्वोक्तिर्युज्यते । गणपति-भूम्योः साम्योक्तिस्तु अनेकगुणैर्वा एकगुणेन वाऽधमत्वाभावाभिप्रा-येण । नीचोच्चभावस्त्वंशविशेषेणैव । यथोक्तं बृहद्भाष्ये - (बृ.भा.अ.३ P.५६५)

**देवादिष्वेव सर्वेषु प्रोक्ता अपि विशेषिणः ।**
**पञ्चाशतो दशांशाद्वा स्वस्वजात्यां परस्परम् ।।** इति ।

अस्यार्थः - तृतीयं विष्टपं त्रिविष्टपमितिवत् सङ्ख्याशब्दो वृत्तिविषये पूरणार्थः । तेन पञ्चाशतो दशांशाद्वेत्यस्य पञ्चमांशाद्दशमांशाद्वा इत्य-र्थः । तथा चैकस्य गुणस्य पञ्चधा दशधा वा विभागे कृते यः पञ्चमो दशमो वांऽशस्तस्मादित्यर्थः । इत्थं च स्वस्वजात्यां [2]परस्परं देवर्ष्यादिषु [3]समानत्वेनोक्ता अपि देवाद्याः पञ्चमांशाद्दशमांशाद्वा नीचोच्चभावरूप-विशेषवन्तो ज्ञातव्या इति ।

---

१. पृथग्ग्रहणं - क. २. परस्परं इति नास्ति - क.
३. सनकत्वेनोक्ताः - क.

**(एकोनपञ्चाशन्मरुतां मध्ये सप्तव्यतिरिक्तानां सर्वमरुतामपि गणपत्यपेक्षया किञ्चिदवरत्वमस्ति)**

'अत्र न केवलं शतस्थान्तर्गतभूदेव्या एव गणपत्यपेक्षया किञ्चिदधमत्वं किन्त्वेकोनपञ्चाशन्मरुतां मध्ये सप्तव्यतिरिक्तानां सर्वमरुतामपि किञ्चिद्गणपत्यधमत्वमस्ति ।

**'आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत्'** इति षट्प्रश्नभाष्योक्तस्मृतौ (P.६६) मरुतां गणपत्यधमत्वाभिधानात् उक्तश्रुतेरयमेवार्थः ।

**(मरुच्छब्दः समुदायपरः। मरुत्समुदायश्च गणपतेरवर इति वादः, मरुत् इत्येकवचनं व्यक्तिपरं वायुसुतो मरुत् विघ्नेशादवर इति च वादः न प्रामाणिकः)**

मरुदिति समुदायापेक्षयैकवचनम् । **'तस्मादग्निस्ततोऽवरः'** इति पूर्ववाक्यादवर इत्यनुवर्तते । ततश्च 'वायोः सुतो मरुत्' इति मरुत्समुदायः । ततो गणपतेरवर इति केचिदाहुः ।

अन्ये तु मरुदित्येकवचनं व्यक्तिपरमेवेत्यवेत्य **'वायोः सुतो मरुच्चैव [1]विघ्नेशादून उच्यत'** इत्याहुः । तदुभयमनुपपन्नम् । तथा हि -

**विष्णोः प्राणस्ततः श्रद्धा तस्या रुद्रो मनोऽभिधः ।**
**तस्मादिन्द्रस्त्विन्द्रियात्मा तस्य सोमोऽन्नदेवता ।**
**ततस्तु वरुणः सृष्टस्तस्मादग्निस्ततोऽवरः ।**
**आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत् ।**
**तस्मादग्निः पावकाख्यः प्रथमोऽग्नेः सुतस्ततः ।**
**ततः पर्जन्य उद्भूतः स्वाहातो मन्त्रदेवता ।**
**उदात्मको बुधस्तस्या उषा नामात्मिका ततः ।**

---

१. विघ्नादून

कक्षायामपि मरीच्यादीनां ग्रहणं न युक्तम् । किन्तु [१] सुधानुसारेण मित्राग्निमध्य एव ग्रहणं युक्तमिति दिक् ।

ननु यदुक्तं प्रमाणाभावादिति, तदसिद्धम् । तृतीयाध्यायभारत-तात्पर्यनिर्णयस्यैव प्रमाणत्वात् इति चेत् न । तस्यान्यार्थत्वात् । तथा हि - **"ततः सनाद्याश्च मरीचिमुख्या देवाश्च सर्वे क्रमशः प्रसूताः"** इति भारततात्पर्यनिर्णयवाक्ये तत इत्यस्य नासत्यदस्रयोरुत्पत्त्यनन्त-रमित्यर्थः । सनाद्याः सनकाद्याः प्रसूताः एवं मरीचिमुख्याः सर्वे देवाः क्रमशः प्रसूता इत्यन्वयः । मरीचिमुख्या इति तु न मरीच्यादिसप्तर्षिपरं, बृहद्भाष्यविरोधात् । मरीचिमुख्या देवा इति विशेषणविशेष्यभावायो-गाच्च । मरीच्यादिसप्तर्षीणां [२] देवत्वाभावात् । किन्तु **'प्रधानवायुजो भूतवायुर्नाम्ना मरीचिकः'** इति गीतातात्पर्यनिर्णयोक्तः (अ.१३ P.४०) **प्रधानवायुपुत्रो मरीचिनामको यो देवविशेषो भूतवायोरवान्तराभि-मानी सोऽत्र मरीचिपदेन ग्राह्यः ।** मुख्यपदेन पावकादयः पुष्करा-न्तास्तदधमा आजानजदेवाश्च ग्राह्याः । ततश्च सर्वे देवाः । नासत्यद-स्रयोरुत्पत्त्यनन्तरं मरीचिः प्रसूतः । तदनन्तरं पावकः । तदनन्तरं पर्जन्यः । ततः स्वाहा । ततो जलभूतावान्तराभिमानी बुधः । ततः उषा । ततः पृथिवीभूतमुख्याभिमानी शनिः । ततः कर्माभिमानी पुष्करः । तदनन्तरमाजानजदेवाः प्रसूता इत्येवं क्रमशः क्रमेण मरीचिमुख्याः सर्वेऽपि देवाः प्रसूता इति भारततात्पर्यनिर्णयवाक्य-स्यार्थः । अत एवं भारततात्पर्यनिर्णयवाक्यस्यान्यार्थत्वात् मरीच्यादि-सप्तर्षीणामश्विदेवाधमत्वे तन्मानं न भवतीति सिद्धम् ।। १६ ।।

---

१. x धा x सा - क.ख.    २. देवत्वात् - क.

*अथ सप्तदशकक्ष्या*

**(मित्रनामकः सूर्यः, निर्ऋतिः-प्रावही-तारा चेति चत्वारः पूर्वोक्तेभ्यः किञ्चिदवराः)**

**मित्रेति ।** मित्र आदित्यः । तारा बृहस्पतिभार्या [1]प्रावही प्रवहपत्नी। मित्रादयो विश्वामित्राद्यपेक्षया किञ्चिन्नीचाः । अग्न्यपेक्षया तु द्विगुणाधमाः। **'पर्जन्यमित्रशिखिनः'** इति छान्दोग्यभाष्यादिति ज्ञेयम् ।।१७।।



## तारतम्यपञ्चश्लोकी

**विष्वक्सेनोऽश्विनौ तौ गणपतिधनपावुक्तशेषाः शतस्थाः**
**देवाश्चोक्तेतरान्ये तदवरमनवश्च्यावनोचथ्यसञ्ज्ञौ ।**
**वैन्यो यः कार्तवीर्यः क्षितिपतिशशबिन्दुः प्रियादिव्रतोऽथो**
**गङ्गापर्जन्यसञ्ज्ञे शशियमदयिते मा विराट् चाऽशु पान्तु ।।३।।**

*अथ अष्टादशकक्ष्या*

**(विष्वक्सेनः गणपतिः धनपतिः अश्विनौ शतगणस्था पञ्चाशीति देवा मित्राद्यपेक्षया किञ्चिदवराः ।)**

**ता. वि. - विष्वक्सेन इति ।** अत्र विष्वक्सेनाद्या [2]विराडन्ता देवा मा माम् आशु पान्त्वित्यन्वयः । तत्र मित्रताराद्यपेक्षयाऽधमानाह - **विष्वक्सेन** इत्यादिना देवाश्चेत्यन्तेन । **अनुव्याख्यानतत्सुधानुसारेणायं** ग्रन्थः प्रवृत्तः । अतो विष्वक्सेनादीनां शतस्थान्तानां मित्राधमत्वे परस्परं साम्ये चानुव्याख्यानमेव मानमिति पृथक् प्रमाणं नोच्यते ।

---

१. प्रवहा - क. २. विरजन्ता - ख.

**अश्विनौ ताविति ।** यद्यपि शतस्थान्तर्गतत्वेनैवाश्विनौ लब्धौ । तथाऽपि [१]पृथगश्विग्रहणं शतस्थान्तर्गतदेवापेक्षया किञ्चिदाधिक्यज्ञापनार्थमिति वदन्ति ।

अन्ये तु वायोः सोमाधिकारो नैमित्तिक इति ज्ञापयितुं पृथग्ग्रहणं न त्वाधिक्यज्ञापनार्थं मानाभावादित्याहुः ।

**(पञ्चाशीतिदेवानां साम्येऽपि केषुचित्किञ्चिदाधिक्यादिकं यथाप्रमाणमवसेयम् । यथा भूदेव्या गणपत्यपेक्षयाऽवरत्वम् ।)**

गणपतिस्तु शतस्थान्तर्गतभूदेव्यपेक्षया किञ्चिदधिकः । **"तदा भूमिः पञ्च भूतावरा या"** इति भारततात्पर्यनिर्णये (अ.२०.१०४) भूदेवताया आकाशभूताभिमानिगणपत्यधमत्वोक्तिर्युज्यते । गणपति-भूम्योः साम्योक्तिस्तु अनेकगुणैर्वा एकगुणेन वाऽधमत्वाभावाभिप्रा-येण । नीचोच्चभावस्त्वंशविशेषेणैव । यथोक्तं बृहद्भाष्ये - (बृ.भा.अ.३ P.५६५)

**देवादिष्वेव सर्वेषु प्रोक्ता अपि विशेषिणः ।**
**पञ्चाशतो दशांशाद्वा स्वस्वजात्यां परस्परम् ।।** इति ।

अस्यार्थः - तृतीयं विष्टपं त्रिविष्टपमितिवत् सङ्ख्याशब्दो वृत्तिविषये पूरणार्थः । तेन पञ्चाशतो दशांशाद्वेत्यस्य पञ्चमांशाद्दशमांशाद्वा इत्य-र्थः । तथा चैकस्य गुणस्य पञ्चधा दशधा वा विभागे कृते यः पञ्चमो दशमो वांऽशस्तस्मादित्यर्थः । इत्थं च स्वस्वजात्यां [२]परस्परं देवर्ष्यादिषु [३]समानत्वेनोक्ता अपि देवाद्याः पञ्चमांशाद्दशमांशाद्वा नीचोच्चभावरूप-विशेषवन्तो ज्ञातव्या इति ।

---

१. पृथग्ग्रहणं - क. २. परस्परं इति नास्ति - क.
३. सनकत्वेनोक्ताः - क.

**(एकोनपञ्चाशन्मरुतां मध्ये सप्तव्यतिरिक्तानां सर्वमरुतामपि गणपत्यपेक्षया किञ्चिदवरत्वमस्ति)**

'अत्र न केवलं शतस्थान्तर्गतभूदेव्या एव गणपत्यपेक्षया किञ्चिदधमत्वं किन्त्वेकोनपञ्चाशन्मरुतां मध्ये सप्तव्यतिरिक्तानां सर्वमरुतामपि किञ्चिद्गणपत्यधमत्वमस्ति ।

**'आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत्'** इति षट्प्रश्नभाष्योक्तस्मृतौ (P.६६) मरुतां गणपत्यधमत्वाभिधानात् उक्तश्रुतेरयमेवार्थः ।

**(मरुच्छब्दः समुदायपरः। मरुत्समुदायश्च गणपतेरवर इति वादः, मरुत् इत्येकवचनं व्यक्तिपरं वायुसुतो मरुत् विघ्नेशादवर इति च वादः न प्रामाणिकः)**

मरुदिति समुदायापेक्षयैकवचनम् । **'तस्मादग्निस्ततोऽवरः'** इति पूर्ववाक्यादवर इत्यनुवर्तते । ततश्च 'वायोः सुतो मरुत्' इति मरुत्समुदायः । ततो गणपतेरवर इति केचिदाहुः ।

अन्ये तु मरुदित्येकवचनं व्यक्तिपरमेवेत्यवेत्य **'वायोः सुतो मरुच्चैव [१]विघ्नेशादून उच्यत'** इत्याहुः । तदुभयमनुपपन्नम् । तथा हि -

**विष्णोः प्राणस्ततः श्रद्धा तस्या रुद्रो मनोऽभिधः ।**
**तस्मादिन्द्रस्त्विन्द्रियात्मा तस्य सोमोऽन्नदेवता ।**
**ततस्तु वरुणः सृष्टस्तस्मादग्निस्ततोऽवरः ।**
**आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत् ।**
**तस्मादग्निः पावकाख्यः प्रथमोऽग्नेः सुतस्ततः ।**
**ततः पर्जन्य उद्भूतः स्वाहातो मन्त्रदेवता ।**
**उदात्मको बुधस्तस्या उषा नामात्मिका ततः ।**

---

१. विघ्नादून

**ततः शनिः पृथिव्यात्मा कर्मात्मा पुष्करस्ततः ।**
**क्रमात् प्रत्यवरा एते मुक्ताः सर्वगुणैरपि ।।**

इति **षट्प्रश्नभाष्योदाहृतप्रमाणे** (P.६६) कलादेवतानां तारतम्यमुच्यत इत्यवगम्यते । **'क्रमात्प्रत्यवरा एते'** इत्युपसंहारात् । प्राणादीनां कलादेवतात्वं तु षट्प्रश्नभाष्यटीकायां जयतीर्थश्रीचरणैरुपपादितं तत्रैव द्रष्टव्यम् ।

न च मरुतां कलादेवतात्वमस्ति मानाभावात् । नाऽपि गणपत्यधमत्वरूपं तारतम्यम् । एतत् स्मृतिं विना तत्प्रतिपादकप्रमाणाभावात् । एतत् स्मृतेश्चार्थान्तरपरताया वक्ष्यमाणत्वात् । वस्तुतस्तु **'मरुत् भूतवायुदेवते'**ति षट्प्रश्नभाष्यटीकायां मरुत्पदं भूतवायुदेवतापरत्वेन व्याख्यातम् । मरुच्छब्दस्य भूतवायुवाचकतया अभिमान्यधिकरणन्यायेनोक्तार्थलाभात् । ततश्च द्विचत्वारिंशन्मरुत्प्रतिपादकपदस्यैवाभावात् कथं **'वायोः सुतो मरुत्'** इति वाक्यादुक्तमरुतां गणपत्यधमत्वसिद्धिः।

यदप्युक्तं, मरुदित्येकवचनं समुदायापेक्षमिति तदपि न । तथा सति मरुत्पदं समुदायलक्षकमित्युक्तं स्यात् । न च लक्षणा युक्ता । मुख्यार्थान्वयानुपपत्तेरभावात् । उपक्रमादिलिङ्गाभावेन मुख्यार्थे तात्पर्यानुपपत्तेरभावाच्च ।

यदपि मरुत्पदेन एक एव मरुद्विवक्षित इति तदपि न । विनिगमकाभावेन द्विचत्वारिंशन्मध्ये अयं मरुत् गणपत्यधम इति निर्णयायोगात्। तस्मात् **'आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत्'** (षट्प्रश्न.भा. P.६६) इति प्रमाणबलेन द्विचत्वारिंशन्मरुतां तन्मध्येऽन्यतरस्य वा गणपत्यधमत्वं न सिध्यतीति गणपतेर्मरुतां च साम्यमेव । न तु न्यूनाधिकभावः मानाभावादिति बोध्यम् ।

---

१. द्विचत्वारिमरु - क. २. साम्यलक्षण - ख.

**('आकाशदेवता विघ्नः ततो वायोः सुतो मरुत्' इत्यत्र मरुत्पदेन वायुपुत्रः भूतवाय्वभिमानी मरीचिशब्दवाच्यः देवः ग्राह्यः । स एव विघ्नेशादवरः ।)**

किं तर्हि तस्माद् वाक्याद् सिध्यतीति चेत् मरीचिनामकदेवस्य गणपत्यधमत्वमिति ब्रूमः । तथा हि - **'ततो वायोः सुतो मरुत्'** इत्येतद्वाक्यव्याख्यानावसरे जयतीर्थश्रीचरणै'र्मरुत् भूतवायुदेवते'त्युक्तम् । तेन भूतवायुरूपकलादेवतात्वमुक्तम् । गणपत्यधमत्वं तत्रोच्यत इति प्रागुक्तम् । ततश्च यो वायुपुत्रो भूतवायुदेवता गणपत्यधमश्च स एवात्र ग्राह्यः ।

न च प्रवहस्तथा । तस्य गणपत्यधमत्वाभावात् । न चोक्तविशेषणविशिष्टोऽन्यो देवोऽस्ति । अतः परिशेषात् मरीचिनामको देवविशेषोऽत्र ग्राह्यः । तस्य वायुसुतत्वं भूतवायुरूपकलादेवतात्वं च गीतातात्पर्यनिर्णये स्पष्टमुक्तम् । **'प्रधानवायुजो भूतवायुर्नाम्ना मरीचिकः'** इति । भूतवायुत्वं नाम न जडवायुत्वम् । मरीचेश्चेतनत्वेन जडात्मकत्वायोगात्। किन्त्वभिमान्यधिकरणन्यायेन भूतवाय्वभिमानिदेवतात्वमेव । तच्च द्विविधम् । भूतवायुमुख्याभिमानित्वं तदमुख्याभिमानित्वं चेति । तत्राऽद्यं मरीचेर्नास्ति । मानाभावात् । प्रवहस्यैव भूतवायुमुख्याभिमानित्वप्रसिद्ध्या तद्विरोधाच्च । अतः परिशेषाद् भूतवाय्वमुख्याभिमानित्वप्रसिद्ध्या मरीचेर्भूतवायुत्वं वाच्यम् । ततश्च गीतातात्पर्यनिर्णयबलात् [1]मरीचेर्वायुपुत्रत्वं भूतवायुदेवतात्वं च सिद्धम् । तस्य गणपत्यधमत्वं तु गणपतिसमानाश्विदेवताधमत्वात् सिद्ध्यति ।

मरीचेरश्विदेवाधमत्वं भारततात्पर्यनिर्णये तृतीयाध्याये **'मरीचि-**

---

१. मरीचवायुत्वं - ख.

**मुख्या देवाश्च'** इत्यादिना प्रतिपादितम् । तद्वाक्यार्थस्तु **'विश्वामित्रो मरीचिः'** इत्यादि वाक्यव्याख्यानावसरे उक्तोऽनुसन्धेयः ।

ननु प्रधानवायुः, अग्निः, उमापतिः, विवस्वान् वरुणः मित्रः शक्रः उरुक्रम इति पञ्च, आहङ्कारिकप्राणप्रवहौ, बृहस्पतिरित्येतेऽभिहिताः, पर्जन्यो वक्ष्यते । एते च शतस्थान्तर्गता इति, तेषां कथं विष्वक्सेनादिसाम्यमित्यत उक्तम् - **उक्तशेषा** इति। ये प्रधानवाय्वादयः उत्तमकक्ष्यासूक्ताः यः पर्जन्यो वक्ष्यते, यौ चाश्विनावत्रैव कक्ष्यायामुक्तौ तेभ्योऽवशिष्टा इत्यर्थः ।

**(शतसङ्ख्याकदेवगणनिरूपणम्)**

**शतस्था इति ।**

**प्रधानवायुर्वसवो रुद्रादित्या मरुद्गणाः ।**
**बृहस्पतिर्ऋभुर्द्यावा पृथिव्यावश्विनौ तथा ।।**

**विश्वेदेवाश्च पितरः शतस्था देवता मताः** इति प्रमाणे, प्रधानवायुरेकः १ वसवः ८ रुद्राः ११ मरुतः ४९ विश्वेदेवाः १० द्वादशादित्याः १२ बृहस्पतिः १ ऋभुः १ पितरः ३ द्यावापृथिव्यौ २ अश्विनौ २ इति तत्त्वप्रदीपे चोक्तप्रकारेण शतसङ्ख्याका इत्यर्थः ।

**(ऋभुपदेनात्र भागवतोक्ताः सोमपाः सहस्रदेवाः न विवक्षिताः ।**
**तेषां तपसा सोमप्राप्तावपि वेदोक्तसोमाधिकाराभावात् ।)**

**'बृहस्पतिर्ऋभुर्द्यावापृथिव्यौ'** इत्यादौ ऋभुसहस्रं ग्राह्यम् । **'अध्वर्युणा हूयमाना देवाः सर्वे समाययुः । ऋभवो नाम तपसा सोमं प्राप्ता सहस्रशः'** इति चतुर्थस्कन्धे (श्लो.१२) देवसहस्रस्य ऋभुनामकत्वोक्तेः । तेषां तपसा [1]सोमप्राप्तिमत्त्वाच्च । न च ऋभुरित्येकवचनविरोधः । 'विप्राणां [2]भोजनम्' इतिवत्समुदायैक्याभिप्रायेण तदुपपत्तेरित्याहुः ।

१. साम्यलक्षण - ख. २. याजनम् - ख.

तत्र वक्तव्यम् - किमेते ऋभवः **'पृथिव्याम् ऋभवो विलीयन्त'** इत्युक्ता ऋभव एव उत तद्भिन्नाः। नाद्यः। तथा सति ऋभूणां पृथिव्यां देहलयानुपपत्तेः । तथाहि - [१] स्वोत्तमप्रवेशेन तत्र देहलयो हि [२]सूत्रभाष्यादौ निर्णीतः । न ऋभुगणस्य शतस्थेषु गणनायां स युक्तः। तथा सति ऋभुगणस्य पृथिवीसमानत्वप्राप्तेः । स्वसमानेषु च देवानां देहलयः सिद्धान्तविरुद्ध इति । नान्त्यः । प्रमाणाभावात् । यदि च वाङ्मात्रेणैव वाक्यद्वयोक्ता ऋभवः परस्परं भिन्ना इत्यङ्गीक्रियते तदा बहुविप्लवः स्यादिति ।

किञ्च **'विभागः शतवत्'** इति सूत्रे (ब्र.सू.३.४.११)

**नवकोट्यो हि देवानां तेषां मध्ये शतस्य तु ।**
**सोमाधिकारो वेदोक्तो ब्रह्मणी द्वे शताधिके ।।**

इति भाष्यानुसारेण तत्त्वप्रकाशिकायां 'देवत्वसाम्येऽपि नवकोटीनां न साधारण्येन सोमाधिकारः । किन्तु परापरब्रह्मद्वयाधिकशतस्येति विभाग एवेति' सावधारणमुक्तम् । ततश्च ऋभुसहस्रस्य तपसा [३]सोमप्राप्तावपि वेदोक्तः [४]सोमाधिकारो नास्तीति अवश्यमङ्गीकार्यम् । अन्यथोक्तसूत्र-भाष्यतत्त्वप्रकाशिकाविरोधात् । ततश्च वेदोक्तसोमाधिकारयुक्त-शतस्थदेवानां मध्ये ऋभुशब्देन तपसा सोमप्राप्तियुक्तऋभुसहस्रग्र-हणमनुपपन्नमिति ।

यदपि 'ऋभुविभ्वावाज' इति त्रयोऽपि ऋभुपदेन ग्राह्याः । **'ऋभवो**

---

१. स्वमतप्र - क.

२. तदुक्तं हि ब्रह्मसूत्रभाष्ये ४. २. ४.

**मुक्ताः सन्तोऽग्निमाविश्य देवाः सर्वेऽपि भुञ्जते ।**
**अग्निरिन्द्रं तथेन्द्रश्च वायुमाविश्य सोऽपि तु ।**
**आविश्य परमात्मानं भुङ्क्ते भोगांस्तु बाह्यकान्**

३. साम्य - ख. ४. सोमाप्तारपि विध्युक्तः - ख.

**विष्ट्यकृता'** इत्यादौ ऋभुशब्देन त्रयाणां ग्रहणादिति कैश्चिदुक्तम् । तत्र वक्तव्यम् - किं ऋभुशब्दस्य त्रिषु शक्तत्वात्तेन त्रयाणां ग्रहण-मित्यभिप्रायः? किं वा ऋभुशब्द एकस्मिन्नेव शक्तः तथाऽपि 'छत्रिणो यान्ति' इत्यादिवल्लक्षणया त्रयोऽपि ग्राह्या इति? नाऽद्यः । **'अयं देवाय'** इति ऋग्भाष्यटीकायां **'त्रयाणां मध्ये ऋभुर्नामैक एव । विभ्वा वाजश्चापरौ । तथाऽपि साहचर्यादिव नाम्ना त्रयोऽपि उच्यन्ते'** इत्युक्तेः तेनैकस्मिन्नेव ऋभुशब्दस्य शक्तिरिति ज्ञायते । ऋभुनामैक एवेत्यवधार-णात् । [1]एकस्य नामेत्युक्तेश्च । त्रिषु लक्षणासाहचर्यादित्यनेन विष्टि-रूपैककार्ये सहचरितत्वरूपोपलक्ष्यतावच्छेदकाभिधानात् । तथा च ऋभुशब्दाच्छक्त्या त्रयाणां लाभ इति अयुक्तम् ।

नान्त्यः । लक्षणाबीजाभावात् । न ह्यत्रैकवचनान्तेन ऋभुशब्देनैक-मात्रग्रहणेऽन्वयानुपपत्तिरस्ति । नापि तात्पर्यानुपपत्तिः । उपक्रमादिता-त्पर्यलिङ्गाभावेन ऋभुशब्दस्य त्रिष्वपि तात्पर्यमित्यवगन्तुमशक्यत्वात्। ऋभवो विष्ट्यकृतेत्यादौ बहुवचनोक्तबहुत्वस्य एकस्मिन्नभावेन [2]विभक्त्य-र्थान्वयानुपपत्त्या ऋभुशब्दस्य लक्षणया त्रितयपरत्वमुक्तमिति न तत्प्रति-बन्दी । तस्मात्प्रमाणे, तत्त्वप्रदीपे च, ऋभुशब्देन ततोऽन्येषां **'शैब्यनाम-र्भुरग्र'** इति भारततात्पर्यनिर्णयादौ प्रसिद्ध एक एव ऋभुर्ग्राह्यः । न चैकस्याऽपि ऋभोः कथं पृथिव्यां देहलयः । स्वसमानेषु देवानां [3]देहलयस्य सिद्धान्तविरुद्धत्वादिति वाच्यम् । तस्याग्नौ देहलयात् । **'विशन्ति शिष्टा अपि हव्यवाहम्'** इत्युक्तेः इति दिक् ।

**(द्युलोकाभिमानिनी शक्रभार्या द्युपदेनोक्ता पृथिव्यभिमानिनी वराहभार्या धराऽत्र पृथिवीशब्देन ग्राह्या न द्रोणनामकवसुभार्या)**

---

१. एकमाने - ख. २. विभक्त्यर्थापत्या - क.
३. देवल - ख.

**द्यावापृथिव्याविति ।** द्यौश्च पृथिवी च द्यावापृथिव्यौ । **दिवो द्यावेति** दिव्शब्दस्य द्यावादेशः । अत्र दिव्शब्देन द्युलोकाभिमानिनी भारती ग्राह्येति केचित् । अत्र पक्षे [1]उक्तशेषा इत्येतद् भारतीव्यतिरिक्ता इत्यपि व्याख्येयम् ।

सम्प्रदायविदस्तु - सुरेन्द्रलोकश्रीरेव **'शक्रदयिता त्वपरैव शच्या'** इति भारततात्पर्यनिर्णयेऽभिहिता द्युलोकावान्तराभिमानिनी शक्रभार्या, ग्राह्येति वदन्ति । पृथिवीशब्देन यो द्रोणनामा वसुः स **'स्वभार्यया धरया'** इति भारततात्पर्यनिर्णयोक्त [2]द्रोणनामकवसुभार्या धरादेवी न ग्राह्या । तथात्वे द्रोणधरादेव्योरुदाहृतवाक्यसिद्धदाम्पत्यायोगात् । देवतास्त्रीषु पतिसाम्यस्य क्वाप्यभावात् । तदुक्तं बृहद्भाष्ये - (अ.३ P.५६४)

**देवस्त्रियो दशांशोनाः स्वपतिभ्यस्तथाऽवराः ।**
**अष्टांशोनाः प्रविज्ञेयाः यासां मुक्तौ सह स्थितिः ।। इति ।**

किन्तु पृथिवीभूताभिमानिनी वराहभार्या धरादेवी पृथिवीशब्देनात्र ग्राह्या । तस्याश्च शतस्थान्तर्गतत्वे न किञ्चिद् बाधकमिति ।

**(ऋभ्वपेक्षया पृथिव्याः नाऽधिक्यम्)**

यत्तु कैश्चिदुक्तं ऋभ्वपेक्षया पृथिव्याः किञ्चिदाधिक्यं गणपत्यपेक्षया तु किञ्चिदधमत्वम् । तथा च तदीयं वाक्यम् - **'ऋभुभ्योऽल्पाधिका भूमिः किञ्चिद् विघ्नेशतोऽधमा'** इति । तत्र पृथिव्या गणपत्यधमत्वं प्रमाणसिद्धमिति **गणपतिधनपा**वित्यत्रोपपादितम् । **ऋभ्वपेक्षया पृथिव्याः** किञ्चिदाधिक्ये तु न किञ्चिन्मानम् । न च पृथिव्याम् ऋभूणां [3]देहलयान्यथानुपपत्त्या तस्या ऋभ्वपेक्षयाऽऽधिक्यं कल्पनीयम् । देवानां

---

१. उक्तिविशेषा - क. २. द्रोणभार्या - ख.
३. देहान्यथापत्या - क.

स्वोत्तमप्रवेशेन तत्र देहलयस्य शास्त्रे निर्णीतत्वात् इति वाच्यम् । ऋभूणां पृथिव्यपेक्षयाऽत्यन्ताधमत्वेनैव तत्र देहलयोपपत्तेः ।

न च पृथिव्या ऋभूणामप्यधमत्वमेव नास्ति । **ऋभुर्द्यावापृथिव्या-**विति प्रमाणे तत्त्वप्रदीपे च ऋभूणां पृथिव्याश्चैककक्ष्यायां निर्दिष्टत्वेन समानत्वलाभादिति वाच्यम् । ऋभुरित्येकवचनेनैकमात्रस्यैव प्रतीत्या बहूनां ऋभूणामेककक्ष्यानिर्देशस्यैवाभावात् । अन्यथाऽन्योन्याश्रयप्रस-ङ्गात् । ऋभुशब्देन ऋभुगणो ग्राह्य इत्यस्यार्थस्य सिद्धौ देवानां स्वसमानेषु देहलयान्यथानुपपत्या ऋभुगणलयाधिकरणपृथिव्याः किञ्चित्तदधि-कत्वसिद्धिः । तस्याः किञ्चिदधिकत्वासिद्धा[1]वन्वयानुपपत्तिरूपोक्त-बाधकाभावेन ऋभुशब्देन ऋभुगणप्रसिद्धरिति ।

**अश्विनाविति** । नासत्यो दस्रश्चेति द्वावश्विनाविति बोध्यम् । **पितर इति।** यद्यपि बहवः पितरः प्रसिद्धास्तथाऽप्यत्र त्रय एव ग्राह्याः। तेषामेव सोमपानार्हत्वात् । तदुक्तं स्मृतौ -

**अग्निष्वात्तादयः सप्त षट्च बर्हिषदस्तथा ।**
**त्रयश्च सोमपानार्हाः पितरोऽत्र प्रकीर्तिताः ।।** इति ।

**('पितर' इत्यत्र पितृपदेन वसु-रुद्र-आदित्या ग्राह्याः न सोमादयः)**

ते च सोमो यमोऽग्निश्चेत्येवं त्रय इति केचिदाहुः । तन्न । सोमादीनां पितृत्वे प्रमाणाभावेन पितृपदेन ग्रहणायोगात् ।

ननु केवलानां सोमादीनां पितृत्वं माऽस्तु । तथाऽपि विशिष्टानां भविष्यति । आश्वलायनगृह्यपरिशिष्टे स्नानाङ्ग [2]पितृतर्पणकथनावसरे **"अथ दक्षिणमुखः [3]प्राचीनावीति पितृतीर्थेन सतिलाभिरद्भिर्व्याहृति-**

---

१. अन्यथानुपपत्ति - क. २. 'पितृतपणे'ति नास्ति - ख.
३. प्रचयावेति - ख.

**भिरेव सोमः पितृमान्योऽङ्गिरस्वान् अग्निः कव्यवाहन इत्यादीन् पितॄन् त्रिस्तर्पयेत्"** इति तत्तद्विशेषणविशिष्टानां सोमादीनां पितृत्वाभिधानात् । अतस्ते पितृपदेन ग्राह्या इति चेत्, विशिष्टानां सोमादीनां देवत्वे प्रमाणाभावेन [1]शतस्थदेवमध्ये ग्रहणायोगात् । तस्मात्पितर इत्यत्र न सोमादयो ग्राह्याः । केवलानां देवत्वेऽपि पितृत्वाभावात् । विशिष्टानां पितृत्वेऽपि देवत्वाभावात् । किन्तु -

**वसुरुद्रादित्यसञ्ज्ञाः पितरः श्राद्धदेवताः ।**
**प्रीणयन्ति मनुष्याणां पितृश्राद्धेन तर्पिताः ।।**

इति स्मृतौ पितृत्वेन देवत्वेन चोक्तास्त्रय एव पितर इत्यत्र ग्राह्याः । एवं च वसुरुद्रादित्या देव[2]विशेषा एव । न तु वसुरुद्रादित्याख्या गणदेवताः ।

**वसुरुद्रस्तथाऽदित्यः पित्रादित्रितये क्रमात् ।**
**मातामहादिमात्रादित्रये च स्मृतिमर्हति ।।**

इति स्मृतौ एकवचनेन प्रत्येकमेकत्वाभिधानात् । गणदेवानां चैकत्वाभावात् । वसवोऽष्टौ रुद्रा एकादश आदित्या [3]द्वादशेति तेषां प्रत्येकं बहुत्वप्रसिद्धेः ।

नन्वेवं सति -

**वसवः पितरो ज्ञेया रुद्रास्तत्र पितामहाः ।**
**पितुः पितामहा प्रोक्ता आदित्या बर्हिषि स्थिताः ।।**

इति स्मृतौ पित्रादिषु स्मर्तव्यानां वस्वादीनां प्रत्येकं बहुत्वोक्तिविरोध इति चेत् । उच्यते । पिण्डप्रदानकालेऽपि 'शुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहा इति मन्त्रः पठ्यते । तत्र बहुवचन-

---

१. शतमध्ये - ख.   २. देवाविशेषा - क.   ३. द्विर्द्वादश - ख.

मनुपपन्नार्थं पितृपितामहप्रपितामहानां प्रत्येकमेकत्वात् । अत एकपिण्ड-भागित्वेन [1]रूपेणाजहत्स्वार्थलक्षणया पितृपदेन पितृतदनुवर्तिनश्च ग्राह्याः। पितुः यथोक्तनामगोत्रं **'ये च त्वामत्रानु'** इति पितरं तदनुव-र्तिनश्च स्मृत्वा **'तस्मै ते स्वधा नमस्तेभ्यश्चेति'** स्मृतान् पित्रादीनुद्दिश्य पिण्डप्रदानस्य क्रियमाणत्वेन पितृतदनुवर्तिनां एकपिण्डभागित्वावगमात्। एवं पितामहपदे प्रपितामहपदे च छत्रिन्यायेन अजहत्स्वार्थलक्षणा बोध्या। तत्र पितरि तदनुवर्तिषु च प्रत्येकं वसुः स्मर्तव्यः । अन्यथा पितृतदनुवर्तिप्रीत्ययोगात् । तत्र तत्र स्मृतानामेव वस्वादीनां [2]तत्तत्प्रीति-जनकत्वस्य प्रागुदाहृतस्मृतिसिद्धत्वात् । एवं पितामहे तदनुवर्तिषु च प्रपितामहे तदनुवर्तिषु च रुद्रादित्यौ स्मर्तव्यौ इत्युक्तः । उक्तमन्त्रानुसारेण च **'वसवः पितरो ज्ञेयाः'** इति स्मृतावपि पितृपितामहप्रपितामहेषु उक्तन्यायेनाजहत्स्वार्थलक्षणाऽङ्गीकर्तव्या । तत्र च वसवः पितरो इत्या-दिसामानाधिकरण्यमनुपपन्नम् । अतः पितर इत्यस्य पितृतदनुवर्तिषु स्थिता इत्यर्थः । एवं पितामहा प्रपितामहा इत्यत्रापि ज्ञेयम् ।

वसव इत्यादिपदं च वस्वाद्यंशबाहुल्यपरम्। ततश्च वस्वंशाः पितृ-तदनुवर्तिषु स्थिताः स्मर्तव्याः। एवमादित्या आदित्यांशाः पितुः पिता-महाः प्रपितामहाः तदनुवर्तिषु स्थिताः स्मर्तव्याः । ननु श्राद्धादिकाले [3]एकवचनान्त एव पित्रादिशब्दः प्रयुज्यते । अतो बहुवचनस्यैवाभावात् तदुपपत्तिकरणं व्यर्थमित्यत उक्तं - **बर्हिषि स्थिता** इति । तथा च बर्हिरास्तरणं कृत्वा शुन्धन्तां पितर इत्यादिबहुवचनप्रयोगात् तत्कार्यो-च्चार्यमाणबहुवचनान्तपित्रादिपदार्थेषु पितृतदनुवर्त्यादिषु वस्वादिरूपबा-हुल्यं स्मर्तव्यम् इत्यभिप्रेत्य **वसवः पितरो ज्ञेया** इत्यादिस्मृतिः प्रवर्तते।

१. रूपेण जहत् - क. २. तत्प्रीति - ख.
३. एका - क.

केचित्तु यथा तत्तच्छ्राद्धे [1]द्वयोर्द्वयोरेव विश्वेदेवत्वम् इष्टिश्राद्धे 'क्रतुर्दक्ष' इत्यादिस्मृतेः । तथापि **'विश्वेदेवाः श्रुणुतेमं हवं मे'** इत्यादिश्रुतौ -

**आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ।**

**ये चात्र विहिताः श्राद्धे सावधाना भवन्तु ते ।।**

इति स्मृतौ च पूजाख्यापनार्थं बहुवचनम् ।तथा शुन्धन्तां पितर इति श्रुतौ वसवः पितर इति तदनुस्मृतौ च पूजाख्यापनार्थं बहुवचनमित्याहुः। सर्वथा **वसव** इति स्मृतिर्वसुरुद्रादित्यख्यदेवविशेषपरा । न तु गणदेवता-परा। तासां पितृत्वे [2]मानाभावात्। शतस्थेषु गणदेवतानां पृथक् ग्रह-णात् पुनः पितृत्वेन तद्ग्रहणवैयर्थ्याच्च शतसङ्ख्याया न्यूनत्वप्रसङ्गाच्चेति।

**शतस्था देवता** इति ।

प्रधानवायुरेकः । वसवोऽष्टौ । रुद्रा एकादश । आदित्या द्वादश। (दशविश्वेदेवाः) मरुत एकोनपञ्चाशत् । बृहस्पतिरेकः । ऋभुरेकः । द्यावापृथिव्यौ द्वे । पितरस्त्रयः इत्येवं गणनायां सोमपानार्हदेवा शतस-ङ्ख्याविशिष्टा मता इत्यर्थः ।

यत्तु **ऋभुविभ्वावाज** इति त्रयाणां ऋभुशब्देन विवक्षायां अश्विनो-र्द्यावापृथिव्योश्च देवतात्वैक्येनैकत्वविवक्षणात् न शतसङ्ख्याधिक्यम्। अथवा द्यावापृथिव्योरश्विनोश्च प्रत्येकं द्वित्वमेव विवक्षितमस्तु । तथाऽपि पितॄणां [3]देवतात्वेनैक्यं विवक्षणीयम् । तेन न शतसङ्ख्याधिक्यमिति। तत्र ऋभुशब्देन त्रयाणां ग्रहणमनुपपन्नम्। किन्त्वेकमात्रग्रहणं कार्यमित्यु-पपादितम् । तेन द्यावापृथिव्योरश्विनोश्च द्वयोर्द्वयोर्ग्रहणेऽपि शतसङ्ख्या-पूर्तिसम्भवात् न प्रत्येकं तयोरेकत्वविवक्षा कार्या एवं त्रयाणां पितॄणां ग्रहणेऽपि यथा[4]श्रुतमार्गेणैव देवपरिगणनायां शतसङ्ख्यापूर्तिसम्भवात् न पितॄणामेकत्वं विवक्षणीयम् ।

---

१. द्वयार्द्वयोरिति नास्ति - ख.२. मानाभावात् इति नास्ति- क., मxभावात् ख

३. देवा पृथिव्यश्वि - क. ४. यथा मार्गेणैव - क.

किञ्च प्रतीतार्थे विरोध एव सर्वत्र विवक्षाबीजं दृष्टम् । यथा त्रिलोकविवक्षायां सप्तलोकविवक्षायां च **'अथ यदतः परो दिवः'** **'त्रिपादस्यामृतं दिवि'** इति श्रुत्योः परस्परविरोधः । न च ऋभु-शब्देनैकमात्रग्रहणे द्यावापृथिव्योरश्विनोः पितॄणां चैकत्वविवक्षायां परस्परविरोधो मानान्तरविरोधो वाऽस्ति। अतः ऋभुशब्देन त्रयाणां विवक्षा तदुपपत्तये द्यावापृथिव्योरश्विनोः पितॄणां चैकत्वविवक्षा न युक्तेति । देवतात्वैक्यात् [1]द्यावापृथिव्योरश्विनोश्चैकत्वमित्याद्ययुक्तम्। अग्नीषोमवद् द्यावापृथिव्योरश्विनोश्चैकमन्त्रप्रतिपाद्यत्वस्य एकहविर्भाग-रूपस्य वा पूर्वोक्ते [2]व्यक्त्यनेकत्वस्यापह्नोतुमशक्यत्वेन शतसङ्ख्या-धिक्यप्रसङ्गस्य दुर्निवारत्वात् । एतेन पितॄणां देवतात्वैक्यस्य दुरुपपाद-त्वाच्च ।

किञ्च द्यावापृथिव्यादीनां ऐक्यविवक्षायामपि स्वाभाविकं द्वित्वं त्रित्वं वा न निवर्तते। तन्निवर्तकाभावात्। न हि विवक्षामात्रेण स्वाभा-विकधर्मस्य निवृत्तिः [3]धर्मान्तरोत्पत्तिश्च युज्यते। तथात्वे विषस्य पीयू-षत्वविवक्षया विषत्वनिवृत्तिरमृतत्वोत्पत्तिश्च स्यात् । तथा च पीयूषतया विवक्षितं विषं सर्वैर्भुज्येत । तस्माद् ऋभुत्रयग्रहणे द्यावापृथिव्यादीना-मेकत्वविवक्षामात्रेण तद्गतद्वित्वसङ्ख्यानपायात् । शतसङ्ख्याधिक्यं दुर्वारमेवेति ।

**(अष्टौ वसवः)**

अथ वस्वादिगणाः प्रदृश्यन्ते। **"द्रोणः प्राणो ध्रुवोऽर्कोऽग्निः दोषो**

---

१. द्यावापृथिव्योरिति नास्ति - क.

२. व्यक्तयैक्यस्य - ख.

३. धर्मोत्पत्तिः - ख.

[1]**वस्तुर्विभावसुः"** इत्यष्टौ वसवः। तत्राष्टमो वसुर्द्युनामकः। **'अथाष्टमो वसुरासीद् द्युनामा'** इति भारततात्पर्यनिर्णयोक्तेः । (अ.११.२२)

(एकादशरुद्राः)

**रैवतोऽजो भवो भीमो वाम उग्रो वृषाकपिः ।**
**अजैकपादहिर्बुध्निर्बहुरूपो महान् तथा ।।**

इत्येकादशरुद्राः। एतेषां मध्ये केषाञ्चित्सदाशिवः विरूपाक्षः । [2]पत्रतापः विष्कम्भ इति नामान्तराणि । **'अग्रे शिवोऽहं [3]भव एव बुद्धेः'** विरूपाक्ष इति त्रयः **'रुद्रेषु [4]पत्रतापाख्यः'** [5]**'विष्कम्भो नाम रुद्राणाम्'** इति तत्र तत्र भारततात्पर्यनिर्णयोक्तेरिति ध्येयम् ।

(द्वादशादित्याः)

**विवस्वानर्यमा पूषा त्वष्टा च सविता भगः ।**
**धाता पर्जन्यवरुणा मित्रश्शक्र उरुक्रमाः ।।**

इति द्वादशादित्याः । अत्रोरुक्रमो विष्णुरिति ज्ञेयम् ।

**(मरुत्सु सप्तगणाः एकोनपञ्चाशद् मरुतां नामानि च)**

मरुत [6]एकोनपञ्चाशत् तेष्वन्तर्गणाः सप्त । यथोक्तम् - **'इन्द्रज्येष्ठा मरुद्गणा'** इत्यृग्भाष्यटीकायां सप्त सप्तका इह ते इति मरुद्गणा इति बहुवचनम् इति । तत्रैको गणः सप्तसप्तसमूहात्मकः भूमण्डलमारभ्य ध्रुवमण्डलपर्यन्तं तिष्ठति । तदुक्तं -

**"वायुस्कन्धाः सप्त तेषामेकैकं सप्त सप्त ते ।**

---

१. घोषो वास्तु - ख. २. अत्रणः - क.
३. मत - क. ४. शतपत्राख्यः - ख.
५. विश्वम्भो - क. ६. एकपञ्चाशत् - ख.

[1]**आमेघादेरावहादिरुपर्युपरि संस्थिताः"** इति। तेषां मरुतां मध्ये वायुस्कन्धाः मरुद्गणाः सप्त ते गणाः। एकैकं क्रियाविशेषणमेतत् प्रत्येकमित्यर्थः । आमेघादेरिति आङ् मर्यादायाम् आ कडारादिवत् पदद्वयमेतत् । अन्यथा[2]ऽव्ययीभावत्वेनाव्ययत्वात् सुपो लुक्प्रसङ्गात् । आवहादिर्गण इति शेषः । तत्र भूमिमारभ्य मेघमण्डलपर्यन्तं आवहगणस्तिष्ठति । तदुक्तं -

**"द्वौ शुक्लज्योतिरादित्यौ नन्दो हरितगस्तथा ।**

**चित्रज्योतिः सत्यज्योतिः ज्योतिष्मान् स्कन्ध आवहः"** ।। इति। **तत्र सप्तानां मध्ये एक आवहनामवान्** । तन्नाम्नैव गणोऽपि तथोच्यत इति बोध्यम् । **द्वितीयो** मरुद्गणस्तु [3]मेघमण्डलादुपरि सूर्यमण्डलपर्यन्तं तिष्ठति । तदुक्तं -

**"ऋतजित्सत्यजित्सेनजिदमित्रावमित्रजित् ।**

**भूरिमित्र सुषेणौ चेत्याभानोः प्रावहो गणः"** इति । अत्राऽपि **प्रवह इत्येकस्य नाम**। तन्नाम्नैव तद्गणोऽप्युच्यत इति बोध्यम् । सूर्यमण्डलादुपरि चन्द्रमण्डलपर्यन्तं **तृतीयो गणस्तिष्ठति ।**

**"ऋचः [4]सत्यो ध्रुवो धर्ता विधर्ता च विधारकः ।**

**वरुणश्च तृतीयोऽयमाचन्द्रादुद्वहो गणः"** इत्युक्तेः । उद्वहशब्दः प्राग्वद् बोध्यः । [5]चन्द्रमण्डलादुपरि नक्षत्रमण्डलपर्यन्तं **चतुर्थो गणः।**

**"धवान्तो नय उग्रश्च भीमः क्षेमश्च साह्वयः ।**

**आभियुग्मोऽथ चोभेभ्यश्चतुर्थः संवहो गणः"** ।। इत्युक्तेः । संवहशब्दः प्राग्वत्। नक्षत्रमण्डलादुपरि ग्रहमण्डलपर्यन्तं **पञ्चमो गणः।**

**स्युस्तादृगीदृगन्यादृक् प्रतिदिङ्मितसम्मिताः ।**

१. अमोघा - क. २. व्ययाव्ययभावे - ख.
३. मण्डलमेघा - ख. ४. सन्ध्यो - क. ५. चन्द्रा - क.

**सम्भवश्चेत्याग्रहेभ्यः पञ्चमो विवहो गणः ।।** इत्युक्तेः ।

ग्रहमण्डलादुपरि सप्तर्षिमण्डलपर्यन्तं **षष्ठो गणः ।**

**ईदृक्षः पुरुषोऽन्यादृक् यमितासमदृक् तथा ।**

**[१]क्षामश्च प्रतिदक्षश्श्येत्यासप्तर्षेः परावहः ।।** इत्युक्तेः ।

ऋषिमण्डलादुपरि ध्रुवमण्डलपर्यन्तं **सप्तमो गणः ।**

**[२]महदिन्द्रश्च सरमः [३]सामज्ञो मानुषा विशः ।**

**देवीविषोऽथ धर्मा च स्कन्धः सप्तम आध्रुवात् ।।**

इत्युक्तेः । यानि तु आहङ्कारिकः प्राणः सौम्यः प्रतिभः सम्पातिकेसरी श्वेतः प्राणः अपानः व्यानः उदानः समानः नागः कृकलः कूर्मः देवदत्तः धनञ्जयः इत्यादीनि भारततात्पर्यनिर्णयादौ तत्र तत्र नामान्युक्तानि तानि गणसप्तकस्थानां मरुतां नामान्तराणि उभयविधप्रमाणादिति ज्ञेयम्। तेनैकस्यानेकनामवत्त्वात् कुत्रचित् केनचिन्नाम्ना व्यवहारेऽपि न दोष इति ।

**इदं तु बोध्यम् । मरुतां मध्ये आहङ्कारिकप्राणप्रवहयोः प्राणादि-पञ्चकस्य च इतरापेक्षयाऽधिक्यम् ।**

**'मरुतश्च समाः सर्वे सप्त तेषु प्रधानकाः'** इति भागवततात्पर्योक्तेः । तत्रा[४]प्याहङ्कारिकप्राणप्रवहयोरितरमरुदपेक्षया बहुगुणैराधिक्यम् । मित्रादिबहुव्यवधानेन इतरमरुदपेक्षया तयोरधिकत्वात् । प्राणादिपञ्चानां तु [५]द्विचत्वारिंशन्मरुदपेक्षया अनेकगुणतो वा एकगुणतो वा नाऽधिक्यं एकस्यामेव कक्ष्यायां [६]प्राणादिपञ्चानां द्विचत्वारिंशन्मरुतां चोक्तेः । न चैकैककक्ष्योक्तत्वात् सर्वेषां साम्यमेवेति वक्तुं युक्तम् ।

१. काणश्च - ख.　२. महानिन्द्रश्च - क., मह्यमिन्द्रश्च - ख.
३. वामज्ञो - क.　४. तत्ताहङ्कारिकप्रवहयोः - क.
५. अनादिचत्वारि - ख.　६. प्राणादीनां - क.

**'प्राणादयः पञ्च मरुत्प्रवीराः'** इत्याद्युक्तिश्चेत्युभयान्यथानुपपत्त्या एकस्य गुणस्य यः पञ्चमो दशमो वांऽशः तेनैवेतरमरुदपेक्षया [1]प्राणादिपञ्चानामाधिक्यम् । तदुक्तं बृहद्भाष्ये - (अ.३.५ P.५८३)

**देवादिष्वेव सर्वेषु प्रोक्ता अपि विशेषिणः ।**
**पञ्चांशतो दशांशाद्वा स्वस्वजात्यां परस्परम् ।।** इति ।

अस्यार्थो गणपतिप्रसङ्गे उक्तः ।

एवमेतेषां मरुतां मध्ये त्रयाणां मरुतां [2]चक्रः गन्धर्वः अन्तरिक्ष इति नामान्तराणि । तत्र चक्राद् गन्धर्वः किञ्चिदुत्तमः । तस्मादन्तरिक्षः बृहद्भाष्ये - (५.७. P.६५३)

**आपिवन्त्यखिलान् [3]भोगान् इत्यापश्चक्रवर्तिनः ।**
**मुक्तास्तेषां वायुसुतश्चक्रो नाम व्यपाश्रयः ।।**
**मुक्तस्तस्य तु मुक्तस्तु मरुद्गन्धर्वनामवान् ।**
**सुतो वासुस्तत्सुखानां मौक्तानामन्तरिक्षगः ।**
**मरुतामेक एवासौ अन्तरिक्षश्च वायुजः ।।** इति ।

गन्धर्वान्तरिक्षनामकयोर्मरुतोश्चक्रगन्धर्वाश्रयत्वाभिधानात् । त्रयाणामपि मरुत्त्वं [4]वायुसुतत्वाभिधानात् । गन्धर्वान्तरिक्षनामकयोः कण्ठरवेण मरुत्त्वाभिधानाच्च ज्ञातव्यम् ।

ननु [5]मरुत्सु आहङ्कारिकः प्राणः प्राणादिपञ्चकस्य दासप्राणश्चेति द्वौ प्राणौ परिगणितौ । तत्र किं प्रमाणमिति चेत्, **विष्णुरहस्यमेवेति ब्रूमः** । तदुक्तं -

---

१. प्राणाधिक्यं - क. २. वक्रः - ख. ३. भोज्यान् - क.
४. वायुत्वाभिधानात् - क., वायुसुतत्वात् - ख. ५. मर्त्येपु - क.

**प्राणोऽपानस्तथा व्यान उदानश्च समानकः ।**
**नागश्च कृकलः कूर्मो देवदत्तो धनञ्जयः ।**
**प्रवहो विवहः [1]शंयुः संवहश्च परावहः ।**
**उद्वहश्चावहः शंकुः कालः श्वासोऽनिलोऽनलः ।**
**प्रतिभः कुमुदः कान्तः शुचिः श्वेतो जितो गुरुः ।**
**संज्ञः संवर्तकः कालो दत्तः सोम्यो कपिर्जडः ।**
**[2]मण्डूकः सन्ततः सिद्धो ऋतुः कृष्णः पिकः शुकः ।**
**यतिर्भीमो हनुः पिङ्गोऽहं प्राणः कम्पनस्तथा ।**
**सप्तसप्तकसङ्ख्याकाः मरुतोऽमी प्रकीर्तिताः ।। इति ।**

एवं परावहस्यापि परावहान्तर्गतषण्मरुदपेक्षया पञ्चमांशेन दशमांशेन वाऽधिक्यं बोध्यम् । **'मरुद्गणोत्तमः पुरा'** इति भारततात्पर्यनिर्णयोक्तेः । एवमन्यत्राऽपि यत्राऽधिक्यं प्रमाणसिद्धं तत्रोक्तन्यायेन तद्घटनीयमिति ।

**(दश विश्वेदेवाः तेषां स्मृतिकालश्च)**

विश्वेदेवास्तु दश ।

**इष्टिश्राद्धे [3]क्रतुर्दक्षः सङ्कीर्त्यौ वैश्वदैविकौ ।**
**नान्दीमुखे सत्यवसू काम्ये च [4]धुरिलोचनौ ।**
**पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ ।**
**नैमित्तिके कामकालावेवं सर्वत्र कीर्तयेत् ।**

इति स्मृतौ दशानामेव विश्वेदेवानामुक्तत्वात् ।। १८ ।।

---

१. शम्भुः - क.
२. गण्डूकः - क.
३. मतिर्यक्षः - ख.
४. धूमलोचनः - क.

## *अथ एकोनविंशकक्ष्या*

**(देवास्त्रिविधाः - तात्विकदेवाः कर्मजदेवाः आजानजाश्चेति ।
ये सृष्ट्यादौ वेदप्रसिद्धनामरूपवन्तस्त एव तात्विकदेवाः ।)**

**'नवकोट्यो हि देवानाम्'**.(ब्र.सू.भा.३.४.११) इति स्मृतेर्देवा नवकोटिसङ्ख्याकाः । ते त्रिविधाः तात्विकदेवाः कर्मजदेवाः [१]आजानजदेवाश्चेति। तत्र तैत्तिरीयभाष्ये -**'ताभ्यश्च तात्त्विकादेवाः सृष्ट्यादौ देवतां गताः'**(अ.२ P.१४०) इति तात्त्विकदेवलक्षणमुक्तम् । अत्र सृष्ट्यादिपदेनाऽदिसृष्टिर्गृह्यते । आदिश्च सा सृष्टिश्चेति सृष्ट्यादिः । कडारादित्वाद् विशेषणस्य परनिपातः । देवताशब्दस्य देवत्वमर्थः । तथा चाऽदिसृष्टिकाले देवत्वं प्राप्तास्तात्विकदेवा इति लक्षणं पर्यवसितम् ।

नन्वत्र प्राप्तिर्नामोत्पत्तिर्वा, अभिव्यक्तिर्वा । नाऽद्यः देवत्वजातेः [२]स्वाभाविकत्वेनोत्पत्त्यभावात् । स्वाभाविकत्वं तु **'सुरासुरनरत्वाद्या जीवानां तु निसर्गतः'** (१८.०.) इति गीतातात्पर्यनिर्णयसिद्धम् । नान्त्यः । [३]ब्रह्मादितात्विकदेवानां वाय्वादिजन्मन्येव देवत्वस्याभिव्यक्तत्वात् । तथा चाऽदिसृष्टौ देवत्वं प्राप्ता इति लक्षणस्यासम्भव एव । उच्यते । वेदप्रसिद्धानि यानि देवानां नामानि यानि च [४]ब्रह्मादिरूपाणि तन्नामरूपवत्त्वलक्षणं देवत्वमिह देवताशब्देन विवक्षितम् । तादृशदेवत्वप्राप्तिर्नाम तदुत्पत्तिरेव । सा च ब्रह्मादिदेवेषु युज्यते ।

तत्र [५]ब्रह्मादिशब्दसङ्केतस्य तत्तद्योग्यरूपस्य चाऽदिसृष्टिकाले ईश्वरेण क्रियमाणत्वात् । तदुक्तं सूत्रभाष्ये - (ब्र.सू.भा. २.३.३०)

---

१. अज्ञानज - ख. २. स्वतोत्पत्य - ख., स्वाभाविकत्वात् - क.
३. ब्रह्मादि इति नास्ति - क. ४. यानि ब्रह्मरूपनामानि - क.
५. ब्राह्मणसङ्केतस्य - क.

**अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।**
**ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः ।।**
**वेदशब्देभ्य एवाऽदौ निर्ममे स महेश्वरः** । इति ।

तद्व्याख्यातं तत्त्वप्रकाशिकायाम् - **"स्वयम्भुवा स्वतन्त्रेण विष्णुना या वाक् वेदवाक् उत्सृष्टा उच्चारिता । तद्वेदगतशब्देभ्य एव स महेश्वरः ऋषीणां ब्रह्मादिविबुधानां नामानि निर्ममे । तान् शब्दान् तेषु सङ्केतितवान् । याश्च तेषां वेदेषूक्ता दृश्यन्त इति दृष्टयो रूपाणि तानि च तथैव निर्ममे"** इति ।

एवमेव वेदोक्तदेवसम्बन्धिनामरूपवत्त्वलक्षणदेवत्वप्राप्तिर्लक्ष्येषु सर्वदेवेषूपपद्यते । परमेश्वरेण पूर्वकल्पवदुत्तरकल्पेऽपि सर्वदेवा उत्पाद्यन्त इति **'धाता यथा पूर्वमकल्पयत्'** इत्यादिश्रुतावुच्यते । उत्पादितेषु च देवेषु परमेश्वरो [1]वेदोक्तब्रह्मादिनामानि सङ्केतितवान् । वेदोक्तरूपाणि च निर्मितवान् इत्यपि ऋषीणां नामधेयानीति स्मृतिसिद्धम् । तत्र तात्विकदेवानां नामकरणं तदुक्तरूपनिर्माणं च [2]भगवानादिसृष्टकाल एव करोतीति तात्त्विकाः सर्वेऽपि देवाः सृष्ट्यादौ देवत्वं प्राप्नुवन्ति ।

**(ब्रह्माण्डसृष्ट्यनन्तरं तन्मध्ये ये कर्मणा देवत्वमाप्नुवन्ति**
**ते कर्मदेवाः । यथा वल्यादयः ।)**

कर्मदेवास्तु ब्रह्माण्डमध्य एव वेदोक्तनामरूपवत्त्वलक्षणं देवत्वं प्राप्नुवन्ति । तेषां ब्रह्माण्डोत्पत्तेः पूर्वं स्वाभिमन्यमानस्थानाभावेन तत्र तन्नामरूपकरणायोगात् । तत्र देवत्वं [3]प्राप्तास्तात्विका इत्येवोक्ते, बल्यादिकर्मदेवेष्वतिव्याप्तिः । तत्रापि इन्द्रादिनामवत्त्वरूपदेवत्वप्राप्तेः सद्भावात् । तन्निरासार्थम् आदिसृष्टिकाल इत्युक्तम् । ते हि [4]नाऽदि-

---

१. ब्रह्मनामरूपाणि - क. २. भवादिकाले - क., भगवान् आदिरेव - ख.
३. प्राप्ता सात्वता - ख. ४. नादिकाले - क.

सृष्टिकाल इन्द्रादिनामवत्त्वरूपं देवत्वं प्राप्नुवन्ति । किन्तु द्विपरार्धात्मककालमध्यभागे ब्रह्माण्डान्तस्थस्वर्गादिलोकोत्पत्तौ सत्यां सावर्णिमन्वन्तरादौ प्राप्ते इन्द्रादिनामवत्त्वरूपं **'सावर्णेरन्तरस्यायं भवितेन्द्रो मदाश्रयः'** (भा.८.१९.३१) इत्याद्युक्तेः । अतो नोक्तलक्षणस्य कर्मजदेवेष्वतिव्याप्तिरिति । कर्मजदेवलक्षणं तु 'ये कर्मणा देवानपियन्ति' इति तैत्तिरीयश्रुतावुक्तम् । तत्र देवशब्दो भावप्रधानः । **'ये कर्मणा देवत्वमभिसम्पद्यत'** इति बृहदारण्यकानुसारात् । अपियन्तीत्यस्य प्राप्नुवन्तीत्यर्थः । तथा च ये कर्मणा देवत्वं [1]प्राप्तास्ते कर्मदेवा इति कर्मदेवलक्षणमुक्तं भवति । अस्ति चैतल्लक्षणं लक्ष्ये । बल्यादयो हि ये कर्मजदेवास्तत्र बलेर्वामनाय भूदानकर्मणा इन्द्रपदरूपदेवत्वप्राप्तेः प्रसिद्धत्वात् । एवमन्येष्वपि कर्मजदेवलक्षणं स्वयमूह्यम् ।

ननु बलेर्भूदानकर्मणा न देवत्वप्राप्तिः । **'ऐन्द्रं पदं तस्य नैव फलं फलं तु हरितोषणम्'** इति । **'जगद्दातुर्बलेर्यस्मादानन्दोद्रिक्तता भवेत्'** इति प्रमाणविरोधादिति चेत्, तस्य जगद्दातुर्बलेरैन्द्रं पदं दानफलं न भवति किन्तु आनन्दोद्रेकोऽपि भवतीत्यर्थः । अन्यथा **'गुणदोषाधिकाल्पत्वादत्रस्थमपि च श्रुतम्'** (३२.७५) इति भारततात्पर्यनिर्णयविरोधात् । तत्र ज्ञानोत्तरकृतमहापुण्येन [2]मुक्तावानन्दोद्रेको भवति मुक्तेः प्रागपि महाफलं भवतीति प्रतिपादितत्वात् इति ।

**('गुणदोषाधिकाल्पत्वादत्रस्थमपि च श्रुतम्' इति तात्पर्यनिर्णयश्लोकाशयाविष्करणम्)**

**'गुणदोषाधिकाल्पत्वादत्रस्थमपि च श्रुतम्'** इति वाक्यस्यायमर्थः - गुणपदं शुभकर्मपरम् । दोषपदं चाशुभकर्मपरम् । गुणदोषयो-

१. प्राप्याः - क. २. मौक्तानन्दे मुक्तेः - क., मुक्ताविति नास्ति - ख.

रधिकाल्पत्वमिति षष्ठीतत्पुरुषः । **अत्रस्थमपीति** । जीवन्मुक्त्यवस्थायां जायमानं फलमित्यर्थः । अपिपदेन तारतम्यं विमुक्तिगमित्यस्यानुकर्षः। मौक्तानन्दवृद्धिह्रासाख्यफलमिति तदर्थः । तदयं भावः । ज्ञानोत्तरकृतमहाशुभकर्मणा मुक्तावानन्दवृद्धिः । ततः प्राक् जीवन्मुक्त्यवस्थायां स्वर्गादिफलमपि भवति । एवं ज्ञानोत्तरकृताल्पशुभकर्मणा मुक्तावल्पानन्दवृद्धिः । ततः प्रागपि किञ्चित्फलं भवति । एवं ज्ञानोत्तरकृतमहाविकर्मणा मुक्तौ महानन्दह्रासः । ततः प्रागपि महादुःखं भवति। तथा ज्ञानोत्तर[1]कृताल्पविकर्मणा मुक्तौ अल्प एवाऽनन्दह्रासः । ततः प्रागपि किञ्चिद्दुःखमिति । ततश्च बलेर्वामनाय भूदानेनैन्द्रं पदं भवतीत्यङ्गीकारे नोक्तप्रमाणविरोधः ।

**(कर्मजदेवलक्षणस्य तत्त्वदेवेष्वतिव्याप्तिशङ्कापरिहारौ)**

ननु तथाऽप्युक्तलक्षणस्य तत्त्वदेवेष्वतिव्याप्तिः । तत्त्वप्रकाशिकायां विद्याकर्मभ्यां योग्यमनुष्याणामेव देवादित्वप्राप्तिरित्युपपादितत्वेन तत्त्वदेवाना[2]मपि कर्मणा देवत्वप्राप्तेः सद्भावादिति चेत्, तत्र कर्मपदेन नित्यनैमित्तिककर्मग्रहणम् । अत्र [3]पुनर्नित्यनैमित्तिकान्यमहापुण्यमेव कर्मशब्देन विवक्षितम्। कर्मदेवे बलिचक्रवर्तिनि [4]नित्यनैमित्तिकान्यसत्कर्मणैव देवत्वप्राप्तेर्दृष्टत्वात् । दृष्टानुसारिणी हि कल्पनेति न्यायात्। एवं च न तत्त्वदेवेष्वतिव्याप्तिः । तेषां नित्यनैमित्तिकान्यकर्मणा देवत्वप्राप्तेरभावात्।

ननु तथाऽपि विरिञ्चेऽतिव्याप्तिः । तस्याऽपि राजसूययागेन ब्रह्मयोग्यनामरूपवत्त्वलक्षणपरमेष्ठिपदप्राप्तेः । तदुक्तं (म.ता.नि. २१.८२.)

---

१. कृताशुभ - क.    २. मिव - ख.
३. पुनर्नित्यान्यपुण्य - ख.    ४. नित्यकर्मणैव - ख.

**क्रतुर्यथा विधानतः कृतो हि पारमेष्ठ्यकम् ।**
**पदं नयेत तत्पदे सुयोग्यमेव नान्यथा ।।** इति ।

एवं रुद्रादिष्वतिव्याप्तिः । **'विष्णोरेषस्य प्रभृथे हविर्भिः । विधेहि रुद्रो रुद्रियं महित्वं यासिप्टं वर्तिरश्विनाविरावत्'** इति श्रुतौ रुद्रादेपि यागरूपमहापुण्यकर्मणा रुद्रादियोग्यनामरूपवत्त्वरूपरुद्रादिपदप्राप्तेः सूचितत्वात्। अतः कथं **'ये कर्मणा देवानपियन्ति'** इति श्रुतौ लक्षण-मुक्तमित्याशङ्क्य ([1]पङ्कज)पदवत् कर्मदेवपदमपि योगरूढम् । रूढ्या च कर्मदेवपदस्य योगेन तत्त्वदेवे प्रयोगः स्यादित्यतिप्रसङ्गनिरास इति दर्शयितुं श्रुतौ कर्मजदेवशब्दप्रवृत्तिनिमित्तमुक्तम् । न तु लक्षणमिति भावेन । **'बल्याद्या अन्तरा प्राप्तदेवता कर्मदेवताः'** इति तैत्तिरीयभाष्ये (२.२०. P.१४०) कर्मजदेवलक्षणमुक्तम् । तद्भाष्यस्यायमर्थः - अन्तरेत्यस्य मध्य इत्यर्थः । योग्यतया ब्रह्माण्डमध्य इति लभ्यते । देवताशब्दः, पूर्ववदेव वेदोक्तदेवयोग्यनामरूपलक्षणदेवत्वं प्राप्ताः प्राप्त-देवताः । प्राप्तापन्ने च द्वितीयेति द्वितीयासमासः। [2]अन्तरेत्येव तदव-धारणगर्भं विशेषणोपादानसामर्थ्यात् । तथा च ब्रह्माण्डमध्य एव य उक्तरूपदेवत्वं प्राप्ता न तु तस्माद् बहिस्ते कर्मदेवा इति कर्मजदेवलक्षणं पर्यवसितम् । एतच्च लक्ष्येषु सुप्रसिद्धमिति प्रदर्शनाय बल्याद्या इत्यु-क्तम् । बल्यादयो हि ब्रह्माण्डमध्य एव निरुक्तदेवत्वं प्राप्ता न तु तस्माद् बहिरिति प्रसिद्धमेवेति लक्ष्ये लक्षणसमन्वयः । अलक्ष्येषु तु विरिञ्चादितत्वदेवेष्विदं लक्षणं नास्ति। तेषां ब्रह्माण्डाद् बहिरेव देव-योग्यनामरूपवत्वात्मकदेवत्वप्राप्तेः ।

एतेन ब्रह्माण्डमध्ये विरिञ्चेन सत्यलोकाधिपतिदेवत्वं प्राप्तम् । एवं वायु-धर्म-नासत्य-दस्र-पुरन्दरैः ब्रह्माण्डमध्ये इन्द्रत्वरूपदेवत्वं

---

१. पञ्चम - ख., पञ्चकवत् - क.   २. अन्यदैव - क.

प्राप्तमिति विरिञ्चवाय्वादितत्वदेवेषु उक्तलक्षणस्यातिव्याप्तिरिति परास्तम् । ब्रह्माण्डमध्य एवेत्यवधारणेन तद्व्यवच्छेदात् । तथा हि - विरिञ्चादयः सर्वेऽपि तत्त्वदेवा ब्रह्माण्डाद् [1]बहिर्देवयोग्यनाम-रूपवत्त्वलक्षणदेवत्वं प्राप्यैव पुनर्ब्रह्माण्डमध्येऽपि सत्यलोकाधिपतित्वादि-रूपदेवयोग्यनामरूपात्मकदेवत्वं प्राप्ता न ब्रह्माण्डमध्य एवेति कथं तत्रोक्तलक्षणस्य अतिव्याप्तिरिति दिक् ।

(अनाख्याताः देवकुले जाताः आजानजदेवाः)

**आजानजदेवतास्वरूपं** तु **'अनाख्याता देवता हि जाता देवकुले च याः । आजानदेवतास्ता हि'** इति तैत्तिरीयभाष्य एवोक्तम् । तदुपपादनं चाऽजानजदेवताप्रकरणे करिष्यामः । तत्र तात्त्विकदेवानां तत्समानानां च परस्परं तारतम्यम् उक्तशेषा शतस्थदेवाश्च इत्यन्तेन प्रबन्धेनोक्तम्।

**(एकोनविंशतिकक्ष्यास्थकर्मजदेवा एवमनुसन्धेयाः । स्वारोचिष-उत्तम-रैवत-चाक्षुष-सावर्णि-रुद्रसावर्णि-इन्द्रसावर्णि-दक्षसावर्णि-ब्रह्मसावर्णि-देवसावर्णि-धर्मसावर्णिनामानः एकादश मनवः कर्मज-देवकक्ष्यास्थाः । सनक-सनन्दन-सनातनाभिधाः ब्रह्मपुत्राः च्यवनोच-थ्यादयः नवतिसङ्ख्याकाः ऋषयः, पृथुः दौष्यन्तिर्भरतः-मान्धाता-ककुत्स्थः-परीक्षित्-जनकः कार्तवीर्यः-शशबिन्दुः-प्रियव्रतः-गयः-आर्षभो भरतः एवमादयो शतसङ्ख्याका राजर्षयः, बलिः-अद्भुतः शम्भुः-विधृतिः-ऋतधामा-दिवस्पतिः-शुचिः इतिनामानः सप्तेन्द्राः, प्रह्लादः-अनुह्लादः-सह्लादः-विभीषणः बाणः इत्येवमाद्या औपाधिक-दैत्ययोनयः कर्मजदेवकक्ष्यानिविष्टाः ।**

---

१. ब्राह्मे देव - क., ब्राह्मयोग्य - क.

**एवमेव धूममार्गस्थाः देवाः, प्रवहव्यतिरिक्ता अर्चिरादिमार्गस्थाः देवाः, प्रधानाग्निपुत्रः पावकः, मरीचिः (कलादेवौ), ध्रुवः, चित्रगुप्तः, विश्वकर्मा, जयन्तः (यज्ञः) मङ्गल-बुध-शुक्र-शनि-राहु-केतवः ग्रहदेवताः, जय-विजय-वप्तृ-मालाकराद्या विष्णुपार्षदा अत्रैव कक्ष्यायां विचिन्त्याः ।**

**एवं काल-दिक्-भूतवाय्ववान्तराभिमानी - (मरीचिः) अन्तरिक्षनामा विघ्नेशपुत्रः-पर्वत-नदी-ओषधि-सिकत-कूप-सर हविः-कपाल-यूपाद्यभिमानिनस्तत्तन्नामानो देवाः, त्वक्-चर्म-रोमाभिमानिनः पारिजातादिवृक्षाभिमानिनः देवाः, दिगभिमानिन्यः अबभिमानिन्यश्च स्त्रियः (देव्यः) पितॄणां सप्तकम्, तुम्बुर्वादयोऽष्टौ गन्धर्वाः, ऊर्वशी-पूर्वचित्ति-सहजन्या-मेनका-विश्वाचीघृताचीसंज्ञकाः षडप्सरसः कर्मज-देवकक्ष्यानिविष्टाः अमी प्राक्तनकक्ष्यास्थेभ्यः किञ्चिदवराः ।)**

इदानीं कर्मदेवानां तत्समानानां च तैत्तिरीयादिप्रमाणसिद्धं तारतम्यं सूचयितुं कर्मदेवान् तत्समानांश्चाऽह **उक्तेतरान्य इत्यादिना प्रियादिव्रत इत्यन्तेन ।** अत्र कक्ष्यायां केचन तत्त्वदेवाः सर्वेऽपि कर्मदेवाः तत्समान-देवाश्च ग्राह्याः । अतस्तावदेतदनुगतं [1]सङ्ग्राह्यतावच्छेदकं सूचयितुमुक्तेतरान्य इत्युक्तम् । तत्रोक्तशब्देन विष्वाद्या शेषशतस्थान्ता ग्राह्याः । इतरशब्देन च वक्ष्यमाणाः ये पर्जन्यादयः ये च प्रमाणान्तरसिद्धा आजानजदेवास्ते सर्वेऽपि ग्राह्याः । उक्ताश्च इतरे च उक्तेतरेभ्यः अन्ये उक्तेतरान्य इति विग्रहः । देवा इत्यनुवर्तनीयम् । [2]तेनोक्ततरान्यपदेनैव एकादशमनुच्यावनादिलाभात् तदवरमनव इत्यादिना पुनस्तद्ग्रहणं व्यर्थमिति परास्तम् । शेषशतस्थान्तदेवव्यावृत्त्यै उक्तान्य इति

१. सङ्ग्रहच्छेदकं - क., सङ्ग्रह्यकम्

२. तेनोन्यपदेन - ख., तेनोक्तमान्यपदेनैव - क.

विशेषणम् । पर्जन्याद्याजानजान्तदेवा भिन्नाश्च ये नवकोट्यन्तर्गतास्ते सर्वेऽपि इतरान्य इत्यत्र ग्राह्याः । शतस्थान्तोक्तदेवान्यत्वे सति पर्जन्याद्याजानदेवान्तदेवान्यत्वे च सति देवत्वं कर्मजकक्ष्योक्तदेवानां सङ्ग्राह्यतावच्छेदकमिति सूचितम् । ते च देवास्तत्वदेवानां मध्ये जयन्तादयः केचित्प्रह्लादादिदेवाः सर्वे कर्मदेवाश्चेति बोध्यम् । एतेषां देवानां शेषशतस्थान्तदेवाधमत्वे पर्जन्योत्तमत्वे च **'तदन्ये तु ततोऽवराः'** इत्यनुव्याख्यानं मानम् । तद्विवृतं सुधायां - **"तदन्ये उक्तेभ्योऽन्ये देवाः ततः शतान्तर्गतदेवताभ्योऽवराः अवरमनुसमाना इत्यर्थः"** इति ।

अत्र उक्तेभ्य इत्यस्य [1]ब्रह्मादिशेषशतस्थान्तदेवेभ्य इत्यर्थः । **'तदन्याः शतदेवताः । पर्जन्यमित्रान्तराल'** इति पूर्ववाक्ये मित्रपर्जन्यौ उक्तान्यशतदेवताश्च प्रकृताः । तत्र तत इत्यनेन न मित्रपरामर्शः । तदधमत्वस्यापि तत्र बाधितत्वात् । किन्तु प्राधान्येन प्रकृतत्वात् शेषशतस्थदेवानामेव परामर्श इति भावेन तत इत्येतत् शतान्तर्गतदेवताभ्य इति व्याख्यातम् । शतान्तर्गतदेवावरत्वं च न परम्परया । किन्तु साक्षादेवेति भावेन [2]**अवरमनुसमाना** इत्युक्तम् । स्वायम्भुव-तापस-वैवस्वतापेक्षया अवरा एकादशमनवस्तत्समाना इत्यर्थः । तेन यथा अवरमनवो अश्विपश्चात्तनाः पर्जन्यादुत्तमास्तथोक्तेतरदेवा अपि अश्विसमानशतस्थदेवाधमाः पर्जन्यादुत्तमाश्चेति सुधाबलाल्लब्धम् । ततश्चोक्तान्यत्वे सति [3]पर्जन्याद्याजानजान्तदेवान्यत्वे च सति देवत्वरूपसङ्ग्राह्यतावच्छेदकसङ्गृहीतानामेव देवाना**मनुव्याख्याने** उक्तत्वान्न कश्चित् क्षुद्रोपद्रवः ।

अथोक्तेतरान्य इत्यनेन ग्राह्यदेवाः प्रदर्श्यन्ते । **'पादौ तु विष्णुनाविष्टौ यज्ञशम्भू शचीसुतौ'** इति गीतातात्पर्यनिर्णयोक्तौ पादाख्यतत्वाभिमानिनौ

---

१. ब्रह्मशतान्त - ख.        २. अवनिमनु - क.        ३. पर्जन्यान्त - ख.

**एवमेव धूममार्गस्थाः देवाः, प्रवहव्यतिरिक्ता अर्चिरादिमार्गस्थाः देवाः, प्रधानाग्निपुत्रः पावकः, मरीचिः (कलादेवौ), ध्रुवः, चित्रगुप्तः, विश्वकर्मा, जयन्तः (यज्ञः) मङ्गल-बुध-शुक्र-शनि-राहु-केतवः ग्रहदेवताः, जय-विजय-वप्तृ-मालाकराद्या विष्णुपार्षदा अत्रैव कक्ष्यायां विचिन्त्याः ।**

**एवं काल-दिक्-भूतवाय्ववान्तराभिमानी - (मरीचिः) अन्त-रिक्षनामा विघ्नेशपुत्रः-पर्वत-नदी-ओषधि-सिकत-कूप-सर हविः-कपाल-यूपाद्यभिमानिनस्तत्तन्नामानो देवाः, त्वक्-चर्म-रोमाभिमानिनः पारिजातादिवृक्षाभिमानिनः देवाः, दिगभिमानिन्यः अबभिमानिन्यश्च स्त्रियः (देव्यः) पितॄणां सप्तकम्, तुम्बुर्वादयोऽष्टौ गन्धर्वाः, ऊर्वशी-पूर्वचित्ति-सहजन्या-मेनका-विश्वाचीघृताचीसंज्ञकाः षडप्सरसः कर्मज-देवकक्ष्यानिविष्टाः अमी प्राक्तनकक्ष्यास्थेभ्यः किञ्चिदवराः ।)**

इदानीं कर्मदेवानां तत्समानानां च तैत्तिरीयादिप्रमाणसिद्धं तारतम्यं सूचयितुं कर्मदेवान् तत्समानांश्चाऽह **उक्तेतरान्य इत्यादिना प्रियादिव्रत इत्यन्तेन** । अत्र कक्ष्यायां केचन तत्त्वदेवाः सर्वेऽपि कर्मदेवाः तत्समान-देवाश्च ग्राह्याः । अतस्तावदेतदनुगतं [१]सङ्ग्राह्यतावच्छेदकं सूचयितु-मुक्तेतरान्य इत्युक्तम् । तत्रोक्तशब्देन विष्ण्वाद्या शेषशतस्थान्ता ग्राह्याः । इतरशब्देन च वक्ष्यमाणाः ये पर्जन्यादयः ये च प्रमाणान्तरसिद्धा आजानजदेवास्ते सर्वेऽपि ग्राह्याः । उक्ताश्च इतरे च उक्तेतरेभ्यः अन्ये उक्तेतरान्य इति विग्रहः । देवा इत्यनुवर्तनीयम् । [२]तेनोक्ततरा-न्यपदेनैव एकादशमनुच्यावनादिलाभात् तदवरमनव इत्यादिना पुनस्तद्-ग्रहणं व्यर्थमिति परास्तम् । शेषशतस्थान्तदेवव्यावृत्त्यै उक्तान्य इति

१. सङ्ग्रहच्छेदकं - क., सङ्ग्रह्यकम्
२. तेनोन्यपदेन - ख., तेनोत्तमान्यपदेनैव - क.

**विशेषणम्** । पर्जन्याद्याजानजान्तदेवा भिन्नाश्च ये नवकोट्यन्तर्गतास्ते सर्वेऽपि इतरान्य इत्यत्र ग्राह्याः । शतस्थान्तोक्तदेवान्यत्वे सति पर्जन्याद्याजानदेवान्तदेवान्यत्वे च सति देवत्वं कर्मजकक्ष्योक्तदेवानां सङ्ग्राह्यतावच्छेदकमिति सूचितम् । ते च देवास्तत्वदेवानां मध्ये जयन्तादयः केचित्प्रह्लादादिदेवाः सर्वे कर्मदेवाश्चेति बोध्यम् । एतेषां देवानां शेषशतस्थान्तदेवाधमत्वे पर्जन्योत्तमत्वे च **'तदन्ये तु ततोऽवराः'** इत्यनुव्याख्यानं मानम् । तद्विवृतं सुधायां - **"तदन्ये उक्तेभ्योऽन्ये देवाः ततः शतान्तर्गतदेवताभ्योऽवराः अवरमनुसमाना इत्यर्थः"** इति ।

अत्र उक्तेभ्य इत्यस्य [1]ब्रह्मादिशेषशतस्थान्तदेवेभ्य इत्यर्थः । **'तदन्याः शतदेवताः । पर्जन्यमित्रान्तराल'** इति पूर्ववाक्ये मित्रपर्जन्यौ उक्तान्यशतदेवताश्च प्रकृताः । तत्र तत इत्यनेन न मित्रपरामर्शः । तदधमत्वस्यापि तत्र बाधितत्वात् । किन्तु प्राधान्येन प्रकृतत्वात् शेषशतस्थदेवानामेव परामर्श इति भावेन तत इत्येतत् शतान्तर्गतदेवताभ्य इति व्याख्यातम् । शतान्तर्गतदेवावरत्वं च न परम्परया । किन्तु साक्षादेवेति भावेन [2]**अवरमनुसमाना** इत्युक्तम् । स्वायम्भुव-तापस-वैवस्वतापेक्षया अवरा एकादशमनवस्तत्समाना इत्यर्थः । तेन यथा अवरमनवो अश्विपश्चात्तनाः पर्जन्यादुत्तमास्तथोक्तेतरदेवा अपि अश्विसमानशतस्थदेवाधमाः पर्जन्यादुत्तमाश्चेति सुधाबलाल्लब्धम् । ततश्चोक्तान्यत्वे सति [3]पर्जन्याद्याजानजान्तदेवान्यत्वे च सति देवत्वरूपसङ्ग्राह्यतावच्छेदकसङ्गृहीतानामेव देवाना**मनुव्याख्याने** उक्तत्वान्न कश्चित् क्षुद्रोपद्रवः ।

अथोक्तेतरान्य इत्यनेन ग्राह्यदेवाः प्रदर्श्यन्ते । **'पादौ तु विष्णुनाविष्टौ यज्ञशम्भू शचीसुतौ'** इति गीतातात्पर्यनिर्णयोक्तौ पादाख्यतत्वाभिमानिनौ

---

१. ब्रह्मशतान्त - ख. २. अवनिमनु - क. ३. पर्जन्यान्त - ख.

यज्ञशम्भू तावदत्र ग्राह्यौ । तयोस्तत्वाभिमानित्वेऽपि प्रागनुक्तत्वेन उक्तान्यत्वात् पर्जन्यादिवक्ष्यमाणदेवान्यत्वाद् देवत्वाच्च । पादाभिमानी च जयन्तस्तु यज्ञ एव । बृहद्भाष्ये - **'यज्ञनामेन्द्रपुत्रस्तु जयन्त इति कीर्तितः'** इति चोच्यत इत्युक्तेरिति बोध्यम् । एवं कर्मदेवा अप्यत्र ग्राह्याः । उक्तान्यत्वाद् वक्ष्यमाणपर्जन्यान्यत्वाद् देवत्वाच्च ।

ननु के ते कर्मदेवा इति चेत्, बल्याद्यांस्तावत् [1]सप्तेन्द्रास्तावत् कर्मदेवाः । तैत्तिरीयभाष्ये तथोक्तत्वात् । तत्र कर्मदेवलक्षणस्योपपादितत्वाच्च । ननु के ते बल्याद्याः? उच्यते -

**इन्द्राश्चतुर्दश ज्ञेयाः यज्ञोऽथो रोचनस्तथा ।**
**सत्यजित् त्रिशिखविभू [2]मन्द्रद्युम्नपुरन्दरौ ।।**
**बलिरद्भुतशम्भू च विधृतत्स्वृतनामकः ।**
**दिवस्पतिः शुचिश्च ...................... ।।**

इत्यागमानुसारेण इन्द्राश्चतुर्दश । तत्र यज्ञो विष्णुः । [3]रोचनो वायुः । सत्यजिद्यमः । [4]त्रिशिखविभू अश्विनौ । मन्द्रद्युम्नः पुरन्दरश्च शचीपतिरेव । अत्र सर्वत्र -

**पूर्वेन्द्रोऽसौ यज्ञनामा रमेशः**
**स वै कृष्णो वायुरथ द्वितीयः ।।**
**स भीमसेनो धर्म आसीत् तृतीयः**
**युधिष्ठिरोऽसावथ नासत्यदस्रौ**
**क्रमात् तावेतौ माद्रवतीसुतौ हि ।**

---

१. समेन्द्रा - क. २. मन्द्रमन्त्र - ख.
३. रचनो - क. ४. त्रिदिव - ख.

**पुरन्दरः षष्ठ उतात्र सप्तमः**

**स एवैकः फल्गुनो ह्येत इन्द्राः ।।** (म.भा.नि. १२.१३४-३५)

इति भारततात्पर्यनिर्णयोक्तिर्मानम्। बलिः प्रह्लादपौत्रः। अत्र पुरन्दरादीन्द्रा न कर्मदेवास्तेषां ब्रह्माण्डमध्य एवेत्याद्युक्त [1]कर्मदेवलक्षणाभावात् । किन्तु तत्सद्भावाद् बल्याद्या एव कर्मदेवा इति बोध्यम् ।

एवं पितृयानमार्गस्थाः सर्वे धूमादिदेवाः देवयानमार्गस्थाः प्रवहादिव्यतिरिक्ताः सर्वेऽप्यर्चिरादिदेवाश्च कर्मदेवाः । तत्रोक्तलक्षणसद्भावात् । तथा हि -

**जडलोकास्तदभिमानिदेवाश्च धूमार्चिरादिनामकाः ।**
**स ऐच्छद् भगवान् विष्णुः स्रष्टुं लोकाभिमानिनः ।**
**लोकाभिधानवद्देवान् जडलोकांश्च शाश्वत ।** (ऐ.२.३. P.२५५)

इत्यैतरेयभाष्यबलेनोक्तार्थावगमात् । तत्र तत्तल्लोकनामवाच्याः सर्वेऽपि [2]धूमार्चिरादिदेवाः ब्रह्माण्डाद् बहिः स्वस्वाभिमतलोकोत्पत्त्यभावेन वेदोक्ततत्तन्नामवत्त्वं वेदोक्ततत्तद्योग्यरूपवत्त्वं च न प्राप्ताः । किन्तु ब्रह्माण्डान्तरेव धूमादि[3]लोकोत्पत्त्या [4]पूर्वकल्पीयधूमार्चिरादिलोकपालसदृशनामवत्त्वं तत्सदृशरूपवत्त्वं च प्राप्नुवन्ति । **'देवानां नामधेयानि याश्च वेदेषु दृष्टयः। वेदशब्देभ्य एवाऽदौ निर्ममे स महेश्वरः'** । इति भाष्योक्तस्मृतेः । अतो ब्रह्माण्डमध्य एवेत्याद्युक्तकर्मदेवलक्षणं तेषामस्तीति ।

अथ धूमादिदेवाः अर्चिरादिदेवाश्च प्रदर्श्यन्ते **'धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्'** इत्यत्र **'धूमो भूत्वाऽभ्रं भवति । अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति'** इत्यत्र चोक्ताः पितृयानमार्गस्थाः

---

१. लक्षणाभावात् - क.    २. धूमदिदेवा - ख., धूम्रावर - क.
३. काल - क.    ४. पूर्वकल्पे समाने - क.

देवाः धूमादिदेवाः ।

**उत्क्रान्तस्तु शरीरात् स्वाद् गच्छन्त्यर्चिषमेव तु ।**
**ततो हि वायोः पुत्रं च योऽसौ नाम्नाऽतिवाहकः ।।**
**ततोऽहः पूर्वपक्षं चाप्युदक् संवत्सरं तथा ।**
**तटितं वरुणं चैव प्रजापं सूर्यमेव च ।।**
**सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा ।।** (ब्र.सू.भा.४.३.५)

इत्यत्र [1]अहरभिजिता शुक्लं पौर्णमास्यायनं विषुवा सहेत्यत्र चोक्ता देवयानमार्गस्था देवा अर्चिरादिदेवाः । तत्रार्चिःशब्देन प्रधानाग्नेर्ज्येष्ठ-पुत्रो ग्राह्यः ।

**अग्निर्ज्योतिरिति द्वेधैवार्चिषः सम्प्रतिष्ठितिः ।**
**अग्निं गत्वा ज्योतिरेति प्रथमं ब्रह्म संव्रजन् ।।**
**एकस्मिंस्तु पुरे संस्थो द्विरूपोऽग्नेः सुतो महान् ।।**

इति सूत्रभाष्यबलेन (४.३.१) प्रधानाग्नेर्ज्येष्ठपुत्रस्यार्चिर्नामकत्वावगमात्। स एव च पावकसञ्ज्ञकः । तस्मादग्निः **'पावकाख्यः प्रथमोऽग्नेः सुतः'** इति षट्प्रश्नभाष्ये अग्निज्येष्ठपुत्रस्य पावकसञ्ज्ञकत्वाभिधानात् । **आतिवाहकवायुस्तु प्रवहः ।**

अत्र प्रवहाद्या न कर्मदेवाः । तेषां ब्रह्माण्डमध्य एव देवत्वं प्राप्ता इत्युक्तकर्मदेवलक्षणाभावात् । किन्तु **'गच्छत्यर्चिषमेव तु । ततोऽहः पूर्वपक्षं चाप्युदक् संवत्सरं तथा । तटितम्'** (ब्र.सू.भा.४.३.५) इत्य-न्तेनोक्ता अर्चिराद्या तटिदन्ता **देवा ध्रुवं देवी**मित्युक्तो ध्रुवः [2]**अहरभिजि-तेत्यत्रो**क्तः अभिजित् पौर्णमासीविषुवदेवाश्च कर्मदेवाः ।

---

१. अर्हाजितं - क.   २. अहरभिहिता - ख.

तेषामर्चिरादिलोकपालदेवत्वेनोक्तकर्मदेव[1]लक्षणवत्त्वात् । लक्षणोपपादनं तु प्रागेव कृतम्। अत्र पौर्णमासीग्रहणेन **'माताऽस्य देवीति च रौहिणेयी भीमा प्रियाऽसीद्या पुरा सैव राका'** (म.ता.नि.) इत्युक्ता राकाऽपि सङ्गृहीता । **'पूर्णे राका निशाकरः'** इत्युक्तेः । [2]पूर्णेन्दुयुक्तपौर्णमास्या एव राकात्वात् । एवं षोडशकलादेवतासु मध्ये केचिद्देवाः कला नाम [3]सजीवस्य शरीरस्य भागाः। तद्देवाश्च षट्प्रश्नभाष्ये उक्ताः (षट्प्रश्न. ६.प्र) -

**विष्णोः प्राणस्ततः श्रद्धा तस्या रुद्रो मनोऽभिधः ।**
**तस्मादिन्द्रस्त्विन्द्रियात्मा तस्य सोमोऽन्नदेवता ।**
**ततस्तु वरुणः सृष्टः तस्मादग्निस्ततोऽवरः ।**
**आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत् ।**
**तस्मादग्निः पावकाख्यः प्रथमोऽग्नेः सुतस्ततः ।**
**ततः पर्जन्य उद्भूतः स्वाहातो मन्त्रदेवता ।**
**उदात्मको बुधस्तस्या उषा नामत्मिका ततः ।**
**ततः शनिः पृथिव्यात्मा कर्मात्मा पुष्करस्ततः ।।** इति ।

तत्र मुख्यप्राणाद्या विघ्नेशान्ताः [4]कलादेवाः न कर्मदेवाः । ब्रह्माण्डमध्य एव देवत्वं प्राप्ता इत्युक्तकर्मदेवलक्षणाभावात् । किन्तु तत्सद्भावान्मरीच्यादिपुष्करान्तकलादेवाः एव कर्मदेवाः । कलादेवानां [5]ब्रह्माण्डान्तः पाञ्चभौतिकशरीरे कलोत्पत्त्यनन्तरमेव [6]पूर्वकल्पीयकलादेवसमाननामरूपत्वरूपदेवत्वप्राप्तेः। **'ऋषीणां नामधेयानि'** इत्युक्तिसिद्धत्वात्। तेन [7]कर्मदेवलक्षणोपपादनं तत्र कर्तव्यम् ।

---

१. लक्षणाभावात् - क. २. पूर्णापौर्णमास्या - ख.
३. साजातस्य - क. ४. काल
५. ब्राह्मणान्तः - ख. ६. पूर्वकल्पे समाने - क.
७. कर्मदेवलक्षण - क.

अथ मरीच्यादय उच्यन्ते । मरीचिः पावकः पर्जन्यः स्वाहा बुधः उषा शनिः पुष्कर इति । तत्र **'ततो वायोः सुतो मरुत्'** इति षट्-प्रश्नभाष्ये मरुत्पदेन [१]मरीचिदेवो ग्राह्य इति गणपतिप्रकरणे उपपादितम्। **स च [२]मरीचिर्भूतवायुकलाभिमानी** ।

**(मरीचिनामकदेवतैव नास्तीति शङ्कापरिहारौ)**

ननु मरीचिर्भूतवायुकलाभिमानीति । अत्राऽहुः **'प्रधानवायुजो भूतवायुर्नाम्ना मरीचिकः'** इति गीतातात्पर्यनिर्णये मरीचिनामा प्रधान-वायुपुत्रः भूतवायुशब्दवाच्य इति तावत् प्रतिपाद्यते । **'वातीति वायुः'** इति तट्टीकायां वायुशब्दनिर्वचनात् ।

किञ्च **'महाभूतानि'** इत्यादिगीतोक्ताहङ्कारादिशब्दानां देवता-वाचित्वं प्रमाणेन दर्शयति । अव्यक्तमिति वाक्येन गीतातात्पर्यटीकायां **'महाभूतानि'** इत्यादिगीतोक्तशब्दानां [३]देवतावाचित्वप्रतिज्ञानाच्च अत्र नाम्ना मरीचिकः प्रधानवायुजो [४]देवविशेषः भूतवायुशब्दवाच्य इत्येवार्थोऽङ्गीकार्यः। ततश्च मरीचिनामकदेवविशेषसिद्धिः । अन्यथा तस्य भूतवायुशब्दवाच्यत्वप्रतिपादनाऽयोगादिति ।

एवं तस्य भूतवायुदेवतात्वमपि सिध्यति । तथाहि - अस्मिन् प्रकरणे [५]तत्तदभिमानिदेवतानामेव तत्तच्छब्दवाच्यत्वमुच्यते । अतो मरीचेरपि भूतवायुदेवतात्वेन [६]भूतवायुशब्दवाच्यत्वमभिमान्यधिकरण-न्यायेनोच्यत इत्यङ्गीकारे ततश्च मरीचिनामकः देवविशेषः भूतवायो-रभिमानी कश्चिदस्तीति सिद्धम् ।

---

१. महीदेवो - ख. २. मरीचिरिति नास्ति - क.
३. देवत्वात् प्रतिज्ञानाच्च - ख. ४. दैवेशः - क.
५. तत्त्वाभिमानि - क. ६. भूतेति नास्ति - क.

ननु **'प्रधानवायुजो भूतवायुः'** इत्यनूद्य नाम्ना मरीचिक इति विधीयते । तथा च प्रवहाख्यभूतवायोः मरीचिनामवत्त्वमेवानेन वाक्येन सिद्ध्यति । न त्वतिरिक्तो देवविशेषस्तस्य भूतवाय्वभिमानित्वं वेति चेन्न । तथा व्याख्याने प्रकरणविरोधात् । अत्र प्रकरणे [1]तत्तदभिमानिदेवतानां तत्तच्छब्दवाच्यत्वप्रतिपादनात् ।

न च **'भूतवायुर्नाम्ना मरीचिकः'** इति [2]उद्देश्यविधेयभावेन व्याख्याने कृते [3]अभिमानिदेवताया अभिमन्यमानवाचकशब्दवाच्यत्वं लभ्यते । मरीचेरभिमन्यमानत्वाभावात् ।

किञ्च **'महाभूतानि'** इत्यादिगीतायां मरीचिशब्दो नास्ति । अतः कथं भूतवायोर्मरीचिर्नामवाच्यत्वविधानं प्रकरणसङ्गतं स्यात् । अस्मिन् [4]प्रमाणे **'महाभूतानि'** इति वाक्योक्तानामेव शब्दानामभिमानिदेवतावाचित्वप्रतिपादनात् ।

किञ्च भूतवायोर्मरीचिनामत्वविधानमसङ्गतम्। मरीचिनामवाच्यः क इत्याकाङ्क्षाभावात् । अतो मरीचिनामको देवः भूतवायुशब्दवाच्य इति व्याख्याने मरीचिर्भूतवायोरभिमानीति लभ्यत इति सिद्धम् ।

ननु प्रवहस्य भूतवायुदेवतात्वप्रसिद्धेः कथं मरीचिरूपदेवविशेषस्य भूतवायुदेवतात्वं व्याख्यायत इति चेत्; उच्यते । यथा **'वह्निदक्षाविन्द्रसूनुः'** इति तन्त्रसारे ( ) दक्षस्य हस्तदेवतात्वे उक्तेऽपि इह **'हस्तौ वायुसुतौ ज्ञेयौ मरुतौ [5]हानिलाभयोः'** इत्यनेन वायुसुतयोर्मरुद्विशेषयोर्हस्तदेवतात्वमुक्तम् । तथा अन्यत्र प्रवहस्य भूतवायुदेवत्वोक्तावपि इह मरीचेर्भूतवायुदेवतात्वमुच्यत इत्यङ्गीकारे बाधका-

---

१. तत्तद्देवानां - ख.	२. उद्देश्यभविन - क.
३. अभिमानिवाचक - क.	४. प्रमाणभूतानि - क.
५. ज्ञानिभावयोः - ख.

भावात् । यदि दक्षस्य मरुतश्च प्रधानावान्तरभेदेन हस्तदेवतात्वमिति मतं तर्हि तत्प्रकृतेऽपि [1]प्रवहमरीच्योरस्तु । अविशेषात् ।

**प्राणः प्रथमजो यस्तु मुख्यवायुः समीरितः ।**
**त्वगात्माद्यास्तु तत्पुत्राः द्विधा भूतमुदाहृतम् ।।**

इति स्मृतौ [2]प्रधानावान्तरभेदेन भूतवाय्वभिमानिद्वैविध्यमुक्तमनुसन्धेयम्।

**(षट्प्रश्नोक्तमरीचिनामककलादेवमारभ्य पुष्करान्तेषु कर्मजत्वं तारतम्यं च तात्विकेष्वेव व्रह्मादिषु तारतम्यमिवात्रापि तदव्याहतम्)**

पावकस्तेजोभूतकलाभिमानी **'तस्मादग्निः पावकाख्यः प्रथमोऽग्नेः सुतस्ततः'** इति षट्प्रश्नभाष्ये पावकाख्याऽग्नेः प्रथमसुतोऽग्निः अग्नि-भूताभिमानीत्युक्तत्वात् । एतदेवाभिप्रेत्य षट्प्रश्नभाष्यटीकायां जय-तीर्थश्रीमच्चरणैः **'पावकाख्यस्तेजसो देवता'** इत्युक्तम् ।

पर्जन्यः इन्द्रियगोलकाख्यकलाभिमानी **'लोकाभिमानी पर्जन्यः'** इत्यु-क्तेः। स्वाहा [3]मन्त्राख्यकलाभिमानिनी। **'स्वाहाऽतो मन्त्रदेवता'** इत्युक्तेः। बुधः जलकलाभिमानी । **'उदात्मको बुधः'** इत्युक्तेः । उषा नामाख्यक-लाभिमानिनी । **'उषा नामात्मिका'** इत्युक्तेः । शनिः पृथिवीकलाभि-मानी । **'ततः शनिः पृथिव्यात्मा'** इत्युक्तेः । पुष्करः [4]कर्माख्यकला-भिमानी । **'कर्मात्मा पुष्करस्ततः'** इत्युक्तेः ।

यद्यप्यत्र **'पृथिव्यात्मा उदात्मकः'** इत्यादिना अभिमान्यधिकरण-न्यायेन पृथिव्याद्यभिमानित्वमेवोच्यते । न तु [5]तत्तत्कलाभिमानित्वं तद्वाचकपदाभावात् । तथाऽपि कलादेवतातारतम्यप्रतिपादके **'विष्णोः**

---

१. प्रवहस्यास्तु - ख. २. प्रधाने वा अन्तरे वाऽभेदे - क.
३. जलामि - ख., मन्त्रकालमानी - ख.
४. कामाभिमानि - क., कर्मकाल - ख. ५. तात्कालिक - ख.

**प्राणः ततः श्रद्धा'** इत्यादिप्रमाणे पृथिव्यादिपदेन कलाग्रहणमेवोचितम् । [1]अन्यथा प्रकरणविरोधात् । अतः **'पृथिव्यात्मा'** इत्यादिपदानां पृथिव्यादिकलाभिमानीत्येवार्थ इत्यभिप्रेत्य [2]शन्यादिदेवानां पृथिव्यादिकलाभिमानित्वे, **'ततः शनिः पृथिव्यात्मा'** इत्यादिप्रमाणोदाहरणं सङ्गतमेवेति बोध्यम् ।

ननु पृथिव्यादीनां कलात्वमेव कुत इति चेत्, श्रुतार्थापत्तेरिति ब्रूमः। तथा हि- **'यस्मिन् एताः षोडशकलाः'** इत्युक्ते, कास्ता षोडशकला इत्याशङ्कायां **'स प्राणमसृजत। प्राणात् श्रद्धाम्'** इत्यादिना प्राणादयः षोडशकला उक्ताः । तासां च कलात्वदर्शनाय षट्प्रश्नभाष्यटीकायां [3] **'सजीवस्य शरीरस्य भागाः कलाः'** इति कलाशब्दार्थ उक्तः । अत्र भागशब्देनोपकारकत्वं विवक्षितम् । कलात्वोपपादकटीकापर्यालोचनया तथोपलम्भात् । तेन पृथिव्यादीनां पञ्चानामपि भूतानां कलात्वमुपपादितम् । तथाहि - भूतानां तावत् शरीरोपादानत्वमस्ति।

**यत्किञ्चिदिह लोकेऽस्मिन् देहबद्धं विशाम्पते ।**
**सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ।।** (ब्र.सू.भा.२.३.४८)

इति शरीरस्य पाञ्चभौतिकत्वोक्तेः । अतस्तेषां शरीरोपकारकत्वमेवावश्यं वाच्यम् । उपादानानाम् उपादेयोपकारकत्वस्य तन्त्वादौ सुप्रसिद्धत्वात् । ततश्च पृथिव्यादीनां श्रुतार्थापत्या कलात्वसिद्धिः । एवं जीवस्य शरीरप्रेरकतया श्रद्धापदोक्तास्तिक्यनिष्ठाया [4]यागादिविहितप्रवृत्तिहेतुत्वेन चक्षुरादीन्द्रियस्य [5]प्रवृत्तावुपकारकत्वेन मनसः प्रवृत्तौ

१. अन्ये प्रकरणरोधात् - क.
२. शान्त्यादि - क.
३. सशरीजीवस्य
४. यागप्रवृत्तिनिवृत्तिहेतुत्वेन - ख.
५. प्रवृत्तिकारकत्वेन - क.

प्रधानकारणत्वेन अन्नस्य शरीरस्थितिकारणत्वेन वीर्यस्य शरीरहेतुत्वेन तपसो [1]जीवज्ञानादिहेतुतया [2]सुखसाधनत्वेन ऋगादिवेदरूपाणां मन्त्राणां सम्यक् ज्ञानादिहेतुत्वेन कर्मणः पुण्यापुण्यलक्षणस्य सुखादिनिमित्तत्वेन लोकशब्दोक्तेन्द्रियाश्रयगोलकानां शरीरावयवत्वेन देवतादिनाम्नो व्यवहारहेतुत्वेन सजीवशरीरोपकारकतया कलात्वं बोध्यम् । अत्र किञ्चिज्जीवोपकारकत्वं सर्वथा जीवशरीररूपविशिष्टोपकारकत्वं सर्वेषां समानम् ।

ननु एवं सति पर्जन्यादीनां पुष्करान्तानां कर्मदेवतात्वेनोक्तेतरान्ये देवा इत्यनेनैव सङ्ग्रहात् तेषां परस्परं साम्यमेवेति प्राप्तम् । ततश्च गङ्गापर्जन्येत्याद्यग्रिमवाक्येन तेषां तारतम्यकथनमनुपपन्नं स्यादिति चेत्, उच्यते । यथा **'तात्विकाश्च शचीपतिः । रुद्रो ब्रह्मेति क्रमशः'** इति सूत्रभाष्ये तात्विकान्तर्गतत्वेन शचीपत्यादीनां लाभेऽपि पुनः शचीपत्यादीनां विशेषद्योतनाय तारतम्यमुक्तम् । **'तथोक्तेतरान्य'** इत्यत्रोक्तानां कर्मदेवानां मध्ये पर्जन्यादीनां लाभेऽपि विशेषद्योतनाय पुनः पर्जन्यादीनां तारतम्यकथनमुपपद्यत इति । ततश्च मरीचिपावकौ द्वावेव कलादेवौ कर्मदेवकक्ष्यायां ग्राह्याविति पर्यवस्यति ।

इदं तु बोध्यम् । **'ततो वायोः सुतो मरुत् । तस्मादग्निः पावकाख्यः'** इति षट्प्रश्नभाष्ये भृगुनारदादिवदीषन्न्यूनाधिकत्वमभिप्रेत्य मरीचिपावकयोस्तारतम्यमुक्तमिति न तद्विरोधः । अत्र त्वल्पत्वादविवक्षेति न्यायेनेन्द्रकामवन्मरीचिपावकयोः किञ्चित्तारतम्यसत्वेऽपि तदविवक्षित्वा परस्परसमानत्वमुक्तम् । **तेन मरीचिपावकयोः कर्मदेवकक्ष्यायां ग्रहणेऽपि न कश्चिद् दोषः ।**

---

१. जन्मजीवादि २. सुखसाधनत्वेनेति नास्ति - क.

एवं [1]मेषादिराशिसञ्चारिदेवता आदित्यादिनवग्रहाः । तेष्वादित्य-सोमबृहस्पतयो न कर्मदेवाः । ब्रह्माण्डमध्य एवेत्याद्युक्तकर्मदेवलक्षणाभावात् । किन्तु मङ्गल-बुध-शुक्र-शनि-केतव एव कर्मदेवाः । तत्रोक्तकर्मदेवलक्षणभावात् । तथाहि - परमेश्वरेण ब्रह्माण्डमध्ये ग्रहदेवता उत्पादिता इति तावदङ्गीकार्यम् । **'धाता यथा पूर्वमकल्पयत्'** इति श्रुतेः। तासां [2]पूर्वकल्पीयग्रहदेवतावत् [3]शुक्रमङ्गलादिवेदोक्तनामानि सङ्केतितवान्। तत्तद्योग्यरूपाणि चोत्पादितवान् इत्येतद् **'ऋषीणां नामधेयानि'** इति प्रागुदाहृतस्मृतिसिद्धम् । ततश्च मङ्गलबुधादयो ग्रहदेवाः ब्रह्माण्डमध्य एव वेदोक्त [4]देवसम्बन्धिनामरूपवत्वलक्षणं देवत्वं प्राप्ता इति तत्र कर्मदेवलक्षणमस्तीति सिद्धम् । तत्र शनिबुधौ वक्ष्येते । अतः शिष्टाः मङ्गलशुक्र-राहुकेतवः कर्मदेवेषु ग्राह्याः ।

तत्र यद्यपि राहुर्दैत्य इति प्रसिद्धिः । तथाऽपि शिरश्छेदानन्तरं देवत्वं ग्रहत्वं च प्राप्तम् । यथोक्तं भगवते - **'शिरस्त्वमरतां नीतमजो ग्रहमचीक्लृपत्'** (भा.८.८.७१) इति । भारततात्पर्यनिर्णये चोक्तम् **'शिरस्तु तस्य ग्रहतामवाप सुरैः समाविष्टम्'** (म.ता.नि.२०.) इति। अत्र ग्रहत्वं प्राप्टमेव । सुरैरिति सहयोगे तृतीया । समाविष्टं समावेशं प्राप्तम्। नेन देवत्वं च सूचितम् । अन्यथा सुरैः सह समावेशाऽयोगात् इति ।

इत्थं हि राहुकथा -

राहुः पूर्वं देवताचिह्नानि गृहीत्वा देवपङ्क्तौ प्रविश्य अमृतपानं कृतवान् । तदनन्तरं चन्द्रार्काभ्यां सूचने कृते भगवान् तच्छिरश्चिच्छेद । तदुक्तं भागवते (८.८.६९)

---

१. मेषसञ्चारिदेवाः - क.		२. पुराकल्पे - क.
३. शुक्रमाङ्गल्य - क.		४. देवनामवत्वात् - ख.

**देवलिङ्गप्रतिच्छन्नः स्वर्भानुर्देवसंसदि ।**
**प्रविश्य सोममपिबत् चन्द्रार्काभ्यां च सूचितः ।।** इति ।

एवं राहुणा अमृतं पीतमिति चन्द्रार्काभ्यां सूचने कृते भगवान् तच्छिरश्चिच्छेद । तच्छिरो [१]भगवत्प्रसादेन ग्रहत्वं च प्राप । तदुक्तं **शिरस्त्वमरतां नीतमजो ग्रहमचीक्लृपत्** इति । अतो भगवत्प्रसादेन [२]देवत्वस्य प्राप्तत्वात् तच्छिरः देवपङ्क्तौ प्रकटं यथा स्यात् तथा उपविष्टमिति । तस्मात् **'सुरैः समाविष्टम्'** इत्यस्योक्तमेव व्याख्यानं युक्तम् । **केतुरप्यत्र ग्राह्यः । तस्याप्युक्तकर्मदेवलक्षणाक्रान्तत्वात्** ।

**यस्य यस्माद् यदा दुःखं स तं यत्नेन पूजयेत् ।**
**ब्रह्मणैषां वरो दत्तः पूजिताः पूजयिष्यथ ।**
[३] **ग्रहाधीना नरेन्द्राणाम् उच्छ्रायाः पतनानि च ।।**
**भावाभावौ च जगतः तस्मात् पूज्यतमा ग्रहाः ।**

इति ग्रहाणां पूज्यत्वश्रवणात् । न च [४] देवव्यतिरिक्तानां पूज्यत्वमस्ति। किञ्च **'पूजिताः पूजयिष्यथ'** इत्यनेन यूयमन्यैर्नरेन्द्रादिभिः **'पूजिताः पूजयिष्यथ'**, हरिमिति योग्यतया अध्याहार्यम् इति ब्रह्मणा ग्रहाणां हरिपूजकत्वमुक्तम्। न चासुरादीनां तदस्ति। अतोऽपि केतोर्देवत्वमेव। अन्यथा देवसाहचर्यविरोधाच्च । अत्र ग्रहशब्देन सूर्यादयः केत्वन्ताः ग्राह्याः ।

**सूर्यः सोमो महीपुत्रो बुधश्चैव बृहस्पतिः ।**
**शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः ।।**

---

१. भगवता प्रसाधने - ख.
२. देवापत्तौ - क.
३. ग्रामाधीना - क.
४. देवतानां

इति पूर्ववाक्ये तेषामेव प्रकृतत्वादिति ।

एवं विष्णुपार्षदा अपि कर्मदेवाः । ते हि परमेश्वरेण ब्रह्माण्डमध्य एव [1]वेदोक्तस्वस्वयोग्यनामरूपविशिष्टतयोत्पादिताः । न तु ब्रह्माण्डाद् बहिरिति । **'धाता यथा पूर्वमकल्पयत्' 'ऋषीणां नामधेयानि'** इति श्रुतिस्मृतिसिद्धम्। अतो विष्णुपार्षदा अपि ब्रह्माण्डमध्य एव [2]वेदोक्तदेव-सम्बन्धिनामरूपवत्वलक्षणदेवत्वं प्राप्ता इति कर्मदेवलक्षणसद्भावात् इति।

तत्र विष्वक्सेनो गणेशसमानत्वादत्र कर्मदेवेषु न ग्राह्यः । विष्णुपार्षदा उच्यन्ते -

**तावक्षयोऽनुजगृहे निजपार्षदौ हि**
**पूर्वं विकुण्ठसदनाध्दरिसेवनाय ।**
**प्राप्तौ भुवं [3]मृजिनपुष्पकरौ पुराऽपि** (म.ता.नि.)

इत्युक्तौ वस्त्रमालाकरौ द्वौ विष्णुपार्षदौ ।

**गदश्च नामतोऽनुजो हरेः स रोहिणीसुतः ।**
**[4]पुरा सचण्डको गणो हरेर्निवेदिताशनः ।।** (म.ता.नि.१७.२५२)

इत्युक्तो हरेरशननिवेदनकर्ताऽप्येको विष्णुपार्षदः ।

एवं भगवद्द्वारपालनादिव्यापारकर्तारो जयविजयाद्या भगवत्सेवा-विशेषकर्तारः कालाख्याश्च देवाः विष्णुपार्षदेषु ग्राह्यः **'काला जयाद्या अपि विष्णुपार्षदा'** इति भारततात्पर्यनिर्णयोक्तेः । विष्णुपार्षदानां कर्मदेवत्वे तल्लक्षणसद्भावो मानमित्युक्तम् । **'काला जयाद्या'** इत्युक्त्वा **'नीचा सुरेभ्यस्तत एव तेऽखिलाः'** इति तेषां तात्विकदेवाधमत्वोक्ति-

---

१. वेदे नामरूपे - क.    २. वेदसाम्बन्धि - क.
३. अजिन - क.    ४. पुराणश्चण्डको - ख.

र्मानम् । अत एव विष्वक्सेनस्य विष्णुपार्षदत्वात् तस्यापि [1]तात्त्विकदेवाधमत्वप्रसक्तौ तन्निवृत्त्यर्थं **'विष्वक्सेनो वायुजः खेन तुल्यः'** इति तदग्रिमवाक्ये आकाशतत्वाभिमानिगणपतिसाम्यं तस्योक्तमिति ध्येयम्।

एवमभिमान्यधिकरणोक्तन्यायेन **'ओषधयः संवदन्ते । श्रुणोत ग्रावणः'** इत्यादावोषध्यादिपदवाच्यास्तत्तद्वस्त्वभिमानिदेवा अपि कर्मदेवाः। एवं-

**नभोऽभिमानी विघ्नेशो विष्णोर्मांसाश्रितः सदा ।**
**अन्तरिक्षाभिमानी च तत्सूनुरुदरे स्थितः ।**
**पर्वताः सिकताश्चैव नद्यः कूपाः सरांसि च ।**
**हविः कपालयूपाद्याः देवता एव सर्वशः ।**
**तत्तन्नामैव नामैषां भिन्नानामभिमानतः ।।** (३.१, P.५२६)

इति बृहद्भाष्योक्तान्तरिक्षाभिमानी गणेशपुत्रः। पर्वतादिनामकाः पर्वताद्यभिमानिनो देवाः । एवमैतरेयभाष्ये - (द्वि.प्र.अ.३ P.२५६)

**त्वक् चर्मरोमनामानो वृक्षनामान एव च ।**
**द्विविधाः पारिजाताद्या बभूवुर्ब्रह्मदेहतः ।**

इत्युक्ताः पारिजातादिनामकाः देवा अपि कर्मदेवाः । ब्रह्माण्डमध्ये औषध्याद्युत्पत्तौ सत्यां [2]वेदोक्ततत्तन्नामरूपवत्वरूपदेवत्वप्राप्त्यौषध्याद्यभिमानिदेवेषु कर्मदेवलक्षणसद्भावात् । एवं येषां देवत्वं कारणविशेषवशादावृतं ते आवरणनाशे सति देवत्वाभिव्यक्तिं प्राप्नुवन्ति । यथा प्रह्लादादयः । तदुक्तं गीतातात्पर्यनिर्णये - (अ.१६.२०)

**देवाः शापबलादेव प्रह्लादादित्वमागताः ।**
**अतः पुनश्च देवत्वं ते यान्ति निजमेव तु ।।**

---

१. तत्त्वाधमप्रसक्तौ - ख.   २. वेदा तन्नाम - क.

इति तेऽपि देवत्वाभिव्यक्तौ सत्यां देवपदं प्राप्ता इति कर्मदेवाः । **'अन्तरा प्राप्तदेवताः'** इति तल्लक्षणसद्भावात् । तथाहि - प्रह्लादादीनां [1]कारणविशेषादासुरत्वं प्राप्तम् । तच्च यथा स्फटिकलौहित्यं तच्छौक्ल्याभिभावकं तथा प्रह्लादादीनां स्वाभाविकं यद्देवत्वं तस्याभिभावकम् । तदुक्तं गीतातात्पर्यनिर्णये -

**हेतुतः सोऽन्यथाभावो रक्तता स्फटिके यथा ।**
**अतोऽनित्यश्च नाप्येष स्वभावविनिवर्तकः ।**
**किन्त्वाक्रम्यैव तत्तिष्ठेद् देवसर्गस्ततो हि सः ।।** इति । (अ.१६.२०)

अत औपाधिकासुरत्वविनाशे स्वाभाविकदेवत्वमभिव्यज्यते । तस्मात् प्रह्लादाद्या [2]अन्तरा देवत्वं प्राप्ता इति ते कर्मदेवा उच्यन्ते । प्रह्लादः, [3]तदवरजौ सह्लादानुह्लादौ, विभीषणः, बाणश्चेत्यादयः ।

प्रह्लादस्य प्रकारान्तरेणाऽपि देवत्वमुपपाद्यते ।

**ऋते तु तात्विकान् देवान् नारदादींस्तथैव च ।**
**प्रह्लादादुत्तमः को नु विष्णुभक्तौ जगत्त्रये ।।**

इति भागवततात्पर्यनिर्णये (७.१०.२२) कर्मदेवादिषु मनुष्योत्तमान्तेषु विष्णुभक्तेषु मध्ये प्रह्लादस्योत्तमत्वमुक्तम् । देवत्वं च **'देवाः शापबलात्'** इति मानसिद्धम् । ततश्च प्रह्लादस्य कर्मदेवत्वसिद्धिः । कर्मदेवादिषु मध्ये य अत्युत्तमभक्तो देवः स कर्मदेव इति व्याप्तेर्बल्यादिकर्मदेवेषु दर्शनात् इति ।

वस्तुतस्तु प्रह्लादादीनां कर्मदेवत्वाभावेऽपि कर्मदेवसमानत्व-

---

१. प्रकरण - क.   २. अन्तरा इति क कोशे नास्ति ।
३. तदा वीरजौ - ख.

मावश्यकम्। अनुव्याख्यानोक्तकर्मदेवकक्ष्योक्तसर्वदेवतासङ्ग्रहणे शतशतस्थान्तदेवभिन्नत्वे सति पर्जन्यादिदेवभिन्नत्वे च सति देवत्वरूपं यदवच्छेदकं तत्सङ्गृहीतत्वात् । एवमन्याश्च ।

**'सर्वासु देव्यो दिशो या आपश्च पूर्वं विंशतिरग्ग्ररूपाः'** इति उक्तदिगभिमानिन्योऽबभिमानिन्यश्च देव्यः कर्मदेवताः । एवं **'यश्चित्र-गुप्तो नाम पूर्वं सुलेखः'** इति लेखकदेवत्वं प्राप्तश्चित्रगुप्तोऽपि कर्मदेवः। **'अन्तरा प्राप्तदेवताः'** इत्युक्तकर्मदेवलक्षणसत्वात् । एवं विश्वकर्माऽपि अन्तरा [1]वर्धकिदेवत्वरूपदेवत्वं प्राप्त इति सोऽपि कर्मदेवः । तदेवं ये प्रसिद्धाधिकाराः कर्मदेवलक्षणयोगिनः ते सर्वे **उक्तेतरान्ये देवा** इत्यत्र ग्राह्याः । अप्रसिद्धास्तु **येऽभ्योऽन्ये चेत्यत्र** ग्राह्याः । एतच्च **सन्न्याय-रत्नावल्यनुसारेणोक्तम्** । तत्र **'तदन्ये तु ततोऽवराः'** इत्यनुव्याख्यानस्य तदन्ये ये अप्रसिद्धाधिकारास्ते तत्तद्देवताः पर्जन्यादवरा इत्यर्थ इति व्याख्यातत्वादिति बोध्यम् ।

**तदवरमनव इति ।** स्वायम्भुवः स्वारोचिषः उत्तमः तापसः रैवत-श्चाक्षुषः वैवस्वतः सावर्णिः ब्रह्मसावर्णिः रुद्रसावर्णिः इन्द्रसावर्णिः दक्षसावर्णिः [2]धर्मसावर्णिः देवसावर्णिः इति चतुर्दशमनवः । तत्र ते प्रागुक्ताः तापसः स्वायम्भुवो वैवस्वतश्चेति त्रयो मनवः, तेभ्यो अवरा मनवः एकादशमनव इत्यर्थः । एतेषामश्विभ्यामधमत्वे, **'अश्विपश्चा-त्ततोऽवराः'** इत्यनुव्याख्यानं मानम् । तद्विवृतं सुधायाम् - **'स्वायम्भुवाद् वैवस्वताद् भगवतो अवतारात् तापसाच्च अन्ये मनवः ततो वैवस्व-तादवराः ते अश्विभ्यां पश्चात् पर्जन्यादुत्तमा इत्यर्थः'** इति ।

---

१. वार्धक्ये - ख., वृद्धकरूपदेवत्वं - क. २. धर्मकर्म

**च्यावनोचथ्यसंज्ञाविति** । च्यवन एव च्यावनः, प्रज्ञादिभ्यश्च (पा.सू.५.४.३८.) इति स्वार्थेऽण्। इदं तु बोध्यम् । अस्यां कक्ष्यायां अश्विदेवाधमा एव कर्मदेवाः । [1]मनवश्चावनोचथ्यौ राजानश्चो-च्यन्ते। अतो अश्विदेवाधमत्वाऽविशेषात् च्यावनोचथ्यसञ्ज्ञावित्यत्र उप-लक्षणतया -

**सनकाद्या नारदस्तु ऋभुर्हंसोऽरुणो यतिः ।**
**नैते गृहान् ब्रह्मसुता अवसन्नूर्ध्वरेतसः ।।** (भाग.४.९.१. P.८६)

इति प्रमाणोक्ता नारदव्यतिरिक्ताः सनकादयोऽपि ग्राह्याः ।

भारततात्पर्यनिर्णयबलेन तेषामप्यश्विपश्चात्तनत्वावगमात् । सनकादीनामश्विदेवाधमत्वप्रतिपादकं - **'नसोश्च नासत्यदस्रौ क्रमशः प्रसूतौ । ततः सनाद्याश्च'** इति भारततात्पर्यवाक्यं तु प्रवहप्रकरणे व्याख्यातमिति बोध्यम् ।

न च सनकादीनाम् अश्विदेवाधमत्वाङ्गीकारे **'सनकाद्या नारदश्च दक्षभृग्वादयोऽपि च । देवावरा यथा तद्वत् मनवोऽपि प्रकीर्तिताः'**।। (अ.३.५. P.५६३) इति बृहद्भाष्यविरोधः । किन्तु तदानुकूल्यमेव । तथा प्रवहप्रकरणे उक्तवाक्यं व्याख्यातम् । तत्रैव द्रष्टव्यम् । एवं च च्यवनोचथ्यसनकादीनामपि साक्षादश्विदेवाधमत्वात् **'च्यावनोचथ्यसञ्ज्ञौ'** इत्यत्र सनकादयोऽपि ग्राह्या इति उक्तं युक्तम् ।

**(कर्मजदेवकक्ष्यायां निरूपिताः व्याप्तदर्शिनः नवतिसङ्ख्याका एव ऋषयः ।)**

एवमन्येऽपि देवऋषयोऽपि अत्र ग्राह्याः । न चैवं सर्वेषाम् ऋषीणा-मत्रैव ग्रहणप्रसङ्गे ऋषिकक्ष्याया विलोपप्रसङ्ग इति वाच्यम् । तत्रान्त-

---

१. च्यवनतथ्यौ - क.

दर्शिनाम् ऋषीणां ग्रहणात् । अत्र कर्मदेवकक्ष्यायां व्याप्तदर्शिनाम् ऋषीणां ग्रहणम् । अतो न ऋषिकक्ष्यायाः [1]विलोपप्रसङ्गः । एवं च च्यवनादयो व्याप्तदर्शिनो नवतिसङ्ख्याका ऋषयः च्यवनोचथ्यसञ्ज्ञौ इत्यत्र ग्राह्याः । **'विश्वामित्र ब्रह्मपुत्रान् ऋते चाप्यृषयोऽखिलाः । सूर्यादिभ्योऽधमाश्चैव'** इति बृहद्भाष्ये (अ.३.५. P.५६३) विश्वामित्रादि दशदेवऋषिभिन्नानां व्याप्तदर्शिनां नवतिसङ्ख्यानां देवऋषीणाम् अश्विपर्यन्तोक्ततात्विकदेवाधमत्वाभिधानात् । उक्तश्लोकार्थस्तु वक्ष्यते ।

**वैन्य इति ।** वेनस्यापत्यं पुमान् वैन्यः पृथुरित्यर्थः । वेनशब्दात् **'कुर्वादिभ्यो ण्य'** (पा.सू.४.१.१५१.) इति सूत्रेण अपत्यार्थे ण्यप्रत्ययः। यद्यपि **'वेनाच्छन्दसि'** इति छन्दस्येव वेनशब्दात् [2] ण्यप्रत्ययो नियमितः। तथाऽपि, [3]**'छन्दसा अपि भाषायां प्रयुज्यन्त'** इति शाब्दिकैरुक्तत्वादत्र वैन्यशब्दप्रयोगो युक्तः ।

**क्षितिपतिशशविन्दुरिति ।**

शशो बिन्दुः यस्य स शशबिन्दुः, शशाङ्क इत्यन्यथाप्रतीतिवारणाय क्षितिपतीति विशेषणम् । शशबिन्दुनामको राजेत्यर्थः । प्रियादिव्रत इत्ययुक्तं, व्रतं प्रति प्रियस्यादित्वाभावेनार्थासङ्गतेरिति चेदुच्यते। प्रियशब्दव्रतशब्दौ [4] शब्दपरौ । ततश्च प्रियशब्दः आदिर्यस्य स प्रियादिः। प्रियादिः व्रतशब्दो यस्य स प्रियादिव्रतः । वक्रोक्तिबलात् पुराणादौ प्रियव्रत इति प्रसिद्धो राजेत्यर्थः । अत्र -

**कार्तवीर्यः पृथुश्चैव दौष्यन्तिर्भरतस्तथा ।**
**शशविन्दुश्च मान्धाता ककुस्थाद्यास्तथा परे ।।**

---

१. तिलोत्तमप्रभ - ख. २. क्यप्रत्ययो - क.
३. छान्दस्या - ख. ४. शास्तृपरौ - क.

इति बृहद्भाष्योक्ताः दौष्यन्तिभरतमान्धातृककुस्था आद्यपदोक्ताः परीक्षिज्जनकादयश्च राजानो ग्राह्याः । **'प्रियव्रतो गयश्चैव कर्मदेवसमौ मतौ'** इति प्रमाणानुसारेण गयोऽपि ग्राह्यः । [1]एवमार्षभो भरतोऽपि ग्राह्यः । **'ऋते हैहयवैन्यादीन् आर्षभस्येह कः समः'** इति भागवत-तात्पर्यनिर्णयबलेन तस्य कार्तवीर्यादिसमानत्वावगमात् ।

अत्रेदं बोध्यम् । अन्तर्दर्शित्वेन मध्यमाधिकारिणो ये राजानस्ते **'क्षितिपा मनुष्यगन्धर्वाः'** इत्युक्तक्षितिपेषु ग्राह्याः । व्याप्तदर्शित्वेन उत्तमाधिकारिणो ये राजशतान्तर्गताः राजानस्ते सर्वेऽपि **'वैन्यो यः कार्तवीर्यः'** इत्यत्र ग्राह्याः । अत्र प्रमाणं बृहद्भाष्यम् - (अ.३.५. P.५३४)

**कार्तवीर्यः पृथुश्चैव दौष्यन्तिर्भरतस्तथा ।**
**शशबिन्दुश्च मान्धाता ककुस्थाद्यास्तथा परे ।।**

इति श्लोकेन सर्वेषामपि व्याप्तदर्शिनां राज्ञां कर्मदेवसमानत्वप्रतिपादनात्, **'ककुस्थाद्यास्तथाऽपरे'** इति आद्यपदविरोधात् । [2]बहुवचनान्तपर-शब्दाऽयोगाच्च । यथा चैतत्तथा अनुपदमेव वक्ष्यामः ।

एवमस्यां कक्ष्यायाम् उक्ताः कर्मदेवाः मनवः ऋषयश्च राजान-श्चोपदर्शिताः । इदमुपलक्षणम् । पितृसप्तकमप्यत्र ग्राह्यम् । **'पितॄणां सप्तकं यत्तत् कर्मदेवसमं मतम्'** इति बृहद्भाष्योक्तेः । एवमष्टौ तुम्ब-र्वादिगन्धर्वा ऊर्वश्याद्यप्सरसश्चात्र ग्राह्याः । **'तुम्बुरुप्रमुखा ये च तथोर्वश्यादिका अपि'** इति बृहद्भाष्यबलेन तुम्बुर्वादीनामूर्वश्यादीनां च कर्मदेवसमानत्वलाभात् ।

---

१. एवमर्वषो - ख.  २. बहुवचनं तेन शब्दायोगाच्च - ख.

**(तारतम्यप्रतिपादकबृहदारण्यकभाष्यस्याशयविशेषाविष्करणम्)**

इदानीं तत्र तत्र प्रमाणीकृतस्य समग्रबृहद्भाष्यवाक्यस्यार्थ उच्यते ।

**कार्तवीर्यः पृथुश्चैव दौष्यन्तिर्भरतस्तथा ।**
**शशविन्दुश्च मान्धाता ककुत्स्थाद्यास्तथा परे ।।**
**सर्वे ते विष्णुनाऽऽविष्टाः विष्णोर्भिन्नाः सदैव तु ।**
**[1]शतावराश्च देवेभ्यः कर्मदेवा इति स्मृताः ।**
**तुम्बुरुप्रमुखा ये तु तथोर्वश्यादिका अपि ।**
**विश्वामित्रब्रह्मपुत्रान् ऋते चाप्यृषयोऽखिलाः ।।**
**सूर्यादिभ्योऽधमाश्चैव मन्वादिभ्यस्तथैव च ।**

इति वाक्ये ककुत्स्थाद्या इति ।

ननु ककुत्स्थाद्या इत्यनेन बहुवचनान्तपदेन सर्वेषामपि राज्ञां ग्रहणे [2]क्षितिपकक्ष्याविलोपप्रसङ्गः । एवं **'ऋषयोऽखिलाः'** इत्ययुक्तम् । सर्वेषामृषीणां कर्मदेव[3]समानत्वाभावाद् ऋषिकक्ष्याविलोपप्रसङ्गः इति चेत्, उच्यते ।

**अप्रतीका देवता हि ऋषीणां शतमेव च ।**
**राज्ञां च शतमुद्दिष्टं गन्धर्वाणां शतं तथा ।।**
**एतेऽधिकारिणो व्याप्तदर्शनेऽन्ये न तु क्वचित् ।** (ब्र.सू.भा.४.३. १५)

इति सूत्रभाष्ये ऋषिशतं राजशतं व्याप्तभगवद्दर्शीत्युक्तम् । तत्र राजशतं कार्तवीर्य इति श्लोके विवक्षितम् । अतः कार्तवीर्यादि [4]राजषट्कं विना [5]शेषशतान्तर्गतराजानः ककुत्स्थाद्या इत्याद्यपदेन ग्राह्याः । आद्यपदसङ्ग्राह्यताच्छेदकं च व्याप्तदर्शिराजत्वम् । तेन न क्षितिपकक्ष्या-

---

१. दशावराश्च - ख. २. क्षितिकक्ष्या - ख.
३. समानत्वात् - ख. ४. राज x x - ख. ५. श्रेष्ठगता - क.

विलोपप्रसङ्गः । तत्रान्तर्दर्शित्वेनोक्तं यद् ऋषिशतं तदन्तर्गता [१]नवति-सङ्ख्याऋषयो ग्राह्याः । तेन नोक्तातिप्रसङ्गः । ऋषिकक्ष्यायामन्त-र्दर्शिनाम् ऋषीणां ग्रहणात् । तथा च वक्ष्यामः **'कर्मदेवा इति स्मृताः'** इति। **'शतावराश्चेति'** च शब्दस्य कर्मदेवाश्चेत्यन्वयः । **'इति स्मृताः'** इत्यस्य - देवेभ्यः शतावराः इत्यनेनान्वयः । कार्तवीर्य इति सार्धश्लोकस्य **'सूर्यादिभ्योऽधमाः'** इति वक्ष्यमाणेनान्वयः । न तु **'देवेभ्यः शतावराः'** इत्यनेन । बाधादिप्रसङ्गात् ।

तथा हि - देवेभ्य इत्यनेन **'सूर्यश्च चन्द्रमाश्चैव यमश्चैते त्रयः सुराः'** [२]इत्यव्यवहितपूर्वश्लोकोक्तसूर्यादिग्रहणे तदपेक्षया शतावरत्वं कार्तवीर्यादीनां बाधितम् । तेषां सूर्याद्यपेक्षया शतगुणाधमत्वाभा-वात् । कार्तवीर्योत्तमाश्विदेवापेक्षया मित्रः किञ्चिदधिकः । ततोऽ-ग्निर्द्विगुणाधिकः । ततो वरुणः पादोनाधिकः । वरुणात् सोमः [३]पादार्धसहितपादेनाधिक इत्येवं सूर्यादिभ्यश्चतुर्गुणन्यूनगुणैरेवाधम-त्वप्रतीतेः । यदि च शतशब्दो बहुत्वपरः सूर्यादिभ्यो बहुगुणाधमत्वं कार्तवीर्यादीनां सम्भवत्येवेति मतं तदा, **'सूर्यादिभ्योऽधमाः'** इत्यनेनै-कार्थत्वादन्यतरविधिवैयर्थ्यम् । तस्मात् कर्मदेवा इत्यनेन कर्मकराः देवाः इति वा कर्माभिमानिनो देवाः कर्मदेवाः इति वाऽन्यथा प्रतीतौ सत्यां तन्निवारणार्थं **'देवेभ्यः शतावराः स्मृताः'** इति कर्मदेवानां विशेषणमुक्तम् । ततश्च **ते ये शतं कर्मदेवानामानन्दाः । स एको देवानामानन्दः** इति तैत्तिरीयश्रुतौ सामान्यतो **'देवेभ्यः शतावराः'** इति स्मृता ये बल्याद्यास्ते कर्मदेवा इत्यर्थः पर्यवस्यतीति ।

---

१. नवनवति - ख. २. इत्यादि

३. पादाधिक - ख.

[1] अल्पाध्यर्धस्य सूर्यादिभ्योऽधमा इत्येनेनान्वयः । एवं कार्तवीर्य इति सार्धश्लोकस्य अनन्वयः। तथात्वे कार्तवीर्यादीनामपि देवत्व-प्राप्तेः। तथा चानुव्याख्याने तदन्ये त्वित्यनेनैव देवत्वाविशेषात् कार्तवी-र्यादीनामपि गृहीतत्वेन [2]पृथगं ग्रहणं व्यर्थं स्यात् । किञ्च कार्तवीर्या-दीनां कर्मदेवत्वे **'अप्रतीका देवता हि'** इति सूत्रभाष्ये आदिराजग्रहणं [3]पूर्वराजग्रहणं च व्यर्थं स्यात् । विविधदेवतावाचकेन देवशब्देनैव तल्लाभात् ।

किञ्च **'प्रियव्रतो गयश्चैव कर्मदेवसमौ मतौ'** इति स्मृतौ प्रिय-[4]व्रतगययोः कर्मदेवसमानत्वमुक्तम् । तच्च राजशतस्य कर्मदेवत्वा-ङ्गीकारे विरुध्यते । तयोरपि राजशतान्तर्भूतत्वेन कर्मदेवत्वस्यावश्य-मङ्गीकारात् । किञ्च **'अन्तरा प्राप्तदेवताः कर्मदेवताः'** इति तैत्तिरीय-भाष्ये कर्मदेवलक्षणमुक्तम् । तत्कार्तवीर्यादिषु नास्ति । अतः कार्त-वीर्यादयः कर्मदेवा इति स्मृता इति नान्वयः । किन्तु उक्त एव । न चोक्तपक्षे **'शतावरा इति स्मृताः'** इति व्यवहितान्वयप्रसङ्गदोषः । योग्यतासत्वे तस्यादोषत्वात् । यथाश्रुतान्वये बाधकस्योक्तत्वाच्च इति।

**तुम्बुरुप्रमुखा ये च** इति । पूर्वसमुच्चयार्थः चशब्दः । अस्यापि **'सूर्यादिभ्योऽधमाः'** इत्यनेनान्वयः । ननु **'तुम्बुरुप्रमुखाः'** इत्यनेन कियन्तो गन्धर्वा ग्राह्याः? उच्यते । कर्मदेवगणा अष्टगन्धर्वा इति बृहद्भाष्य एवाष्टौ गन्धर्वाः कर्मदेवसमाना इत्युक्तम् । उक्तगन्धर्वाणाम् **'अन्तरा प्राप्तदेवता'** इत्युक्तकर्मदेवलक्षणाभावेन मुख्यार्थो बाधित इति कर्म-देवगणा इति पदस्य भावबोधे कर्मदेवगणसमाना इति व्याख्यातत्वाद्

---

१. अल्पार्धस्य - ख. २. पृथगिति नास्ति - क.
३. पूर्वेति नास्ति - क. ४. प्रियगययोः - क.

अत्रोच्यमानास्तुम्बुरुप्रमुखाश्च कर्मदेवसमानाः ; कर्मदेवसाहचर्येण सूर्याद्य-धमत्वविधानात्। अतः **'तुम्बुरुप्रमुखाः'** इत्यत्र अष्टौ गन्धर्वा ग्राह्याः। ते च **'समस्तगन्धर्वपतिः स तुम्बुरुः' 'धृतराष्ट्राभिधेयो गन्धर्वराट्' 'इह गन्धर्वसत्तमः' 'गन्धर्वाणां चित्ररथः'** इत्यादौ गन्धर्वश्रेष्ठत्वेनोक्ता अष्टौ गन्धर्वा ग्राह्याः । गन्धर्वश्रेष्ठतुम्बुरुसहपाठादिति बोध्यम् ।

एतेन गन्धर्वशतमत्र ग्राह्यमिति निरस्तम् । **'गन्धर्वास्तत्परे शतम्'। 'आजानदेवाः'** इति बृहद्भाष्ये [1] गन्धर्वशतस्याऽजानदेवत्वविधानात् । एतेनैवाष्टानां गन्धर्वाणां कर्मदेवत्वोक्तिरपि प्रत्युक्ता, मानाभावात् । **'कर्मदेवगणा अष्टगन्धर्वाः'** इत्यस्य च मुख्यार्थबाधेन भावबोधे अन्यथा व्याख्याततत्वादिति ।

**तथोर्वश्यादिका अपीति** । अस्यापि **'सूर्यादिभ्योऽधमाः'** इत्यनेना-न्वयः। तथाशब्द उपमार्थः पूर्वेणोत्तरेण च सम्बध्यते । कर्मदेववदित्यर्थः। ऊर्वश्यादिका इत्यादिपदेन भारते आदिपर्वणि शाकुन्तलोपाख्याने -

**ऊर्वशी [2]पूर्वचित्तिश्च सहजन्या च मेनका ।**
**विश्वाची च घृताची च षडेवाप्सरसां वराः ।।**

इत्युक्ता उत्तमाप्सरसो ग्राह्याः । अन्यथोर्वशीसहपाठविरोधात् । तथाहि -

**आहुरप्युत्तमस्त्रीणाम् अधिकारं तु वैदिके ।**
**यथोर्वशी यमी चैव शच्याद्याश्च तथाऽपराः ।।**

इति सूत्रभाष्ये (ब्र.सू.भा.१.१.१) यमभार्यावद् ऊर्वश्या उत्तमस्त्री-त्वाभिधानाद् ऊर्वशी सर्वाप्सरसः श्रेष्ठा । अत आदिपदेनाप्सरोमात्रग्र-हणे तत्सहपाठविरोध इति । एतेन अप्सरः **शतमत्र** ग्राह्यमिति

---

१. गन्धर्वाज्ञानविधानात् - क. २. पर्वचित्तिश्च - ख.

**निरस्तम् । उक्तभारतवाक्ये षट्त्वसङ्ख्योक्तिविरोधात्** इति । किञ्चात्र कर्मदेवकक्ष्यायां गन्धर्वशतग्रहणमप्सरःशतग्रहणं च तृतीयस्कन्धतात्पर्य-निर्णयविरुद्धम् । तत्र 'गन्धर्वशतस्य अप्सरःशतस्य चाऽजानदेवत्वाभिधा-नात् । यथा चैतत्तथा आजानदेवप्रकरणे वक्ष्यामः ।

**विश्वामित्रेत्यत्र ब्रह्मपुत्रानिति** । अत्र ब्रह्मपुत्रशब्देन मरीच्यादि-सप्तर्षयो भृगुनारदौ च ग्राह्यौ ।

**मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।**
**भृगुर्दक्षो वसिष्ठश्च दशमस्तत्र नारदः ।।**

इति तेषां ब्रह्मपुत्रत्वप्रसिद्धेरिति ।

ननु **'सनकाद्या नारदश्च ऋभुर्हंसोऽरुणो यतिः । नैते गृहान् ब्रह्मसुता अवसन् ऊर्ध्वरेतसः'** इति स्मृतेः । **'मानसा मत्सुता युष्म-त्पूर्वे वै सनकादयः'** इति स्मृतेश्च सनकादयोऽपि ब्रह्मपुत्राः । अतोऽपि ब्रह्मपुत्रपदेन तेऽपि ग्राह्या इति चेत् **'नासत्यदस्रौ क्रमशः प्रसूतौ ततः [1]सनाद्या'** इति भारततात्पर्यनिर्णयादिबलेन तेषामश्विदेवाधमत्वावग-मेन अत्र ऋषय इत्यनेनासङ्ग्राह्यत्वात् तदग्रहणोपपत्तेः । अपिशब्दस्य अखिला अपीत्यन्वयः ।

**ऋषय इति** । ऋषयो द्विविधाः । अन्तर्दर्शिनो व्याप्तदर्शिनश्चेति। तदुक्तं गीतातात्पर्यनिर्णये -

**'तथा ज्ञात्वा हरिं ध्यात्वा स्वान्तः पश्यन्ति केशवम्'** । **'ऋषयः'** केचिद् ऋषयः। नारदाद्या बहिस्त्वतः इति **'नारदाद्यास्तु ऋषय [2]अन्त-र्बहिरपि स्थितं'** व्याप्तमिति यावत् । केशवं पश्यन्तीति योज्यम् । अत्र

---

१. समाद्या - ख. २. अद्य वर्हिषि - क.

**'ऋषयोऽन्तःप्रकाशाः'** इत्युक्ता अन्तर्दर्शिनो ये ऋषयस्ते नैव विवक्षिताः। तेषां [१]व्याप्तदर्शिकर्मदेवसमानत्वायोगात् । अत्र च वाक्ये आदौ कर्मदेव-समानानामेव कार्तवीर्यादीनां राज्ञाम् अन्ते [२]चैकादशमनूनामभिधानात्। अतः प्रकरणविरोधान्नान्तर्दर्शिनो ऋषयो विवक्षिताः ।

न चान्तर्दर्शिनाम् ऋषीणां ग्रहणे **'विश्वामित्रब्रह्मपुत्रान् ऋते'** इति विशेषणं व्यर्थम् । अन्तर्दर्शित्वाभावेन विश्वामित्रादिव्यवच्छेदसिद्धेः । किञ्चान्तर्दर्शिनाम् ऋषीणां ग्रहणे ऋषिकक्ष्याविलोपप्रसङ्गः । तत्रान्तर्दर्शिन एव ऋषयो ग्राह्या इति वक्ष्यमाणत्वात् । किन्तु ऋषय इत्यस्य व्याप्तदर्शिनो ऋषय इत्यर्थः । **'विश्वामित्रब्रह्मपुत्रान् ऋते'** इति विशेषणबलेन च विश्वामित्रादिव्यतिरिक्ता व्याप्तदर्शिनो [३]नवतिसङ्ख्याका ऋषय इत्यर्थः पर्यवस्यति । ऋषीणां व्याप्तदर्शित्वे मानमुक्तम् ।

**सूर्यादिभ्य इति ।**

> **सूर्यश्च चन्द्रमाश्चैव यमश्चेति त्रयः सुराः ।**
> **प्रोक्तेभ्यस्त्वराश्चान्यदेवेभ्योऽपि सदाधिकाः ।। इति ।**

कार्तवीर्य इति श्लोके प्रकृताः सूर्यचन्द्रयमाः सूर्यादिभ्य इत्यत्र ग्राह्याः। तदधमत्वं च **'पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च द्विगुणा एव'** इति। **'पादोनो वरुणादग्निरध्यर्धोनः स सोमतः'** इति छान्दोग्य-भाष्योक्तक्रमेण अश्विनौ मित्रः वह्निः वरुण इति देवचतुष्टयव्यवधानेन विवक्षितम् । **'सूर्यश्च चन्द्रमाश्च'** इति श्लोके **'अन्यदेवेभ्योऽपि सदाधिकाः'** इत्यनेन [४]अश्विमित्राग्निवरुणाधिकत्वोक्त्या देवचतुष्टय-

---

१. व्याप्तादर्शसमा - क.  २. चैव - ख.
३. नवनवति - क.  ४. विश्वामित्र - क.

व्यवधानस्य सूचितत्वात् । ततश्च **'सूर्यादिभ्योऽधमाः'** इत्यस्य सूर्य-चन्द्रयमेभ्यः [1]वरुणाग्निमित्राश्विदेवव्यवधानेनाधमा इत्यर्थः पर्यवसित इति बोध्यम् ।

**मन्वादिभ्य इति ।** अत्र चशब्देनाधमा इत्यस्यानुकर्षः । **'मन्वा-दिभ्योऽधमाः'** इत्यस्य स्वायम्भुवो मनुर्दक्षः बृहस्पतिश्चानिरुद्ध' एते सूर्यादिभ्योऽधिका इति [2]पादत्रयोक्तेभ्यो मन्वादिभ्योऽधमा इति नार्थः। सूर्यादिभ्योऽधमा इत्यनेनैव सूर्याद्यधिकमन्वाद्यधमत्वलाभेन पृथक् मन्वा-द्यधमत्वविधानवैयर्थ्यात् । **'अप्राप्तेऽर्थे शास्त्रमर्थवत्'** इति न्यायात् । किन्तु मनूनामादयो मन्वादय इति षष्ठीतत्पुरुषः । आदिशब्दस्य प्रथमार्थः **'पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्या'** इत्यमरोक्तेः । ते च तापसः स्वायम्भुवो वैवस्वतश्चेति त्रयः । तेषामेव मनूनां मध्ये श्रेष्ठत्वरूपप्रथमत्वात् । ततश्च मन्वादिभ्यः मनूनां प्रथमेभ्यः श्रेष्ठेभ्यस्तापसादिभ्यस्त्रिभ्य इत्यर्थः। ततश्च **'मन्वादिभ्योऽधमाः'** इत्यस्य तापसादिमनुव्यतिरिक्ताः एका-दशमनव इति पर्यवसितोऽर्थः ।

अत्र **'कार्तवीर्यः'** इत्यादिसार्धश्लोकत्रयम् एकमेव वाक्यम् । न तु **'देवेभ्यः शतावराः'** **'सूर्यादिभ्योऽधमाः'** **'मन्वादिभ्यश्चाधमाः'** इति [3]विधेयत्रयदर्शनाद् भिन्नं वाक्यम् । वाक्यभेददोषप्रसङ्गात् । वक्ष्यमाण-रीत्या एकवाक्यत्वसम्भवे च वाक्यभेदस्य दोषत्वात् । अत एवोक्तं **'सम्भवत्येकवाक्यत्वे वाक्यभेदो हि दूषणम्'** इति । न च विधेयत्रया-न्वयेनैव एकवाक्यत्वमस्त्विति वाच्यम् । विधेयत्रयस्यानुपपत्तेः । तथा हि **'शतावराश्च देवेभ्यः'** इत्येतत् **'मन्वादिभ्योऽधमाः'** इत्येतच्च विधातुं

---

१. वरुणाश्वि - क. २. पदात्रेय

३. विधेयदर्शनात् - ख., विधेयदर्श - क.

न शक्यत इति तद्व्याख्यानावसरे उपपादितम् । किन्तु **'सूर्यादिभ्योऽधमाः'** [१]इत्येकमेव विधेयम् ।

ततश्च सार्धश्लोकत्रयस्येयं योजना । पूर्वं तात्विकदेवानां परस्परं तारतम्यमुक्तम् । इदानीं कर्मदेवानां तत्समानां च सूर्यचन्द्र[२]यमरूपतात्विकदेवाधमत्वं वक्तुं 'कार्तवीर्यः' इत्यादिसार्धश्लोकत्रयं प्रवृत्तम् । तत्र ये **'सदैव विष्णुनाऽऽविष्टा विष्णोर्भिन्नाश्च'** इति इदं च विशेषणद्वयं कार्तवीर्यार्जुनादयो नांशावताराः किन्त्वावेशावतारा इति ज्ञापनार्थम्। कार्तवीर्य इति श्लोकोक्तव्याप्तदर्शिनः शतसङ्ख्यास्ते सर्वे राजमुख्याः।

तैत्तिरीयादिश्रुतौ **'देवेभ्यः शतावराः'** इति स्मृताः । बल्याद्याः कर्मदेवाश्च । न केवलमेतावत् । किन्तु ये तुम्बुरुप्रमुखा अष्टौ गन्धर्वास्तेऽपि । ऊर्वश्यादिका उत्तमाप्सरसोऽपि । एवं विश्वामित्र[३]मरीच्यादिसप्तर्षिभृगुनारदाख्यदशदेवर्षिव्यतिरिक्ता व्याप्तदर्शिनोऽखिला अपि नवतिसङ्ख्या ऋषयश्च । एवं मन्वादिभ्यः मनूनां मध्ये श्रेष्ठेभ्यः तापससस्वायम्भुववैवस्वतेभ्योऽधमा एकादशमनवश्च ।

सूर्यादिभ्योऽधमाः सूर्यचन्द्रयमेभ्यो वरुणाग्निमित्राश्विदेवव्यवधानेन कतिपयगुणैरधमा इति। एवं राजशतं, बल्याद्याः कर्मदेवाः गन्धर्वाष्टकम् ऊर्वश्याद्यप्सरसां षट्कम् [४]ऋषिनवतिः [५]एकादशमनवश्चाश्विपर्यन्ततत्वदेवाधमाः इति परस्परसमानाश्चेत्युक्तबृहद्भाष्यबलाल्लभ्यत इति बोध्यम् ।

ननु **'विश्वामित्रब्रह्मपुत्रान् ऋते चाप्यृषयोऽखिलाः'** इत्यत्र ऋषिनवतिर्ग्राह्येत्युक्तम् । तत्कथम्

---

१. इत्येव धेयम् - ख.
२. यमेति नास्ति - ख.
३. मारीच्यादि - ख.
४. ऋषिमतिः - ख.
५. एके दिशा - क.

**प्रजापाश्च तथा देवाः महाधीकारिणः स्मृताः ।**
**ऋष्यशीतिस्तथा सप्त पितरोऽप्सरसां शतम् ।।**
**गन्धर्वाणां शतं राज्ञां विंशदन्यासु जातिषु ।**
**अल्पाधिकारिणः प्रोक्ता अनधीकारिणः परे ।।**

(भा.ता.५.६.५. P.२८०)

इति पञ्चमस्कन्धतात्पर्यनिर्णये ऋष्यशीतेः स्पष्टमभिधानादिति चेत्, उच्यते । **'ऋषयोऽखिलाः'** इति वाक्ये कर्मदेवसमाना ऋषय इत्युपपादितम्। ते द्विविधाः गृहस्था यतयश्चेति। [1]तत्राद्याश्च्यवनादयः । अन्त्याः सनकादयः । **'सनादयो यतयः काममेव'** इत्यनुव्याख्याने, **'सनकाद्या नारदस्तु ऋभुर्हंसोऽरुणो यतिः । नैते गृहान् ब्रह्मसुता अवसन् ऊर्ध्वरेतसः'** इति भागवतादौ च तत्र तत्र सनकादीनां यतित्वाभिधानात् । द्विविधानामपि महर्षीणाम् अश्विदेवाधमत्वं कर्मदेवसाम्यं च दर्शयितुं ऋषिनवतिरित्युक्तम् ।

द्विविधेष्वपि कर्मदेवसाम्यस्याश्विदेवाधमत्वस्य चोपपादितत्वात् । **'ऋष्यशीतिस्तथा सप्त'** इत्यत्र तु गृहस्थानेव महर्षीनभिप्रेत्याशीतिसङ्ख्योक्तेति न तद्विरोधः ।

तथा हि । मुक्तियोग्यास्त्रिविधा इति तावत्सम्मतम् । तत्र य उत्तमा मुक्तियोग्यास्ते द्विविधाः । आधिकारिकास्तद्भिन्नाश्चेति । तत्र ये अपरोक्षज्ञानिनोऽपि गृहस्थाश्रमं स्वीकृत्य तदुचितं यज्ञादिकर्म कृत्वैव [2]ज्ञानसम्पादनेऽधिकृतास्ते आधिकारिकाः । यथा जनकादयः । एतदेवाभिप्रेत्य प्रमेयदीपिकायाम् - **'आधिकारिका इति पुरुषविशेषसञ्ज्ञा'** इत्युक्तम् । ते चाऽधिकारिका द्विविधाः । महाधिकारिणोऽल्पाधिकारिणश्चेति । तत्राऽद्याः प्रजापाश्चेत्यनेन दर्शिताः ।

---

१. तदाद्या वचनादयः - ख. २. ज्ञानसम्माने - क.

ऋष्यशीतिरिति [1]सपादश्लोकेन तु द्वितीयाः प्रदर्शिताः । ये तु ज्ञानिनो यत्याश्रमं स्वीकृत्य तदुचितैः शमादिभिरेव ज्ञानसाधनेऽधिकृतास्ते आधिकारिकभिन्नाः । यथा सनकादयः । ते च **'अनधीकारिणः परे'** इत्यत्र प्रदर्शिता इति बोध्यम् ।

एतेन ऋष्यशीत्यादीनां कथमल्पाधिकारित्वम्? कथं च सनकादीनाम् अनधिकारित्वम्? व्याप्तदर्शित्वेन देवसमानतया उत्तमाधिकारित्वादिति दूषणं परास्तम् । आधिकारिकत्वादि प्रमेयदीपिकानुसारेण पारिभाषिकमेव न तु मुख्यमित्युपपादितत्वाद् इति ।। १९ ।।

*अथ विंशतिकक्ष्या*

**(गङ्गा-पर्जन्यः-शामला-संज्ञा-रोहिणी विराट् (अनिरुद्धभार्या) एते षट्सङ्ख्याकाः प्राक्तनकक्ष्यास्थेभ्यः किञ्चित् अवराः)**

**गङ्गेति** । गङ्गा वरुणभार्या । पर्जन्य आदित्यः । सञ्ज्ञा सूर्यभार्या। उक्तेतरान्य इत्येतत्कक्ष्योक्तदेवाद्यपेक्षया गङ्गादयः किञ्चिन्नीचाः मित्रापेक्षया तु द्विगुणावराः **'पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च । द्विगुणा एव'** इति छान्दोग्यभाष्योक्तेः ।। २० ।।

*इति तृतीयश्लोकव्याख्यानम्*

## तारतम्यपञ्चश्लोकी

**एभ्योऽन्ये चाग्निजाया जलमयबुधश्चापि नामात्मिकोषा**
**चैवं भूमौ ततात्मा शनिरपि कथितः पुष्करः कर्मपोऽपि ।**
**येऽथाथो चाप्युतानामिह कथितसुरा मध्यभागे समास्ते**
**विष्ण्वाद्या नः पुनन्तु क्रमगदितमहातारतम्येन युक्ताः ।। ४ ।।**

---

१. सपादेति नास्ति - क.

*अथ एकविंशकक्ष्या*

**(कूर्मादयः अप्रसिद्धाधिकारिका देवाः प्राक्तनेभ्यो किञ्चिदधमाः)**

**एतेभ्येऽन्ये चेति ।** यद्यपि सुधायाम् इयं कक्ष्या नोक्ता । तथाऽपि **'तदन्ये तु ततोऽवराः'** इति अनुव्याख्यानव्याख्यावसरे **'तदन्ये येऽप्रसिद्धाधिकारा देवास्ते पर्जन्यादवराः'** इति सन्न्यायरत्नावल्यामुक्तेति ज्ञातव्यम् । एभ्य उक्तेभ्य अन्ये कूर्मादयः पर्जन्यात् किञ्चिदवरा इत्यर्थः । **'कूर्मो दृष्टो विष्णुपद्यां मयोक्तस्त्वमुत्तमो नास्त्यधिकस्तवेति । ऊचे गङ्गामुत्तमाम्'** इति भारततात्पर्यनिर्णये कूर्मस्य पर्जन्यसमानगङ्गावरत्वोक्त्या [१] पर्जन्यावरत्वमेव सिध्यति । अन्यथा तत्समानगङ्गावरत्वायोगादिति ध्येयम् । अत्र वक्तव्यम् एकोनविंशतिकक्ष्यायामुक्तेतरान्य इत्येतद्व्याख्यानावसरे उक्तप्रायम् ।

**(उक्तेऽर्थे सन्न्यायरत्नावलीसुधयोर्विरोधपरिहारः)**

नन्वेवं सति सन्न्यायरत्नावलीसुधयोर्विरोधः । तथाहि - तदन्ये उक्तेभ्योऽन्ये देवास्ततः शतान्तर्गतदेवताभ्योऽवरा अवरमनुसमाना इति सुधायां **'तदन्ये तु ततोऽवराः'** इत्येतद् व्याख्यातम् । तेन शतस्थान्तोक्तदेवातिरिक्ता नवकोट्यन्तर्गता देवा पर्जन्यादुत्तमा इति प्राप्तम् । अन्यथा पर्जन्योत्तमैकादशमनुसमानत्वाऽयोगात् । तथा च शतस्थान्तदेवातिरिक्तनवकोट्यन्तर्गतदेवानां पर्जन्यावरत्वप्रतिपादकसन्न्यायरत्नावलीविरोध इति चेत्, सत्यम् **'तदन्ये तु'** इत्यनेन शतस्थान्तदेवातिरिक्तनवकोट्यन्तर्गता देवा हि द्विविधाः । प्रसिद्धाधिकारा अप्रसिद्धाधिकाराश्चेति । तत्राऽद्यानां सुधायामेकादशमनुसमानत्वमुक्तम् । यथा

१. पर्वसामान्य - क., पर्जन्यांशत्वम् - क.

चैतत्तथोक्तेतरान्ये देवा इत्यत्रोपपादितम् । द्वितीयानां तु सन्न्याय-रत्नावल्यां पर्जन्यावरत्वमुक्तम् । अत एव तत्राप्रसिद्धाधिकारा देवा इत्युक्तम् । ततो न सन्न्यायरत्नावलीसुधयोर्विरोध इति ।

एतेन सन्न्यायरत्नावल्यां पर्जन्यादवरा इत्यत्र पर्जन्यपदेन शतान्त-र्गतदेवता लक्ष्यन्ते। [१]तेन नोक्तग्रन्थयोर्विरोध इति परास्तम् । उक्त-प्रकारेणोभयग्रन्थाऽविरोधसम्भवे निर्बीजलक्षणाकल्पनाया अनुचित-त्वादिति ।। २१ ।।

*अथ द्वाविंशकक्ष्या*

**(स्वाहा, कूर्माद्यपेक्षया किञ्चिदधमा पर्जन्यापेक्षया द्विगुणाधमा)**

**अग्निजायेति ।** स्वाहेत्यर्थः । अग्निभार्या गङ्गाधमकूर्माद्यपेक्षया किञ्चिन्नीचा। पर्जन्यापेक्षया द्विगुणाधमा । **'पर्जन्यमित्रशिखिनः'** इति छान्दोग्यभाष्यं स्वाधमापेक्षया पर्जन्यस्य गुणाधिकत्वोक्तेः । स्वाहाया एव पर्जन्याधमत्वस्य **'चोषा स्वाहा च पर्जन्यः'** इत्यनुव्याख्याने सूचित-त्वादिति ध्येयम् ।। २२ ।।

*अथ त्रयोविंशकक्ष्या*

**(स्वाहापेक्षया किञ्चिदवमो बुधः)**

**जलमयबुध इति ।** जलाख्यकलाभिमानी बुधः स्वाहापेक्षया किञ्चि-न्नीचः ।। २३ ।।

*अथ चतुर्विंशकक्ष्या*

**(अश्विभार्योषा बुधात्किञ्चिदवमा)**

**नामात्मिकोषा इति ।** [१]नामाख्यकलाभिमानिनी उषा अश्विभार्या

---

१. ततो न - क. १. नामात्ममानी - ख.

बुधात् किञ्चिदवरा । स्वाहायास्तु दशगुणाधमा । **'सर्व एते दशोत्तराः'** इति छान्दोग्यभाष्योक्तौत्सर्गिकप्रमाणादिति ध्येयम् ।। २४ ।।

*अथ पञ्चविंशकक्ष्या*

**(भूम्यभिमानी शनैश्चरो उषायाः किञ्चिदवमः)**

**भूमौ ततात्मेति ।** भूम्याख्यकलाभिमानी शनैश्चरोऽश्विभार्ययाः किञ्चिदून इति ज्ञेयम् ।। २५ ।।

*अथ षड्विंशकक्ष्या*

**(शनैश्चरादवमः पुष्करः)**

**पुष्कर इति ।** कर्माख्यकलाभिमानी पुष्करः शनैश्चरात् । किञ्चिन्नीचः । उषसस्तु दशगुणाधमः । उक्तादेव प्रमाणात् ।

**(पुष्करो न तत्त्वाभिमानी)**

अत्र केचित् - **'तत्वाभिमानिदेवेषु ह्यधमात् पुष्करादपि 'अधमः पुष्करो ज्ञेयः'** इति पुष्करस्य तत्वाभिमानित्वमाहुः । अन्यथा तत्वाभिमानिदेवेष्विति निर्धारणाऽयोगात् । [१]'जातिगुणक्रियासञ्ज्ञाभिः सजातीयसमुदायादेकदेशस्य पृथक्करणं निर्धारणमिति वृत्तिकारैस्तल्लक्षणाभिधानात् ।

अन्ये तु - **'देवेषु तात्त्विकेष्वन्त्यो नीचोऽस्या उषसः शनिः'** इति शनेस्तात्विकदेवत्वमाहुः । अन्यथा तात्विकदेवेषु मध्ये अन्त्य इति निर्धारणायोगात् । तदुभयमप्यनुपपन्नम् । शनेः, पुष्करस्य च तात्विकदेवत्वाभावात् । तथा हि तत्वाभिमानिनो देवास्तात्विकाः । तत्त्वशब्दश्च **'द्विविधं तत्वमिष्यते'** इत्यादाविव न प्रमेयवचनः । तथा सति

---

१. जातिद्रव्यक्रिया - क., जातिगौण - क.

कर्मजदेवानां तत्त्वाभिमानिदेवत्वप्रसङ्गात् । तेषामपि स्वीयग्रहकोशादिरूपप्रमेयाभिमानित्वाद् देवत्वाच्च। किन्तु तत्वशब्दो नदीवृध्यादिसञ्ज्ञावदर्थविशेषाणां सञ्ज्ञा । यथोक्तं तन्त्रसारे -

**पुरुषोऽव्यक्तं च महानहङ्कारो मनस्तथा ।**
**दशेन्द्रियाणि शब्दाद्या भूतेताः पञ्चविंशतिः ।**
**तत्त्वाख्याः कालमाये च नियतिर्मतिरेव च ।**
**विद्या कला प्रवृत्तिश्च द्वात्रिंशत्तत्वसङ्ग्रहः ।।**

(तं.सा.सं. ३.P.२४३-२४४)

इति । **'सर्वाण्येतानि तत्त्वानि'** (तं.सा.सं. ३.१४७) इति च । ततश्च महत्तत्त्वाद्यभिमानिनो देवास्तात्विका देवा इति पर्यवसितम्। अत्र पृथिव्यादिभूतानि द्विविधानि । असंसृष्टानि संसृष्टानि चेति । तत्र ब्रह्माण्डान्तःस्थानि संसृष्टानि । **'संसृष्टमण्डं तद्गं च समस्तं सम्प्रकीर्तितम्'** इत्युक्तेः (तत्व.सं.१०) । ब्रह्माण्डाद् बाह्यानि तु भूतानि असंसृष्टानि। **'असंसृष्टं महानहम् । बुद्धिर्मनः खानि दश मात्रा भूतानि पञ्च च'** (तत्व.सं.९.) इत्युक्तेः। तेषां [1]देवाः, भूदेवी वरुणः [2]वह्निः प्रवहः गणेशश्च ते पृथिव्यादिमहाभूतरूपतत्वानां ब्रह्माण्डान्तःस्थानां पृथिव्यादीनामपि **'कठिणत्वेन मेर्वादिः पृथिव्या अपि देवता धरादेवी'** इति । **'सप्तमाब्धेश्च बाह्योदस्य च वारिपः'** इति भूदेवीवरुणयोर्भूतभौतिकदेवतात्वमनुसन्धेयम् । शनिबुधपावकमरीचयस्तु न पृथिव्यादिमहाभूतदेवताः, मानाभावात् । किन्तु शरीरोपादानत्वेन तद्भागतया कलारूपाणां भौतिकानां पृथिव्यादीनां देवताः। **'तस्य सोमोऽन्नदेवता' 'वरुणो वीर्यदेवता' 'लोकाभिमानी पर्जन्यः कर्मात्मा पुष्करस्ततः'**

१. देवभूतादेवी - क. २. वह्निः प्रवह इति नास्ति ।

इत्यादिना अन्नादिकलादेवसाहचर्येण [1]शन्यादीनां पृथिव्यादिदेवतात्वस्या-भिहिततया पृथिव्यादिकलादेवतात्वावगमात् । एते च शन्यादयः कलारूपेष्वेव पृथिव्यादिषु तिष्ठन्ति। न तु तत्वरूपेषु । गीतातात्पर्यनिर्णये - **'स्थानेषु त्ववरेषां च परे सन्ति न चेतरे'** इति अधमदेवानामुत्तम-देवाभिमन्यमानेषु स्थानेषु स्थित्यभावोक्तेः ।

न च तत्र स्थितानां तदभिमानित्वं युक्तम्, अतः शन्यादीनां तत्व-देवत्वमेव नास्तीति कथं तेषां मध्ये शनेरधमत्वमुक्तमिति । पुष्करस्य तु तत्वाभिमानिदेवत्वप्रसक्तिरेव नास्ति । तदभिमतस्य कर्मण उक्तरीत्या तत्वरूपत्वाभावात् । एवं पर्जन्यादीनामपि न तत्वदेवत्वम् । तदभिम-न्यमानानाम् [2]इन्द्रियगोलकादीनां तन्त्रसारोक्ततत्वरूपत्वाभावात् । अतः पर्जन्यादीनां पुष्करान्तानां तत्वदेवत्वाभावात् कथं पुष्करस्य तत्वाभि-मानिदेवेष्वधमत्वं तदभावे च कथं निर्धारणसप्तमीप्रयोगः । यथोक्त-निर्धारणलक्षणाभावात् । यदपि पुष्करान्तदेवानां तत्वदेवत्वं निश्चित्य तदधमत्वं कर्मदेवानां वक्तुमुक्तं - 'कार्तवीर्यादिराजशतं बल्यादिस-प्तकं पितृसप्तकं तुम्बुर्वादिगन्धर्वाष्टकम् एकादशमनव ऊर्वशीप्रमुखा-द्विनवत्यप्सरसःश्रेष्ठाः विश्वामित्रब्रह्मपुत्रव्यतिरिक्तश्च्यवनौचथ्यादयो व्याप्तदर्शिशतान्तर्गत ऋषय इत्येते **'पुष्करात्तु दशाधमाः'** इति' ।

तदप्यप्रामाणिकं प्रमाणविरुद्धं च ।

**कलाभ्यश्चान्यदेवेभ्यः कर्म प्रत्यवरं यतः ।**
**कलाभ्यः पृथगुक्तं तत् पुष्करः कर्म चोच्यते ।।**

इति स्मृतौ पुष्करस्य कर्मदेवाधमात्वभिधानेन तत्समानराजशतादीनां च [3]पुष्कराद्दशाधमत्वोक्तावुक्तस्मृतिविरोधः ।

---

१. शून्या - क. २. इन्द्रगालवा - ख.
३. पुष्कराद्या शमाधमा - ख.

किञ्चानुव्याख्याने एकादशानां **'मनूनामश्विपश्चात् अन्ये ततोऽवराः'** इत्यश्विपश्चात्तनत्वमुक्त्वा **'च्यवनोचथ्यवैन्याश्च शशबिन्दुश्च हैहयः। तद्वच्च'** इति तदुत्तरवाक्येन च्यवनोचथ्ययोः कार्तवीर्यादीनामश्विदेवाधमैकादशमनुसमानत्वमुक्तम् । तेन कर्मदेवानां तत्समानानां मनूनाम् ऋषीणां राज्ञां पितॄणां गन्धर्वाणां [१]चाश्विदेवाधमत्वं सिद्धम् । ततश्च कर्मदेवाधमपुष्कराद्यधमत्वं कर्मदेवानां तत्समानानां च कथमुपपन्नं स्यात्। न च पुष्कारान्तदेवव्यवधानेनाश्विदेवाधमत्वं [२]कर्मदेवानामनुपपन्नमिति वाच्यम् । प्रकरणविरोधात्। तारतम्यप्रतिपादकोक्तानुव्याख्याने साक्षादधमत्वस्यैव प्रतिपादनात् । एतच्च तारतम्यप्रतिपादकानुव्याख्यानपर्यालोचनया स्फुटमवगम्यत इति ।

एवं विष्ण्वादीन् पुष्करान्तान् सर्वान् सम्प्रार्थ्य तेषां तारतम्यज्ञापकं किञ्चित्सङ्केतं करोति - **येऽथेति** । इह ग्रन्थे अथ अथो अपि उत ये त्वेतेषां शब्दानां मध्यभागे कथितसुरास्ते परस्परसमाः । क्रमेण गदितं भावे क्तः । क्रमेण यत्कथनं तेन ज्ञाप्य यन्महातारतम्यं तेन युक्ताश्च। तथाभूता विष्ण्वाद्या नोऽस्मान् पुनन्त्वित्यन्वयः ।। २६ ।।

*इति चतुर्थश्लोकव्याख्यानम्*

एवं **'विष्णुः सर्वोत्तमः'** इत्यादिना विष्ण्वाद्या नः पान्त्विति सामान्यतश्च पालनं प्रार्थितम् । इदानीं तध्देतुभूतं प्रणामादिकं च कुर्वन् आजानजदेवऋषिपित्रादीनामपि प्रणामं करोति - वन्द इति ।

**वन्दे विष्णुं नमामि श्रियमथ च भुवं ब्रह्मवायू च वन्दे**
**गायत्रीं भारतीं तामपि गरुडमनन्तं भजे रुद्रदेवम् ।**

---

१. चाश्वि इति नास्ति - क.  २. काम्य - ख.

[१] **देवीः वन्दे सुपर्णीमहिपतिदयितां वारुणीमप्युमां ताम्**
**इन्द्रादीन् काममुख्यानपि सकलसुरान् तद्गुरून् मद्गुरूंश्च ।।५।।**

**(सङ्क्षेपेण तारतम्यस्वरूपनिरूपणम्)**

अहं विष्णुं वन्दे । अथ श्रियं भुवं च नमामि । ब्रह्मवायू च वन्दे। गायत्रीं भारतीमपि वन्दे । गरुडमनन्तं रुद्रदेवं रुद्राणां पूज्यं सदाशिवं च भजे । देवीः जाम्बवत्याद्याः षट् विष्णुपत्नीर्वन्दे । सुपर्णीं सुपर्णस्य पत्नीम् । दाम्पत्यलक्षणपुंयोगविवक्षायां **'पुंयोगादाख्यायाम्'** इति ङीष् । वरुणस्येयं वारुणी । ताम् । अहिपतिदयितां शेषपत्नीम्। उमां च वन्दे। तान् इन्द्रादीन् काममुख्यान् सकलसुरानपि वन्दे। ब्रह्मवायू च वन्दे इत्यादिना पूर्वं समानदेवतावन्दनं पृथक् नामग्रहणपूर्वकं कृतम् । तद्वदेवेन्द्रकामयोरपि प्रणामलाभार्थम् इन्द्रादीन् काममुख्यान् इत्युक्तम् । ततश्चेन्द्रकामौ वन्दे । तदादीन् देवानपि समानान् साम्येन तरतमान्, तारतम्येन वन्द इत्युक्तं भवति ।

एवं विष्ण्वादीन् पुष्करान्तान् देवान् प्रणम्येदानीम् ऋष्यादीन् मनुष्योत्तमांश्च जीवान् प्रणमति। **तद्गुरून् इति।** ते सकलसुरा गुरवो येषामृषिचिरपितृदेवगन्धर्वमनुष्यगन्धर्वक्षितिपमनुष्योत्तमानां ते तद्गुरवः। तांश्च वन्द इत्यन्वयः ।

एवं विष्ण्वादीन् नरोत्तमान्तान् सर्वान् प्रणम्य स्वस्य साक्षाद्गुरूनपि प्रणमति - **मद्गुरूंश्चेति** । वन्द इत्यन्वयः।

*इति पञ्चमश्लोकव्याख्यानम् ।*

**'यथाक्रमपरा नृप । एकान्तभावोपगता वासुदेवं विशन्ति ते'**

---

१. देवीं - ख

इत्यनुव्याख्याने यथावत्तारतम्यज्ञानं मोक्षसाधनमित्युक्तम् । तज्ज्ञानार्थं यथावत्तारतम्यं सुधायामुक्तम् । तदनुसारेणात्र चतुःश्लोक्यां **'विष्णुः सर्वोत्तमः'** इत्यादिना **'पुष्करः 'कर्मपोऽपि'** इत्यन्तेन तत्वदेवानां कर्मदेवानां यथावत्तारतम्यम् उक्तम् । आजानजदेवानां मध्ये तारतम्याभावात् तदत्र नोक्तम् । आजानजदेवादिभ्यो ऋष्यादीनां तारतम्यमपि स्फुटत्वान्नोक्तम् । तदत्र प्रदर्श्यते ।

*सप्तविंशकक्ष्या*

**(वेदे येषां नामरूपाद्यनुक्तं ये च देवकुलोत्पन्नाः देवभृत्याश्च द्विविधास्त एव आजानजदेवाः। आजानजदेवाः कर्मदेवेभ्यः शतगुणाधमाः। शताधिकषोडशसहस्रकन्यकाः (ये पूर्वमग्निपुत्राः) ता अत्रैव ध्येयाः । अग्निपुत्रेषु कशेरुनामा किञ्चिदधिकः । शताधिकषोडशसहस्रस्त्रीभ्यः बाल्ये कृष्णभुक्ताः गोपाङ्गनाः द्विगुणाधमाः । अत्र काश्चन कात्यायनीव्रताद्यनुष्ठानेन कृष्णेनोद्वाहिताः । अपराश्चान्यैरुद्वाहिता अपि कृष्णभुक्ताः। द्विविधा गोपाङ्गना अपि परमाप्सरसः। एवं पितरः (१००) असुराः (३०) गन्धर्वाः (१००) अप्सरसः (१००) यक्षाः (७०) रक्षांसि (७०) चारणाः (३०) सिद्धाः (१००) विद्याधराः किन्नराः पिशाचाः भूताः एवमादयो देवयोनयः आजानजकक्ष्यानिविष्टाः। देवयोनीनां, मितसङ्ख्याकानाम् असुरादीनामाजानजकक्ष्याप्रवेशान्न सर्वरक्षःपिशाचाऽसुरादीनां देवत्वप्रवेशेन योग्यतातारतम्यभङ्गः ।)**

तत्राऽजानजदेवाः कर्मदेवेभ्यः शतगुणाधमाः । **ते ये शतमाजानजानां देवानामानन्दाः स एकः कर्मदेवानां देवानामानन्दः** इति तैत्तिरीय-

१. कर्मणाऽपि - क.

श्रुत्यादिपर्यालोचनया आजानजदेवानां कर्मदेवापेक्षया शतगुणाधमत्वलाभात् । **'कार्तवीर्यादिराजभ्यो देवभृत्याः शतावराः' आजानदेवास्ते प्रोक्ताः** इति बृहद्भाष्ये आजानदेवानां कार्तवीर्यादिराजापेक्षया शताधमत्वोक्त्या कार्तवीर्यादिसमानकर्मदेवापेक्षया शताधमत्वलाभाच्च ।

अत्र श्रुत्यादौ शतशब्दो बहुत्ववाची । तेनाऽजानजदेवानां कार्तवीर्याद्यपेक्षया शताधिकगुणैरवमत्वेऽपि न दोषः । अत्राग्निपुत्रा अपि ग्राह्याः । तेषामाजानजदेवसमानत्वस्य भारततात्पर्यनिर्णये अभिहितत्वात् । तथा हि -

**तत्रापश्यत् कन्यका भूमिपानां भौमानीताः समरे तान् विजित्य।**
**द्व्यष्टौ सहस्राणि शतं च रूपशीलोदारा अक्षता सद्व्रतस्थाः ।।**
**काश्चित्तत्रासन् देवगन्धर्वकन्याः तासां प्रधाना त्वष्ट्रपुत्री कशेरुः।।**

इत्युक्तानां शताधिकषोडशसहस्रसङ्ख्यानां कन्यानां **'पुत्रा अग्नेः पूर्वमासंश्च तेऽथ'** इत्यनेन पूर्वजन्मन्यग्निपुत्रत्वमुक्त्वा **'आजानदेवैः सर्वगुणैः समस्ताः स्वभावतोऽथेन्दिरावेशतोऽतः । गुणाधिकाः'** इत्यनेन स्वभावत आजानजदेवसमानत्वं [1]लक्ष्म्यावेशप्रयुक्तम् [2]आजानजदेवापेक्षया गुणाधिकत्वं चोक्तम् । तेन भारततात्पर्यनिर्णयपर्यालोचनया अग्निपुत्राणाम् स्वभावात् आजानजदेवसमत्वं सिद्ध्यति । अत्र पावकव्यतिरिक्तानामेवाग्निपुत्राणाम् आजानजदेवसमानत्वम्। न तु पावकस्य । तस्य कर्मदेवसमानतायाः प्रागुपपादितत्वात्। एवं योऽग्निपुत्रः कशेरुनाम्ना जातः स इतराग्निपुत्रापेक्षया किञ्चिदधिकः ।

**'तासां प्रधाना त्वष्ट्रपुत्री कशेरुः'** इति तत्रैवोक्तत्वात् । न च तत्राऽवेशप्रयुक्तमेवेतरकन्यापेक्षयाऽऽधिक्यं कशेरोरुक्तमिति वाच्यम्। उक्तवाक्ये आवेशानभिधानादिति ।

---

१. लक्षणावेश - क. २. अजानादि - क.

इदं तु बोध्यम् । अग्निपुत्रस्वरूपाः याः शतोत्तरषोडशसहस्र-वनितास्ताभ्यः कृष्णभुक्ताः गोपाङ्गनाः द्विगुणाधमाः । एकादश-स्कन्धतात्पर्यनिर्णये -

**कृष्णप्रियाभ्यो गोपीभ्यो भक्तितो द्विगुणाधिकाः ।**
**महिष्यष्टौ विना यास्ता कथिताः कृष्णवल्लभाः ।।**

इति स्मृतावुक्तार्थस्य सूचितत्वात् ।

अत्र भक्तिग्रहणमुपलक्षणम् । उपसंहारे **'भक्त्यादौ पुरुषोत्तमम्'** इति भक्त्यादिग्रहणात् । **'अष्टौ महिष्यः'** अष्ट महिषीर्विना याः कृष्णवल्लभा अग्निपुत्ररूपाः [1]शतोत्तरषोडशसहस्रसङ्ख्याकास्ताः कृष्ण-प्रियाभ्यो गोपीभ्यो गोपाङ्गनाभ्यो भक्तितो भक्त्यादिगुणैः द्विगुणा-धिकाः कथिता इति स्मृत्यर्थः ।

गोपाङ्गनाश्च द्विविधाः कृष्णेनोद्वाहिताः काश्चित् । **'कात्यायनी-व्रतधराः स्वपतित्वहेतोः कन्या उवाह भगवान्'** इत्युक्तेः । काश्चि-दन्यैरुद्वाहिताः कृष्णेन भुक्ताः ।

**'अपराश्च गोपीः अन्यैर्धृता अयुगबाणशराभिनुन्नाः। प्राप्ता निशा-स्वरमयत् शशिराजितासु'** इत्युक्तेः । द्विविधा अपि गोपाङ्गना पर-माप्सरसः । यथोक्तम् -

**'गोपाङ्गना अपि पुरा वरमापिरे यत् । संस्कारतः प्रथममेव सुसङ्गमो नो भूयात्तवेति परमाप्सरसः पुरा या'** ।। इति अत्र कात्यायनी-व्रतेत्यादिवाक्यत्रयं यदुदाहृतं तद्भारततात्पर्यनिर्णयगतं बोध्यम् ।

ननु के ते आजानजदेवाः? यत्समानत्वमग्निपुत्राणामुक्तमिति चेत्, अत्र केचिद् वदन्ति -

---

१. शतषोडश - ख.

**तुम्बुर्वादिशतं चैवोर्वश्याद्यप्सरसां शतम् ।**
**नारदादीनुचथ्यान्तान् विनोक्ता ऋषयोऽखिलाः ।**
**आजानदेवास्ते ज्ञेया ।। इति ।**

तच्चिन्त्यम् । मानाभावात्[1]।

**तुम्बुरुप्रमुखा ये च तथोर्वश्यादिका अपि ।**
**विश्वामित्रब्रह्मपुत्रान् ऋते चाप्यृषयोऽखिलाः ।।**

**आजानदेवास्ते प्रोक्ता** इति बृहद्भाष्यं मानमस्तीति चेन्न । उक्त-वाक्ये गन्धर्वाणाम् अप्सरसां च शतसङ्ख्याया अनभिधानात् । ब्रह्म-पुत्रपदेन नारदादिलाभेऽपि च्यवनोचथ्ययोरनुपस्थितेः । तद्व्यतिरिक्त-त्वात् । किञ्च बृहद्भाष्ये **'तुम्बुरुप्रमुखाः'** इति श्लोकानन्तरमेव, **'सूर्या-दिभ्योऽधमाश्चैव मन्वादिभ्यस्तथैव च । वैवस्वतो मनुर्नित्यं विष्णवा-वेशी ततोऽधिकः । कार्तवीर्यादिराजभ्यो देवभृत्याः शतावराः'** इति सार्धश्लोकः पठ्यते । तदनन्तरमाजानजदेवा इति पादः । तथा च तुम्बुरुप्रमुखा इति श्लोकस्य कथमन्तिमपादेनान्वयः । अन्वयबोधविरोधिना वैवस्वतो मनुस्त्वित्यादिश्लोकेन व्यवहिततया सन्निध्यभावात् । अन्व-यबोध[1]विरोधिशब्दव्यवधानाभावस्यैव सन्निधिपदार्थत्वात् । एवमाका-ङ्क्षाऽपि नास्ति। तथाहि - यस्य येन विनाऽन्वयाऽननुभावकत्वं तस्य तेन सहाऽकाङ्क्षेति तान्त्रिकाः । न चात्र तुम्बुरुप्रमुखा इति श्लोकस्याऽजानजदेवा इति पादं विनाऽन्वयाननुभावकत्वमस्ति । तेन विनैव सूर्यादिभ्योऽधमाश्चेत्यव्यवहितवाक्येनैव सहान्वयाऽनुभावक-त्वात् । तस्मान्नात्र आकाङ्क्षाऽस्ति। नाऽपि योग्यता। **'तथा ज्ञात्वा हरिं ध्यात्वा स्वान्तः पश्यन्ति केशवम्' ऋषयः केचित् नारदाद्या वहिस्त्वपि'** इति गीतातात्पर्यनिर्णये ।

---

१. विरोधिभेदशब्द - क., अन्वयविरोधिवोध - क.

ऋषयो द्विविधाः अन्तर्दर्शिनो व्याप्तदर्शिनश्चेति । **'ऋषीणां शतमेव च । एतेऽधिकारिणो व्याप्तदर्शने'** इति सूत्रभाष्यानुसारेण **'नारदाद्या वहिस्त्वपि'** इति वाक्यस्य व्याप्तं हरिं पश्यन्तीति व्याख्येयत्वात्। तत्र नारदादिद्वादशव्यतिरिक्तानां सनकादीनां व्याप्तदर्शिनाम् ऋषीणाम् आजानजदेवत्वं न युक्तम् । **'नसोश्च नासत्यदस्रौ क्रमशः प्रसूतौ । ततः सनाद्याश्च मरीचिमुख्याः'** इत्यादिभारततात्पर्यनिर्णयेऽश्विदेवानन्तरम् उत्पन्नत्वेनोक्तानां सनकादीनाम्, **'उक्तक्रमात् पूर्वभवस्तु यो यः श्रेष्ठः स स ह्यासुरकान् ऋते च'** इत्यनेन तदधमत्वस्योक्तत्वेन तेषां [१]कर्मदेवसमानत्वावगमात् । नाप्यन्तर्दर्शिनामृषीणामाजानजदेवत्वं सम्भवति । तेषामाजानजदेवाधमत्वात् । तथा हि - **'मध्यमा ऋषिगन्धर्वाः देवास्तत्रोत्तमा मताः'** इति ब्रह्मसूत्रभाष्ये ऋषीणां मध्यमाधिकारित्वं देवानामुत्तमाधिकारित्वं चोक्तम् । मध्यमाधिकारिणश्च **'ऋषयोऽन्तः प्रकाशाः'** इत्युक्तेः ।

ततश्चान्तर्दर्शिनाम् ऋषीणां कथमाजानजदेवत्वमुच्यते । उत्तममध्यमाधिकारित्वरूपविरुद्धधर्माधिकरणत्वेन परस्परं भेदस्य उत्तममध्यमभावस्य चावश्यम्भावात् । तस्मान्नात्रास्ति योग्यता । एकपदार्थे अपरपदार्थसंसर्गो योग्यतेति तल्लक्षणात् । अतः शाब्दबोधानुकूलानां सान्निध्याकाङ्क्षायोग्यतानामभावान्न तुम्बुरुप्रमुखा इति श्लोकस्याऽजानजदेवा पादेनान्वयः । किन्त्वव्यवहितेन सूर्यादिभ्योऽधमा इत्यनेनैव । [२]अव्यवहितान्वयसम्भवे व्यवहितान्वयाङ्गीकारस्य **'मूले लब्धफलो नैव शाखाग्रं गन्तुमिच्छति'** इतिवद् विरुद्धत्वात् । अन्यथा **'तेभ्यश्च पितरश्चिराः'** इति तदुत्तरवाक्यस्थेन चिराः पितर इत्यनेनान्वयमङ्गी-

---

१. कर्मदिवासमत्वात् - ख.　　२. व्यवस्थान्वयभवि - ख.

कृत्य तुम्बुर्वादीनाम् ऊर्वश्यादीनां विश्वामित्रादिभिन्नानां च ऋषीणां चिरपितृत्वमेवाङ्गीक्रियताम् । विशेषाभावादिति । तस्मान्नैतद् भाष्यं तुम्बुर्वादिशतम् ऊर्वश्यादिशतं नारदादिद्वादशव्यतिरिक्ताः सर्व ऋषय आजानजदेवा इत्यर्थे मानम् । अतो मानाभावान्नैत आजानजदेवाः किन्तु अनाख्याता देवकुलोत्पन्नदेवाश्चेति द्विविधा एव आजानदेवाः । एते च सर्वे देवभृत्या एव । तेन **'देवभृत्याः शतावराः' आजानदेवास्ते प्रोक्ताः'** इति बृहद्भाष्ये तेषामाजानजदेवत्वाभिधानं युज्यते ।

एतच्चाऽजानदेवद्वैविध्यं **'अनाख्याता देवता हि जाता देवकुले च याः । आजानदेवास्ताः'** इति तैत्तिरीयभाष्ये अभिहितम् । अनाख्याता इत्यस्यायमर्थः **'तत्वदेववत् कर्मदेववच्च नामविशेषैर्वेदे अनाख्याताः'** इति । अनाख्यातदेवानां देवभृत्यत्वं भारततात्पर्यनिर्णयेऽभिहितम् । तत्र **'सेवका ब्रह्मणश्चैव देवा वेदाश्च सर्वशः'** इत्यनेन सर्वेषां देवानां ब्रह्मभृत्यत्वाभिधानात् । एवमिन्द्रादिदेवभृत्यत्वमपि तत्र तत्रोक्त-मनुसन्धेयम् ।

**जाता देवकुले च इति ।** या देवकुले जाता देवतास्ताश्चाऽजानजदे-वता इति योजना । ननु **'जाता देवकुले च याः'** इत्यनेन देवकुलोत्पन्ना देवा उक्तास्त इति चेद् उच्यते -

**देवसर्गश्चाष्टविधो विबुधाः पितरः सुराः ।**
**गन्धर्वाप्सरसः सिद्धाः यक्षरक्षांसि चारणाः ।।**
**भूतप्रेतपिशाचाश्च विद्याध्राः किन्नरादयः ।**

इति तृतीयस्कन्धैकादशाध्यायगते ये पित्रादयोऽभिहितास्ते सर्वेऽपि देवकुलोत्पन्नदेवाः । तत्र देवसर्गस्याष्टविधत्वमुपपादयितुं **'विबुधाः**

**पितरः'** इत्यादिना देवानामेवोक्तत्वात् । अन्यथाऽसङ्गतिप्रसङ्गात् । ततश्च पित्रादीनां देवत्वमनेन वाक्येन सिद्धम् । [1]तथा जातिभेदेन देवानां चतुर्विधत्वात् कथं देवसर्गस्याष्टविधत्वम् इत्याशङ्कानिरासार्थं तात्पर्यनिर्णये - (भा.ता.३.१२.२७. P.१४६)

**प्रोक्ता अष्टविधा देवाः विबुधाः सर्व एव तु ।**
**पितॄणां शतमेवात्र असुरास्त्रिंशदेव च ।**
**गन्धर्वाप्सरसां चैव द्विशतं परिकीर्तितम् ।**
**सप्ततिर्यक्षरक्षस्सु त्रिंशच्चारणजातिषु ।**
**शतं सिद्धास्तथान्यास्तु सप्ततिः सर्वजातिषु ।**
**वैकारिकेषु देवेषु एते वै मुग्धभोगिनः ।**
**अभोगिनस्तदन्ये तु देवा एते ततः स्मृताः ।**

इत्यनेन देवानां [2]विभाजकोपाधिपुरस्कारेणाष्टविधत्वमुक्तम् । तद्वाक्यं च पित्रादीनां देवत्वे स्पष्टं प्रमाणम् । तत्रोपक्रमे उपसंहारे च पित्रादीनां देवत्वाभिधानात् 'एते वै मुग्धभोगिनः' इत्यनेन पित्रादीनां देवलिङ्गाभिधानाच्च अन्येषामीषद्भोगित्वहेतुत इति पूर्ववाक्यानुसारेण मुग्धभोगिन इत्यस्येषद्भोगिन इत्यर्थः । ईषद्भोगश्च यज्ञाङ्गहविरादिभोग एवेति मुग्धभोगिन इत्यनेन यज्ञभोक्तृत्वरूपदेवलिङ्गमुक्तमिति ज्ञातव्यम् ।

ननु यदि पित्रादयः सर्वेऽपि देवास्तदाआजानजदेवानां पितॄणां गन्धर्वाणां च शास्त्रोक्तपरस्परशतगुणतारतम्यमनुपपन्नं स्यात् । एवमसुराणां राक्षसानां पिशाचानां च देवत्वे **'दैत्यरक्षः पिशाचकाः। मर्त्याधमाश्चतुर्धैव तमोयोग्याः प्रकीर्तिताः'** इति तेषां तमोयोग्यत्वा-

---

१. कथाज्ञाति भेदेन - क.  २. विभज्य कोपाधिक्य - ख.

भिधानमयुक्तं स्यात्। देवानां तमोयोग्यत्वाभावादिति चेत्, उच्यते । **'प्रोक्ता अष्टविधाः'** इति वाक्ये सङ्ख्याविशेषपुरस्कारेणैव पित्रादीनां देवत्वमुक्तम् । तेन सङ्ख्याविशेषविशिष्टा ये पित्रादयस्त एव देवाः तद्व्यतिरिक्ता एव पित्रादयश्चिरपितृगणे गन्धर्वगणे तमोयोग्यगणे च ग्राह्याः । अतो न शास्त्रोक्ततारतम्यविरोधः । नाप्यसुरादीनां तमोयोग्यत्वविरोध इति। तदनेन भागवतवाक्येन तत्तात्पर्यनिर्णयो-क्तप्रमाणेन च पित्रादीनां देवत्वं सिद्धम् । तत्राऽद्यपद्येन पित्राद्याः सर्वेऽपि ग्राह्याः । उक्तभागवतानुसारात्। 'देवयोनयः' इत्यस्य देवा योनयो मूलकारणानि येषां त इति विग्रहः। एवं चोक्तविष्णुपुराण-वाक्यात् पित्रादीनां देवकुलोत्पन्नत्वसिद्धिः ।

एवं -

**विद्याधरोऽप्सरोयक्षरक्षोगन्धर्वकिन्नराः ।**
**पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ।।**

इत्यमरकोशेन विद्याधरादीनां देवकुलोत्पन्नत्वसिद्धिः । अतो देवकुलो-त्पन्नत्वाद् देवत्वाच्च सङ्ख्याविशेषविशिष्टाः पित्रादय एव **'जाता देवकुले'** इत्यत्र विवक्षिताः । तस्मात्तेषामाजानजदेवत्वमवधेयम् ।

यदपि बृहद्भाष्यबलेन आजानजदेवानां देवभृत्यत्वमुक्तं तदपि सङ्ख्याविशेपविशिष्टानां पित्रादीनाम् -

**सर्वज्ञास्तैः सहाऽराध्याः भक्तास्तेष्वन्तरेव च ।**
**नृत्यगानादिकर्तारः वाहनादिकृतस्तथा ।।**
**सिद्धसिद्धेतिवक्तारश्चाराश्चैषां क्वचित् क्वचित् ।**
**सेवाकरा इति ह्येते भेदैरष्टविधा मताः ।।**

(भा.ता.३.१२.२७. P.१४६)

---

१. साङ्ख्यविशेष - क.

इति तृतीयस्कन्धतात्पर्यनिर्णयगतप्रमाणसिद्धम् । अत्र यद्यपि तैः सहाऽराध्या इत्यनेन पितॄणां देवैः सह पूज्यत्वमेवोक्तं न तु देवभृत्यत्वम् । तथाऽपि **'धर्मराजः पितृपतिः'** इत्यादौ यमस्य पितृपतित्वोक्तेः पितॄणां यमभृत्यत्वेन देवभृत्यत्वं स्वयमूह्यम् ।

**'भक्तास्तेष्वन्तरेव च'** इत्यनेनासुराणां देवभृत्यत्वं सूचितम्। अन्तरेव देवेषु भक्तिं कुर्वन्ति बहिस्तु भृत्यमनस्समाधानाय देवान् द्विषन्तीति 'भक्ताः' इति वाक्यस्यार्थः । तेन [1]देवभक्तत्वादसुराणां देवगणदेवभृत्यत्वसिद्धिः । एतदेव प्रमाणं मूलीकृत्य सुधायाम् **'अनुव्रता यत्र सुरासुरार्चिताः'** इत्यनुव्याख्यानव्याख्यावसरे **'असुराः साधवः सन्ति'** इत्युक्तम् । गन्धर्वाप्सरसां देवभृत्यत्वं तु नृत्तगानादिकर्तार इत्यनेन सिध्यति । तस्यार्थः, आदिपदेन चतुर्विधवाद्यवादनं गृह्यते । वाद्यचातुर्विध्यं च -

**ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् ।**
**वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् ।।**
**चतुर्विधमिदं वाद्यम् .................. ।**

इत्यमरकोशादवगन्तव्यम् । ततश्च **'नृत्यगानादिकर्तारः'** इत्यनेन गन्धर्वाणामप्सरसां च देवभृत्यत्वं सूचितम् ।

**वाहनादिकृत इति** । वाहनं शिविकारथाश्वगजात्मकम् । **'सर्वं स्याद् वाहनं यानम्'** इत्यमरोक्तेः । तेन शिबिकावाहनरथप्रवर्तनाश्वबन्धनादिव्यापारो लक्ष्यते । आदिपदेन केषाञ्चिद्रथप्रवर्तकत्वेन केषाञ्चिद् गजाश्वबन्धकत्वेन केषाञ्चिद् दूतत्वादिना देवभृत्यत्वं ज्ञातव्यम् । **'सिद्धसिद्धेति वक्तारः'** इत्यनेन सिद्धानां देवभृत्यत्वं सूचितम्। सुरकार्यं सिद्धं सिद्धमिति वक्तृत्वेन तेषां [2]देवसेवाकारित्वात् **'चाराश्चै-**

१. देवभृत्यगणत्व - ख.          २. देवायास - क.

**षाम्'** इत्यनेन चारणानां 'देवभृत्यत्वमुक्तम् । चाराणां भृत्यत्वस्य प्रसिद्धेः । चारणानां देवचारत्वं च **'चारणादेव चारकाः'** इति बृहद्भाष्य-सिद्धम् । क्वचित् क्वचित् कार्यविशेषे एषां देवानां सेवाकरा इत्यनेन भूतप्रेतादीनां देवभृत्यत्वमुक्तम् । **'किन्नरादयः'** इत्यादिपदेन गुह्यका नागाश्च ग्राह्याः । तत्र गुह्यकानां कुबेरभृत्यत्वं **यक्षराट् गुह्यकेश्वरः** इति कुबेरस्य गुह्यकस्वामित्वोक्तेः - **'वरुणस्यानुगाः नागाः'** इति भारततात्पर्यनिर्णये नागानां वरुणभृत्यत्वस्योक्तत्वादित्यादि विवेक्त-व्यम् । तस्मादुक्तप्रमाणेन पित्रादीनां देवभृत्यत्वावगमात् । बृहद्भा-ष्योक्तरीत्याऽपि तेषामाजानजदेवत्वसिद्धिरिति । तदेवं तैत्तिरीय-भाष्योक्तरीत्या आजानजदेवाः द्विविधाः अनाख्याता देवकुलोत्पन्ना-श्चेति ग्राह्यम्। आजानजदेवशब्दस्तु **आजानो नाम देवलोकविशेषः। तत्र जाता देवा आजानजदेवा** इति वेदभाष्यानुसारेण द्रष्टव्यः । बृह-द्भाष्ये तु **'आजाना इन्द्रादिदेवाः । आजानदेवा इन्द्राद्याः तेभ्यस्तेऽवरा यतः'** इति स्मृतेः । आजानेभ्यो जाता देवा आजानजदेवा इति आजानजदेवशब्दार्थ उक्तः । **इत्याजानजदेवकक्ष्या** ।। २७ ।।

### *अथ अष्टाविंशकक्ष्या*

**(व्याप्तदर्शिनोऽन्तर्दर्शिनश्चेति ऋषयो द्विविधाः)**

अथ ऋषय उच्यन्ते । ते शतकोटिसङ्ख्याः । यथोक्तं षष्ठस्कन्धता-त्पर्ये चतुर्दशाध्याये- **'नवकोट्यस्तु देवानां ऋषयः शतकोटयः'** इति। ते द्विविधाः। व्याप्तदर्शिनोऽन्तर्दर्शिनश्चेति । **'तथा मत्वा हरिं ध्यात्वा स्वान्तः पश्यन्ति केशवम्' 'ऋषयः केचिद् ऋषयः' 'नारदाद्या बहिस्त्वपि'** इति गीतातात्पर्यनिर्णयबलेनोक्तद्वैविध्यावगमात् । यद्यपि **'नारदाद्या**

---

१. दिका - ख.

**बहिस्त्वपि'** इति नारदादीनाम् अन्तर्बहिश्च भगवद्दर्शनमात्रमुक्तम् । तथाऽपि **'अप्रतीका देवता हि ऋषीणां शतमेव च । एतेऽधिकारिणो व्याप्तदर्शने'** इति सूत्रभाष्यानुसारेण **'नारदाद्या बहिस्त्वपि'** इत्येतद् व्याप्तं हरिं पश्यन्तीति व्याख्येयम् । अन्यथा तद्विरोधात् । एवं च **'नारदाद्या बहिस्त्वपि'** इति वाक्यबलेन नारदाद्याः शतसङ्ख्याका ऋषयो व्याप्तदर्शिन इति सिध्यति ।

**(अन्तर्दर्शिनो ऋषयः आजानजदेवापेक्षया शतावराः)**

[१]तत्रान्तर्दर्शिनः सर्वेऽपि ऋषयः आजानजदेवापेक्षया शतगुणाधमाः। किमत्र मानमिति चेत्, [२] सामान्यसिद्धिपरिशेषाविति ब्रूमः। तथा हि- **'पितृगन्धर्वपूर्वाश्च मुनयो देवताः'** इति **'सात्विका त्रिविधास्तत्र श्रेष्ठा एवोत्तरोत्तराः'** इति स्पष्टं पितृगन्धर्वाद्यपेक्षया मुनीनां तदपेक्षया देवानामुत्तमत्वावधारणात् । एवम् **'ऋषिभ्यस्तूत्तमा देवाः'** इति छान्दोग्यभाष्ये ऋषीणां सर्वदेवाधमत्वं सूचितम् । एवं भारततात्पर्यनिर्णये तृतीयाध्याये - **'देवाश्च सर्वे क्रमशः प्रसूताः । ततोऽसुराद्या ऋषयो मनुष्या जगद्विचित्रं च विरिञ्चतोऽभूत्'** इत्यत्र ऋषीणां सर्वदेवाधमत्वं सूच्यते । [३]'उक्तक्रमात् । पूर्वोत्पन्नानां श्रेष्ठत्वमनन्तरोत्पन्नानां तु तदधमत्वमिति स्पष्टमभिहितत्वात् । न चैवमृषीणामसुरापेक्षयाऽधमत्वप्रसङ्गः । तदनन्तरोत्पन्नत्वादिति वाच्यम् । **'आसुरकान् ऋते'** इत्यनेन तद्व्यतिरिक्तेष्वेवायं नियम इति तत्रैव स्पष्टमभिहितत्वात् । एवं बृहद्भाष्ये -

---

१. तत्राद्यन्त - क. २. सामान्यसिद्धिशेषात् - ख.

३. उक्तक्रमात् पूर्वभवस्तु यो यः श्रेष्ठः स स ह्यासुरकान् ऋते च इत्युत्तरवाक्ये ।

**द्वात्रिंशल्लक्षणैर्युक्ताः वायुत्वपदयोग्यकाः ।**
**अष्टाविंशल्लक्षणैश्च गिरीशपदयोगिनः ।**
**चतुर्विंशतिमारभ्य षोडशादासुराः स्मृताः ।**

इति देवादीनां लक्षणनिमयमुक्त्वा **'अष्टकाद् ऋषयः प्रोक्ताः'** इत्यनेन ऋषीणां देवापेक्षया न्यूनलक्षणाभिधानाद् ऋषीणां सर्वदेवाधमत्वं ज्ञायते । अन्यथा ऋषीणां देवानां न्यूनलक्षणवैशिष्ट्यायोगात् ।

तथा **'ऋष्याद्या मध्यमा मताः'** इति एकादशस्कन्धतात्पर्यनिर्णये च ऋषीणां मध्यमाधिकारित्वमुक्तम् । ततोऽपि ऋषीणां देवाधमत्वसिद्धिः। अन्यथा देवानामुत्तमाधिकारित्वाऽयोगात् । तदेवं गीतातात्पर्यनिर्णयादि-बहुग्रन्थपर्यालोचनया ऋषीणां देवाधमत्वं तावत् सिद्धम् ।

तेषां देवापेक्षया शतगुणाधमत्वमपि भारततात्पर्यनिर्णयादिसिद्धम्। तथा हि - भारततात्पर्यनिर्णये त्रिंशाध्याये

**वैष्णवेष्वपि मर्त्यैर्यत् कृतं [1]शतगुणं ततः ।**
**गान्धर्वं कर्म तस्माच्च पितृभिर्मुनिभिस्ततः ।**
**देवशक्रशिवब्रह्मकृतं तस्मात् क्रमेण च ।**
**शतोत्तरमिति ज्ञेयम् ..................... ।**

इति मुनीनामाजानजदेवेभ्यः शताधमत्वं सूचितम् । तथा हि **'तस्माच्च पितृभिर्मुनिभिस्ततः देव'** इत्यादिना देवगन्धर्वकृतं यद् यज्ञादिकर्म तस्मात् पितृकृतं कर्म शतोत्तरं तस्माच्च मुनिकृतं कर्म तस्माद्देवकृतं कर्म शतोत्तरमित्यभिहितम् । उपक्रमोपसंहारयोः शतगुणमिति शतोत्तरमिति चोक्तत्वात् । तेन पित्रपेक्षया मुनीनां तदपेक्षया च देवानां शतगुणाधि-कत्वं सिध्यति। अन्यथा कर्तॄणां शतगुणतारतम्याभावे [2]तत्कृतकर्मणां

---

१. दशगणं  २. तत्कर्मकर्तॄणां - क.

शतोत्तरत्वाऽयोगात्। **'स्वाधिकाराधिको यत्नः कथञ्चिन्नोपपद्यते'** इति स्मृतौ योग्यतातिरेकेण साधनानुष्ठाननिषेधात् ।

नन्वत्र सर्वत्र देवशब्देन देवताशब्देन कर्मदेवता वा तात्त्विकदेवता वा गृह्यतामिति चेत्, सामान्ये प्रमाणानां पक्षपात इति न्यायेन सङ्कोच-कारणाभावेन च देवदेवताशब्दयोः सर्वदेवतापरत्वात् । **'देवाश्च सर्वे क्रमशः प्रसूताः'** इति भारततात्पर्यनिर्णये सर्व इति विशेषणवैयर्थ्याच्च। एवं चोक्तबहुप्रमाणबलाद् ऋषीणां [1]सर्वदेवाधमत्वेऽङ्गीकार्ये तदन्तर्गता-जानजदेवाधमत्वमपि सिध्यति । अन्यथा ऋषीणां सर्वदेवाधमत्वाऽयो-गात् । भारततात्पर्यनिर्णयोक्तार्थान्यथानुपपत्या तु तेषामाजानजदे-वेभ्यः शतगुणाधमत्वं सिध्यति ।

किञ्च स्पष्टमेव ऋषीणां सर्वदेवेभ्यः शताधमत्वं भारततात्पर्य-निर्णयेऽभिहितम् । तेषाम् **'ऋष्यादयः क्रमश ऊनगुणाः शतांशात्'** इति तेषामित्यनेन प्रकृतसर्वदेवपरामर्शः । तेनेष्टसिद्धिरिति बोध्यम् । तदिदम् आजानजदेवेभ्यः [2]शतगुणाधमत्वं न तावद् व्याप्तदर्शिनाम् ऋषीणां युक्तम् । तदन्तर्गतानां नारदादीनां यथायथं तात्विकदेवकक्ष्या-स्वेवोक्तत्वेनाऽजानजदेवाधमत्वाऽयोगात् । न चान्तर्दर्शिव्याप्तदर्शिव्यति-रिक्तानाम् ऋषीणाम् आजानजदेवाधमत्वमत्रोच्यत इति वाच्यम् । तेषामेवाप्रामाणिकत्वात् । अतः परिशेषादन्तर्दर्शिनामृषीणामुक्त-वाक्येष्वाजानजदेवाधमत्वमुच्यत इत्यवश्यमङ्गीकार्यम् । भारततात्पर्य-निर्णयबलाच्च शतगुणाधमत्वं चाङ्गीकार्यम् । एवञ्च **'देवर्षिपितृपनराः'** इति तत्वसङ्ख्याने, **'देवान् ऋषीन् पितृन् यक्षगन्धर्वान्'** इति बृहद्भाष्ये

१. सर्वाधमत्वे - क.  २. शतगुणात्वं - क.

च देवपितृमध्ये ऋषिगणनमुपपद्यते। अन्तर्दर्शिनां तेषामाजानजदेवेभ्यः शतगुणाधमत्वाद् इति ।

यत्तु **'ते ये शतं पितृणां चिरलोकलोकानामानन्दाः स एकः आजानजानां देवानामानन्दः'** इति श्रुत्यादिषु आजानजदेवेभ्यः पितृणां शतगुणाधमत्वमुक्तं तत्र शतशब्दो बहुत्वार्थकः । अन्यथा पितृमुनिदेवानां शतोत्तरत्वप्रतिपादकोक्तभारततात्पर्यनिर्णयविरोधात्। तेनाजानजदेवानां पितृभ्यो दशसहस्रगुणाधिकत्वलाभात् । एतदेवाभिप्रेत्योक्तं भारततात्पर्यनिर्णये - **'शब्दो बहुत्ववचनः शतमित्यतश्च श्रुत्यन्तरेषु बहुधोक्तिविरुद्धता न'** इति ।

ननु यद्येवमन्तर्दर्शिनामृषीणामाजानजदेवाधमत्वं स्यात्, तदा **'भूपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः । देवैः सहितगन्धर्वा ऋषयो देवतास्तथा'** इति बृहद्भाष्यविरोधः । तत्र देवैः सहितगन्धर्वा ऋषय इति ऋषीणाम् आजानजदेवसमानत्वाभिधानाद् इति चेत्, उच्यते । उक्तवाक्ये देवशब्देनाऽजानदेवा ग्राह्याः । **'पितरश्चिराः आजानजाः कर्मजाश्च'** इत्यादौ [1]चिरपित्रपेक्षया आजानजदेवानामुत्तमत्वाभिधानेन [2]तत्समाख्यानादत्रापि तथैव व्याख्येयत्वात् । गन्धर्वपदेन च **'गन्धर्वास्तत्परे शतम् आजानजदेवाः'** इत्युक्ता देवगन्धर्वापेक्षया उत्तमाः शतसङ्ख्या गन्धर्वा ग्राह्याः । उत्तमगन्धर्वापेक्षया पितृभ्यो गन्धर्वाणामधिकत्वं च युज्यत इति बृहद्भाष्योक्तेः । ऋषिपदेन च व्याप्तदर्शिन एव ग्राह्याः । तादृशगन्धर्वसाहचर्यात् । व्याप्तदर्शिदेवसाहचर्याच्च । न त्वन्तर्दर्शिनः । **'देवा वा व सर्वप्रकाशाः ऋषयोऽन्तःप्रकाशाः'** इति सूत्रभाष्येऽन्तर्दर्शिनामृषीणां सर्वदेवाधमत्वावगमेन व्याप्तदर्शिदेवसहपाठ-

---

१. चरपात्तेक्षया - क. २. सङ्ख्यातनापि - क.

विरोधात् । ततश्चिरपितृभ्यः आजानजदेवैः सहिताः शतगन्धर्वा उत्तमाः । तेभ्यो व्याप्तदर्शिनो ऋषयः कर्मदेवाद्याश्चोत्तमा इत्यर्थः । तथा च देवैः सहितेति वाक्यबलेन नान्तर्दर्शिनामृषीणामाजानज-देवसमानत्वं लभ्यत इति तेषामाजानजदेवाधमत्वोक्तौ नोक्त-बृहद्भाष्यविरोध इति ।

न च **'ऋषयो देवतास्तथा'** इत्यस्यैकवाक्यतया व्याख्याने व्याप्तदर्शि-नामृषीणां कर्मदेवसाम्यं स्यादिति वाच्यम् । इष्टापत्तेः । यथा चैतत्तथा **'च्यावनोचथ्यसञ्ज्ञौ'** इत्येतद्व्याख्यानावसरे उपपादितं तत्रैव द्रष्टव्यम् इति ऋषिकक्ष्या ।। २८ ।।

*अथ एकोनत्रिंशकक्ष्या*

**(ऋष्यपेक्षया चिरपितरः शताधमाः)**

ऋष्यपेक्षया '[१]दशोत्तरशतव्यतिरिक्ताः सर्वे चिरपितरः शतगुणाधमाः। उक्तार्थापत्तेः ।

**अन्येभ्यस्तु विमुक्तेभ्य आनन्दश्चक्रवर्तिनाम् ।**
**मुक्तानां हि शतोद्रिक्तः पितॄणां तेभ्य एव च ।**
**तेभ्यो ऋषीणां मुक्तानाम् .................... ।**

इति बृहद्भाष्ये चिरपित्रानन्दस्य ऋष्यानन्दापेक्षया शतावरत्वलाभाच्च। अत्र पितृत्रयं शतस्थदेवतासमानमित्युक्तम् । पितृसप्तकं तु कर्मदेव-तासमानमित्युक्तम् । पितृशतं त्वाजानजदेवत्वेनोक्तम् । अतस्तद्व्यावृत्यै दशोत्तरशतव्यतिरिक्ता इति विशेषणं बोध्यम् ।। २९ ।।

---

१. दशव्यति - क.

*अथ त्रिंशकक्ष्या*

(अष्टोत्तरशतगन्धर्वातिरिक्ताः देवगन्धर्वाश्चिरपित्रपेक्षया शतगुणाधमाः)

अष्टोत्तरशतगन्धर्वातिरिक्ताः सर्वेऽपि देवगन्धर्वाश्चिरपित्रपेक्षया शतगुणाधमाः । अत्र तुम्बुर्वादिगन्धर्वाष्टकं कर्मदेवतासमानमित्युपपादितम् । तद्व्यतिरिक्तगन्धर्वशतं त्वाजानजदेवकक्ष्यायां ग्राह्यमित्युक्तम्। अतस्तद्व्यावृत्त्यै अष्टोत्तरशतगन्धर्वातिरिक्ता इति विशेषणम् ।

अष्टोत्तरशतगन्धर्वातिरिक्ताः सर्वेऽपि देवगन्धर्वाश्चिरपितृभ्यः [१]शतावरा इत्यत्र प्रमाणं तु -

**कर्मदेवगणा अष्ट गन्धर्वास्तत्परे शतम् ।**
**आजानदेवास्तेभ्योऽन्ये पितृभ्यश्च शतावराः ।।**
**स्वमुखेनैव देवैर्य आज्ञाप्या सर्वदा गणाः ।**
**आख्याता देवगन्धर्वाः ...................... ।।**

इति बृहद्भाष्यमिति बोध्यम् ।

(गन्धर्वाः नानाविधाः)

**गन्धर्वास्तु सदा युद्धरता देवानुगा यतः ।**
**तदशक्तौ तु देवानां युध्यन्ते स्वामिनो यतः ।**
**केचिद् गानरता नित्यं गन्धर्वा नर्तकाः परे ।**
**केचिद् वाद्यरता नित्यं ...................... ।**

इति बृहद्भाष्योक्तप्रमाणेन गन्धर्वाणां नानाविधत्वमुक्तम् ।

तदनुसारेण नानाविधत्वं ज्ञेयमिति दिक् ।

---

१. शतदशा - क.

**(व्याप्तदर्शिमुनिशतव्यतिरिक्ताः शतकोटिसङ्ख्याका ऋषयः देवगन्धर्वसमाना इति पक्षनिरासः)**

अत्र केचित् -

व्याप्तदर्शिमुनिशतव्यतिरिक्ताः [१] शतकोटिसङ्ख्याका ऋषयो देवगन्धर्वसमाना इत्यभिप्रेत्य,

**तेभ्यः शतावरा देवगन्धर्वाः परिकीर्तिताः ।**

**मुनयोऽत्र परिग्राह्याः शतोनशतकोटयः ।।**

इति कारिकां चक्रुः । तच्चिन्त्यम् । प्रमाणविरोधात् । अप्रामाणिकत्वाच्च। तथा हि -

**'पितृगन्धर्वपूर्वाश्च मुनयो देवताः'** इति गीतातात्पर्यनिर्णये **'गान्धर्वं कर्म तस्माच्च पितृभिर्मुनिभिस्ततः'** इति भारततात्पर्यनिर्णये चान्तर्दर्शिनाम् ऋषीणां देवगन्धर्वोत्तमचिरपित्रपेक्षयोत्तमत्वं प्रतिपाद्यत इत्युपपादितमृषिप्रकरणे । ततश्चान्तर्दर्शिनामृषीणां देवगन्धर्वसमानत्वाभिधाने [२]निर्णयद्वयविरोधः । न हि तदपेक्षयोत्तमानां तत्साम्यं सम्भवति । विरोधादिति । तस्मात् प्रमाणविरोधः सुस्थः । अप्रामाणिकत्वं तु स्फुटमेव । अन्तर्दर्शिनो मुनयो देवगन्धर्वसमाना इत्यर्थप्रतिपादकश्रुत्यादेरभावात् ।

न च **'मध्यमा ऋषिगन्धर्वाः'** इति सूत्रभाष्यमेव ऋषीणां गन्धर्वसाम्ये मानमिति वाच्यम् । तस्य ऋषिगन्धर्वाणां मध्यमाधिकारित्वप्रतिपादने तात्पर्येण तत्साम्यप्रतिपादने तात्पर्याभावात् । अन्यथोक्तगीतातात्पर्यनिर्णयादिविरोधात् ।

---

१. दशकोटि - क.　　　२. निर्णयविरोधः - क.

किञ्च **'मध्यमा ऋषिगन्धर्वाः'** इति तेषां मध्यमाधिकारित्वोक्ति-मात्रेण परस्परेण साम्यं तर्हि पितृगन्धर्वक्षितिपानामपि मुनिसाम्यं स्यात्। **'उत्तमा देवतास्तत्र ऋष्याद्या मध्यमा मताः । अधमा मानुषोत्कृष्टाः'** इत्येकादशतात्पर्यनिर्णये ऋषिचिरपितृदेवगन्धर्वमनुष्यगन्धर्वक्षितिपानां मध्यमाधिकारित्वप्रतिपादनात् । यदि च मानान्तरविरोधान्न परस्परं साम्यमिति मतं तदा **'मध्यमा ऋषिगन्धर्वाः'** इत्यत्रापि तुल्यम् ।

न च **'देवैः सहितगन्धर्वा ऋषयो देवतास्तथा'** इति बृहद्भाष्यं देवगन्धर्वाणामृषीणां च परस्परसाम्ये प्रमाणमिति वाच्यम् । तत्रोत्त-मदेवगन्धर्वापेक्षया पितृभ्यो देवगन्धर्वाणामाधिक्यमिति बृहद्भाष्यानु-सारेण देवगन्धर्वोत्तमचिरपित्रपेक्षया ये उत्तमाः शतगन्धर्वास्त एव गन्धर्वा ग्राह्याः । तथा च **'देवैः सहितगन्धर्वाः'** इति वाक्यबलेन ऋषीणां शतगन्धर्वसाम्यलाभेऽपि [1]तदवरचिरपित्रधमदेवगन्धर्वसाम्यं न लभ्यते । अतश्चिरपित्रधमदेवगन्धर्वाणाम् अन्तर्दर्शिऋषीणां परस्प-रसाम्याभिधानं प्रमाणशून्यमेवेति ।। ३० ।।

*अथ एकत्रिंशकक्ष्या*

(देवगन्धर्वेभ्यो मनुष्यगन्धर्वाः शतावराः)

देवगन्धर्वेभ्यो मनुष्यगन्धर्वाः शतावराः । **'ये त्वन्यमुखगोचराः मनुष्यास्ते तु गन्धर्वास्तेभ्यस्ते च शतावराः'** इति बृहद्भाष्ये मनुष्य-गन्धर्वस्वरूपमुक्त्वा तेषां देवगन्धर्वेभ्यः शतावरत्वाभिधानात् ।।३१।।

---

१. तदवरेति नास्ति ।

*अथ द्वात्रिंशकक्ष्या*

**(मनुष्यगन्धर्वेभ्यः क्षितिपाः शतावराः)**

मनुष्यगन्धर्वेभ्यः क्षितिपाः शतावराः । कार्तवीर्यादिराजशतं कर्मदेवसमानमित्युपपादितम् । अत उक्तराजशतव्यतिरिक्ता एव क्षितिपा मनुष्यगन्धर्वेभ्यः शतावरा इति बोध्यम् ।। ३२ ।।

*अथ त्रयस्त्रिंशकक्ष्या*

**(क्षितिपेभ्यो मनुष्योत्तमाः शतावराः)**

क्षितिपेभ्यो मनुष्योत्तमाः शतावराः । **'मानुषा वर्णभेदेन तथैवाऽश्रमभेदतः' 'क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः'** इत्याद्युक्त्वा **'नित्यानन्दे च भोगे च ज्ञानैश्वर्यगुणेषु च । सर्वे शतगुणोद्रिक्ताः'** इति सूत्रभाष्योक्तिबलेन मनुष्योत्तमानां क्षितिपापेक्षया शतावरत्वस्य प्रतीतेः । **'अन्येभ्यस्तु विमुक्तेभ्य आनन्दश्चक्रवर्तिनाम् । मुक्तानां हि शतोद्रिक्तः'** इति बृहद्भाष्यबलेन स्पष्टं मनुष्योत्तमानां क्षितिपापेक्षया शतगुणाधमत्वप्रतीतेश्च ।

एतेन क्षितिपानां मनुष्यगन्धर्वापेक्षया यच्छतावरत्वमुक्तं तदप्युक्तसूत्रभाष्यबलादेव प्रमापितम् । अतस्तत्र पृथक् प्रमाणं नोक्तमिति बोध्यम् । मनुष्योत्तमानामपि ब्राह्मणादिवर्णप्रयुक्तं ब्रह्मचर्याद्याश्रमभेदप्रयुक्तं च किञ्चिद् वैलक्षण्यमस्तीति ज्ञापयितुमुक्तसूत्रभाष्ये वर्णभेदे[1]नाऽश्रमभेदेन च युक्ता इति मनुष्योत्तमानां विशेषणमुक्तम् । ते च मनुष्योत्तमास्त्रिविधाः । उत्तमा मध्यमा अधमाश्चेति । अत्र

१. आश्रमभेदेनेति नास्ति - ख.

**'अधमा मानुषोत्कृष्टास्ते चापि त्रिविधा मताः'** इति भागवत-तात्पर्यनिर्णयवचनं प्रमाणम् ।

अत्रेदं बोध्यम् -

**सन्तस्तु त्रिविधा ज्ञेया उत्तमाधममध्यमाः ।**
**उत्तमा देवतास्तत्र ऋष्याद्या मध्यमा मताः ।**
**अधमा मानुषोत्कृष्टाः ते चाऽपि त्रिविधा मताः ।**

इति भागवततात्पर्यनिर्णये **'अधमाधिकारिणो मर्त्या मुक्तावृष्यादिकाः समाः । अधिकार्युत्तमा देवाः'** इति गीतातात्पर्यनिर्णये च मनुष्योत्तमादीनां विरिञ्चान्तानां [1]विभागान्तरमुक्तम् । तत्र ऋष्याद्या ऋष्यादिका इति पदद्वयेन ऋषिचिरपितृदेवगन्धर्वमनुष्यगन्धर्वक्षितिपा ग्राह्याः । मनुष्योत्तमानां देवानां च पृथगुक्तत्वेन परिशेषात् ।

**(अपरोक्षेऽधिकारिभेदेन तारतम्यं विज्ञेयम्)**

तत्राधमाधिकारिणाम् [2]अवतारापरोक्षज्ञानं कर्मक्षयादिफलहेतु । मध्यमाधिकारिणां देहान्तस्थप्रादेशमात्रभगवदपरोक्षज्ञानं तथा । उत्तमाधिकारिणां [3]व्याप्तभगवद्रूपापरोक्षज्ञानं तथा । तदुक्तम् -

**दृष्ट्वैव ह्यवताराणां मुच्यन्ते केचिदञ्जसा ।**
**दर्शनेनाऽन्तरेणान्ये देवाः सर्वत्र दर्शनात् ।।** इति ।

अत्र **'केचित्'** इत्यनेन मनुष्योत्तमा ग्राह्याः । **'मानुषा एव बहिः प्रकाशाः'** इति श्रुतावववताररूपबाह्यार्थापरोक्षज्ञानित्वोक्त्या तत्समाख्यानात् मनुष्योत्तमानामेवावतारापरोक्षज्ञानेन मोक्ष इत्यर्थलाभात् ।

---

१. भागमुक्तं - क.

२. अपरोक्षज्ञानं - क.   ३. भगवव्द्याप्त - ख.

**'अन्ये'** इत्यनेन ऋष्यादयः क्षितिपान्ता मध्यमाधिकारिणो ग्राह्याः । मनुष्योत्तमानां देवानां च पृथगुक्तत्वेन परिशेषात् । तेन मध्यमाधिकारिणोऽन्तस्थप्रादेशमात्रभगवद्दर्शिन इति सिध्यति ।

न च **'ऋषयोऽन्तःप्रकाशाः'** इति श्रुतिविरोधः । ऋषिपदस्य क्षितिपान्तमध्यमाधिकारिमात्रोपलक्षकत्वात् । अन्यथा [१]चिरपित्रादिक्षितिपान्तानां मोक्षहेत्वपरोक्षज्ञानाभावप्रसङ्गात् ।

एतच्च तत्तद्योग्यभगवद्रूपापरोक्षज्ञानं **'कर्मक्षयस्तथोत्क्रान्तिर्मार्गो भोगः'** इति चतुर्विधफलसाधनम् । एवम् **'उत्पन्नभगवद्दर्शनात् सदा। अपेक्षितफलप्राप्तिः'** इत्यनुव्याख्यानोक्तेः, श्रवणमनननिदिध्यासनाभ्यासेन तु जायते । तथैव श्रुत्यादिषूदितत्वात् । लिङ्गशरीराद्यशेषानिष्ट[२]निवृतिविशिष्टेष्टविषयभोगरूपमोक्षे तु सर्वेषामधिकारिणां [३]बिम्बरूपापरोक्षज्ञानमपि कारणम् । **'समोऽपि भगवान् स्वबिम्बदर्शन एवैनं मोचयति'** तथा **'अन्येष्वपि कर्मसु स्वकृतमेवैनं भोजयति'** **'यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते'** इति श्रुतिभ्यः ।

**(स्वस्वबिम्बदर्शनं जीवोत्तमोपदेशेनैव भवति)**

स्वबिम्बदर्शनं च चतुर्मुखोपदेशेनैव भवति । **'स एतस्मात् जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते'** इति श्रुतेः । स प्रणवोपासको जीवघनात् जीवोत्तमहिरण्यगर्भोपदेशेन परात्परं पुरिशयं पुरुषं पश्यतीति श्रुत्यर्थः । अत्र पुरिशयमिति विशेषणात् [४]प्रादेशमात्रभगवद्रूपापरोक्षज्ञानमिति लभ्यते । ब्रह्मोपदेशश्चोत्तमाधिकारिणां देवानां सुलभ

---

१. चिरक्षितिपान्त - ख. २. निवृत्तीष्टविशेष - ख.
३. बिम्बज्ञानमपी - क. ४. प्रादेशमूल - क.

एव । **'सेवका ब्रह्मणश्चापि देवा वेदाश्च सर्वशः'** (म.भा.ता.नि.२२.६५) इति देवानां ब्रह्मसेवकतया ब्रह्मलोकस्थत्वाभिधानात् । मध्यमाधिकारिणामधमाधिकारिणां च [1]सत्यलोकप्राप्त्यनन्तरं ब्रह्मोपदेशेन ज्ञानविशेषप्राप्तिः । तदुक्तं -

**............. देहादिकं तद्गतमेव ये नराः ।**
**उपासते ते पुरतः समाप्नुयुः ब्रह्माणमस्मात् मतिमाप्य विष्णुम्**
।। इति ।।

अत्र **'देहादिकम्'** इत्यादिपदेन प्रतिमाग्रहणम् । तेन मध्यमानामधमानां चाधिकारिणां सङ्ग्रह इति बोध्यम् । बिम्बापरोक्षज्ञानं हिरण्यगर्भाद् भवतीत्यत्र **'अणोरणीयान् महतो महीयान् आत्माऽस्य जन्तोर्निहितो गुहायाम् । तमक्रतुः पश्यति वीतशोको धातुः प्रसादात् महिमानमात्मनः'** ।। इति काठकश्रुतिरपि प्रमाणम् ।

तत्र **'आत्माऽस्य जन्तोर्निहितो गुहायाम्'** इत्युक्तं बिम्बरूपपरमात्मानं तमित्यनेन परामृश्य **'धातुः प्रसादात् पश्यति'** इति बिम्बापरोक्षज्ञानस्य हिरण्यगर्भप्रसादजन्यत्वाभिधानात् ।

एवं बिम्बापरोक्षज्ञानं **'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः'** इत्युक्तमोक्षसाधनमित्यत्रापीयमेव श्रुतिर्मानम् । तं बिम्बरूपपरमात्मानं पश्यति ततो वीतशोको भवतीत्युक्तत्वात् । अक्रतुरित्यस्य विष्णुनिश्चययुक्त इत्यर्थः । ए-विष्णौ क्रतुर्मतिर्यस्य सोऽक्रतुरिति व्युत्पत्तेः । आत्मनः जीवात् । महिमानं महामानम् ।

---

१. सत्यलोकेति नास्ति - क.

**जीवाद् गुणपरीमाणं यस्माद् विष्णोर्महत्तरम् ।**
**तस्माज्जीवात्स महिमा विष्णुरित्युच्यते श्रुतौ ।।**

इति काठकभाष्यानुसारेण काठकश्रुत्यर्थो बोद्धव्य इत्यलं पल्लवितेन ।

**सुपूर्णसौख्यचिद्घनं ह्यशेषदोषवर्जितम् ।**
**विशेषविद्विमोक्षदं नमामि विट्ठलं समम् ।। १ ।।**

**जयतीर्थगवीगुम्फे प्रत्यहं योऽन्वजागरीत् ।**
**सेवे श्रीतिरुमलाचार्यं निर्मलाचारभास्करम् ।। २ ।।**

इति श्रीमद्वेदेशतीर्थजगद्गुरुश्रीपादोपसदविद्वद्वर्य श्रीमद्यदुपत्याचार्यपूज्यपादविनेयश्रीतिरुमलाचार्यसूरिसूनुना प्रह्लादकृष्णाचार्येण रचिता तारतम्यविवृतिः समाप्ता ।

**।। भारतीरमणमुख्यप्राणप्रियः श्रीगोपालकृष्णः प्रीयताम् ।।**

**।। श्रीमध्वेशार्पणमस्तु ।।**

# 15. व्यासाचार्यशिष्य करवीरपुरमध्वाचार्यविरचिता तारतम्यसारसङ्ग्रहदीपिका

सेवेऽहं पूर्णबोधं तं बादरायणशिष्यकम् ।
श्रीमद्वैष्णवसिद्धान्तस्थापकं वायुरूपिणम् ।। १ ।।
भजेऽहं यादवाचार्यान् श्रीनिवासाभिधांस्तथा ।
तत्पुत्रान् वेङ्कटाचार्यान् तारतम्यान्तगान् गुरून् ।। २ ।।
भजेऽहं केशवाचार्यकल्पद्रुममनुत्तमम् ।
शिष्यशाखान्वितं सर्वमोक्षादिफलदं शुभम् ।। ३ ।।
सेवेऽहं नरसिंहाख्यचिन्तामणिमनुत्तमम् ।
चिन्तितार्थप्रदं नृणां भजतां स्मृतिमात्रतः ।। ४ ।।
श्रीमुष्णवासुदेवाख्यानाचार्यान् वैष्णवोत्तमान् ।
श्रीमदानन्दतीर्थीयतीर्थसम्यक्प्रवर्तकान् ।। ५ ।।
यैरहं शिक्षितस्तत्वमार्गे सम्यङ् निवेशितः ।
तान् वन्दे तत्वसारज्ञान् व्यासाचार्याग्रजान् गुरून् ।। ६ ।।
भजेऽहं वैष्णवाचार्यान् पृथ्वीमण्डलसंस्थितान् ।
विज्ञाततारतम्यांस्तान् पूर्णप्रज्ञमतानुगान् ।। ७ ।।
नत्वा विष्णुं श्रियं वायुं मध्वनाम्नाऽल्पबुद्धिना ।
क्रियतेऽलं तारतम्यसारसङ्ग्रहदीपिका ।। ८ ।।
न मध्वशास्त्रविज्ञानं पुराणोपनिषत्सु मे ।
न विज्ञानं तथाऽपीदं कुर्वे श्रीगुर्वनुग्रहात् ।। ९ ।।
नो हसन्तु न निन्दन्तु तारतम्यान्तगा बुधाः ।
अबद्धं मत्कृतं ज्ञात्वा शोधयन्तु पुनः पुनः ।। १० ।।

अगाधतारतम्यं क्व क्व च तत्र मदाग्रहः ।
तथाऽपि मच्छ्रमो भूयाद्देवानां प्रीतिकारकः ।। ११ ।।

तारतम्यं ततो ज्ञेयं सर्वोच्चत्वं हरेस्तथा ।
एतद्विना न कस्यापि विमुक्तिः स्यात्कथञ्चन ।। १२ ।।

तारतम्यापरिज्ञानादनुत्थानं तमो व्रजेत् ।
इत्यादिबहुमानानां सत्वादावश्यकं त्विदम् ।। १३ ।।

तारतम्यपरिज्ञानमतो लोककृपालुभिः ।
पूर्णप्रज्ञाचार्यवर्यैस्तत्र तत्रोपवर्णितम् ।। १४ ।।

स्वग्रन्थे यद्दुर्बोधं देवैः शेषादिकैरपि ।
मानुषैः स्वल्पमतिभिः कलिकालबलादिना ।। १५ ।।

ज्ञातुं न शक्यतेऽथापि गुरोरेव कृपाबलात् ।
मध्वनाम्ना तारतम्यसारसङ्ग्रह उत्तमः ।। १६ ।।

कृतस्त्वयं स्वशिष्येण गुरुराजाभिधेन च ।
विज्ञापितेन तस्यापि त्वल्पप्रज्ञैः स्वशिष्यकैः ।। १७ ।।

अर्थो हि सम्यग्विज्ञातुं नैवेभिश्शक्यते त्विति ।
क्रियतेऽलं तारतम्यसारसङ्ग्रहदीपिका ।। १८ ।।

विष्णुः सर्वगुणैः श्रेष्ठश्चिदचिज्जगतः सतः ।
ततोऽनन्तान्तगुणैर्हीना श्री(देवी) परिकीर्तिता ।। १९ ।।

ततः कोटिगुणैर्हीनौ ब्रह्मवायू प्रकीर्तितौ ।
स्पष्टत्वविषये चैतावनन्तगुणतोऽधमौ ।। २० ।।

अनन्तगुणतो वाऽपि हीनौ सम्परिकीर्तितौ ।
श्रीमद्विष्णोः सकाशाच्चानन्तानन्तगुणाधमौ ।। २१ ।।

ततः सरस्वतीवायुपत्न्यौ शतगुणाधमे ।
स्पष्टत्वविषये चैते ह्यनन्तगुणतोऽधमे ।। २२ ।।
ततः फणीशगरुडौ विज्ञातव्यौ शताधमौ ।
स्पष्टत्वविषये चैतावनन्तगुणतोऽधमौ ।। २३ ।।
ततो जाम्बवती चैव नीला भद्रा तु लक्षणा ।
कालिन्दी मित्रविन्दा च विष्णोः पत्न्यस्त्विमाः षट् ।। २४।।
स्पष्टत्वविषये चैतास्त्वनेकगुणतोऽधमाः ।
ततः सौपर्णिवारुण्यौ ताभ्यश्च द्विगुणाधमे ।। २५ ।।
स्वपतिभ्यां तु ह्येते तु ज्ञेये दशगुणाधमे ।
गुणस्पष्टत्वविषये त्वनेकगुणतोऽधमे ।। २६ ।।
ततः शचीरतिपती हीन्द्रकामौ दशाधमौ ।। २७ ।।
उमादीनां सकाशात्तु स्पष्टत्वे तु शताधमौ ।
किञ्चिन्न्यूनस्तत्र कामो विज्ञातव्यः सदैव च ।। २८ ।।
ततोऽहङ्कारिकः प्राणो विज्ञातव्यो दशाधमः ।
ततो रतिर्मनुर्दक्षाः शचीगुर्वनिरुद्धकाः ।। २९ ।।
दशाधमाः प्रविज्ञेयास्त्वहंवायोः सकाशतः ।
ततः प्रवहनामा तु वायुः पञ्चगुणाधमः ।। ३० ।।
गुणस्पष्टत्वविषये ज्ञेयः शतगुणाध्रमः ।
ततो यमो मानवी च चन्द्रसूर्यौ तथैव च ।। ३१ ।।
चत्वार एते विज्ञेयाः प्रवहाद् द्विगुणाधमाः ।
ततो जलात्मा वरुणः सार्धपादगुणाधमः ।। ३२ ।।

ततः श्रीनारदमुनिः पादार्धेनैव चाधमः ।
ततो भृगुः प्रधानाग्निप्रसूतिर्दक्षगेहिनी ।। ३३ ।।
अधमा इति विज्ञेया पादार्धेनैव सर्वदा ।
ततो मरीचिरत्रिश्च पुलस्त्यः पुलहः क्रतुः ।। ३४ ।।
अङ्गिराश्च वसिष्ठश्च सप्तैते ब्रह्मपुत्रकाः ।
कौशिकश्च ऋषिश्रेष्ठो वैवस्वतमनुस्तथा ।। ३५ ।।
प्रोक्ता नवैते भृग्वादेर्गुणेनैकेन चाधमाः ।
ततो बृहस्पतेर्भार्या तारामित्रस्तथैव च ।। ३६ ।।
प्रावही निर्ऋतिश्चेति चतस्रस्तास्तु देवताः ।
मरीच्यादेः सकाशात्तु गुणेनैकेन चाधमाः ।। ३७ ।।
उक्तानेतान् विना शेषशतस्था याश्च देवताः ।
ताः पञ्चाशीतिसङ्ख्याकाः विष्वक्सेनस्तथैव च ।। ३८ ।।
गणेशश्च कुबेरश्च त्रय एते सुरोत्तमाः ।
एवं त्वष्टाशीतिसङ्ख्या देवतास्तु सुरोत्तमाः ।। ३९ ।।
एता मित्रादिदेवेभ्यो गुणेनार्धेन चाधमाः ।
ततस्त्वण्डान्तरे एव कर्मणा देवतां गताः ।। ४० ।।
एतादृक्कर्मदेवास्तु बल्याद्या मनवोऽपि च ।
एकादशाष्टौ गन्धर्वा पितॄणां सप्तकं तथा ।। ४१ ।।
राजानः शतसङ्ख्याकाः वैन्याद्याश्चक्रवर्तिनः ।
ऋषयोऽशीतिसङ्ख्याका गृहधर्मरताः सदा ।। ४२ ।।
दशसंन्यासिनश्चैव सनाद्याश्चोर्ध्वरेतसः ।
एवं नवतिसङ्ख्याका ऋषयो ब्रह्मतत्पराः ।। ४३ ।।

अर्चिर्नामा पावकश्च प्रधानाग्नेः सुतस्तथा ।
ऊर्वश्याद्याश्चाप्सरसः षडेवात्र प्रकीर्तिताः ।। ४४ ।।

मङ्गलः शुक्रराहुश्च केतुः प्रह्लाद एव च ।
तथैवार्चिरमार्गस्थो धूमादिर्मार्गगा अपि ।। ४५ ।।

पाददेवो जयन्तश्च जयाद्या विष्णुपार्षदाः ।
मरीचिर्भूतवाय्वात्मा चित्रगुप्तः सुलेखकः ।। ४६ ।।

इत्याद्याः कर्मजा ये च तेऽर्धगुणाधमाः ।
ततः पर्जन्यगङ्गे च सञ्ज्ञा वै सूर्यगेहिनी ।। ४७ ।।

शशिपत्नी रोहिणी च शामला यमगेहिनी ।
विराण्नाम्न्यनिरुद्धस्य गेहिनी षट्च देवताः ।। ४८ ।।

पूर्वोक्तेभ्यः कर्मजेभ्यो गुणेनार्धेन चाधमाः ।
ततो ये नवकोटीनां देवानां मध्यवर्तिनः ।। ४९ ।।

गङ्गादिभ्यः प्रविज्ञेया गुणेनैकेन चाधमाः ।
कूर्मो दृष्टो विष्णुपद्यां मयोक्तः ? ।। ५० ।।

ततः प्रधानाग्निभार्या गुणेनैकेन चाधमा ।
उदकात्मा बुधस्तस्या द्विगुणोनः प्रकीर्तितः ।। ५१ ।।

बुधात्सा देवकी प्रोक्ता गुणेनैकेन चाधमा ।
ततो यशोदा देवक्या गुणेनैकेन चाधमा ।। ५२ ।।

ततस्तूषा यशोदायाः सार्धद्विगुणतोऽधमा ।
ततः शनिः पृथिव्यात्मा द्विगुणोनः प्रकीर्तितः ।। ५३ ।।

ततः पुष्करदेवस्तु शनेः पञ्चगुणाधमः ।
ते वै चाऽजानदेवास्तु गन्धर्वाणां शतं तथा ।। ५४ ।।

पितरः शतसङ्ख्याकाः तथैवाप्सरसां शतम् ।
त्रिंशत्सङ्ख्याका असुरास्तावन्तश्चारणा अपि ।। ५५ ।।
यक्षाः सप्ततिसङ्ख्याकाः तावन्तो राक्षसा अपि ।
सिद्धाश्च शतसङ्ख्याकास्तथा किन्नरगुह्यकाः ।। ५६ ।।
नागाश्चाऽजानदेवानां समा एते तथैव च ।
पत्न्यः षोडशसाहस्रसङ्ख्याकाश्च शताधिकाः ।। ५७ ।।
कृष्णस्यैता ह्यग्निपुत्रस्वरूपास्तासु चोत्तमा ।
कशेरुः ?कर्मककक्ष्योक्तपावकाग्निस्वरूपका ।। ५८ ।।
अतस्तद्व्यतिरिक्तास्ता ह्याजानजसमा मताः ।
पूर्वोक्तपुष्कराद्देवाच्चत्वारिंशद्गुणाधमाः ।। ५९ ।।
ततः कर्मजकक्ष्योक्त षडैवात्सरसो विना ।
तथा चाऽजानकक्ष्योक्तशतमप्सरसां विना ।। ६० ।।
शिष्टाः सर्वाश्चाप्सरसः ज्ञेयास्तद् द्विगुणाधमाः ।
तत्र काश्चिदप्सरसः कृष्णसङ्गार्थमेव ताः ।। ६१ ।।
कात्यायनीव्रतधराः भूमौ गोपालकन्यकाः ।
जाता उद्वाहिता ताश्च तथाऽनुद्वाहिताश्च याः ।। ६२ ।।
आजानदेवताभ्यस्तु ज्ञेया वै द्विगुणाधमाः ।
ततस्सात्त्विककक्ष्योक्तान् विनैव तु दशर्षिकान् ।। ६३ ।।
तथा कर्मजकक्ष्यायामुक्तान्नवतिकान्नृषीन् ।
विनैव सर्वं ऋषयस्त्वप्रतीकावलम्बनाः ।। ६४ ।।
पञ्चाशद्भिर्गुणैरूना ऋषयः शंसितव्रताः ।
आजानदेवताभ्यस्तु शतोनाः परिकीर्तिताः ।। ६५ ।।

एते तु ऋषयो ज्ञेयाः सङ्ख्यया शतकोटयः ।
अप्रतीकालम्बनाश्च प्रतीकालम्बनास्तथा ।। ६६ ।।
द्विविधा इति विज्ञेया ऋषयस्तत्त्वदर्शिनः ।
शरीरान्तर्बहिश्चापि सर्वत्र हरिदर्शिनः ।। ६७ ।।
अप्रतीकालम्बनास्ते ज्ञेयास्तत्त्वविचक्षणैः ।
ततस्तात्विककक्ष्योक्तपितॄणां तु त्रयं विना ।। ६८ ।।
तथा कर्मजकक्ष्यायामुक्तान् सप्तपितॄन् विना ।
तथाऽऽजानजकक्ष्यायामुक्तान् शतपितॄन् विना ।। ६९ ।।
शिष्टाः सर्वेऽपि पितरो ज्ञेयाः शतगुणाधमाः ।
पितरश्चिरसञ्ज्ञिनः ........................... ।। ७० ।।
ततः कर्मजकक्ष्योक्ता अष्टगन्धर्वकान् विना ।
तथैवाऽजानजनसमगन्धर्वकान् विना ।। ७१ ।।
शिष्टाः सर्वेऽपि गन्धर्वाः शतोनाः परिकीर्तिताः ।
ततो मनुष्यगन्धर्वा ज्ञेयाः शतगुणाधमाः ।। ७२ ।।
ततः कर्मजकक्ष्यायामुक्तराजशतं विना ।
शिष्टाः सर्वेऽपि राजानः ज्ञेयाः शतगुणाधमाः ।। ७३ ।।
ततः शताधमा ज्ञेयाः मानुषेषूत्तमाश्च ये ।। ७४ ।।

**।। इति व्यासाचार्यशिष्य करवीरपुरमध्वाचार्यविरचिता**
**तारतम्यसारसङ्ग्रहदीपिका समाप्ता ।।**

# 16. करवीरपुरमध्वाचार्यकृता तारतम्यसङ्ग्रहदीपिकाव्याख्या

सेवेऽहं पूर्णबोधं तं बादरायणशिष्यकम् ।
श्रीमद्वैष्णवसिद्धान्तस्थापकं वायुरूपिणम् ।।

भजेऽहं यादवाचार्यान् श्रीनिवासाभिधांस्तथा ।
तत्पुत्रान् वेङ्कटाचार्यान् तारतम्यान्तगान् गुरून् ।।

भजेऽहं केशवाचार्यकल्पद्रुममनुत्तमम् ।
शिष्यशाखान्वितं सर्वमोक्षादिफलदं शुभम् ।।

सेवेऽहं नरसिंहाख्यचिन्तामणिमनुत्तमम् ।
चिन्तितार्थप्रदं नृणां भजतां स्मृतिमात्रतः ।।

श्रीमुष्णवासुदेवाख्यानाचार्यान् वैष्णवोत्तमान् ।
श्रीमदानन्दतीर्थीयतीर्थसम्यक्प्रवर्तकान् ।।

यैरहं शिक्षितस्तत्वमार्गे सम्यङ्निवेशितः ।
तान् वन्दे तत्वसारज्ञान् व्यासाचार्याग्रजान् गुरून् ।।

भजेऽहं वैष्णवाचार्यान् पृथ्वीमण्डलसंस्थितान् ।
विज्ञाततारतम्यांस्तान् पूर्णप्रज्ञमतानुगान् ।।

नत्वा विष्णुं श्रियं वायुं मध्वनाम्नाऽल्पबुद्धिना ।
क्रियतेऽलं तारतम्यसारसङ्ग्रहदीपिका ।।

न मध्वशास्त्रविज्ञानं पुराणोपनिषत्सु मे ।
न विज्ञानं तथाऽपीदं कुर्वे श्रीगुर्वनुग्रहात् ।।

नो हसन्तु न निन्दन्तु तारतम्यान्तगा बुधाः ।
अबद्धं मत्कृतं ज्ञात्वा शोधयन्तु पुनः पुनः ।।

**अगाधतारतम्यं क्व क्व च तत्र मदाग्रहः ।**
**तथाऽपि मद्भ्रमोऽभूदेवानां प्रीतिकारकः ।।**
**तारतम्यं ततो ज्ञेयं सर्वोच्चत्वं हरेस्तथा ।**
**एतद् विना न कस्यापि विमुक्तिः स्यात्कथञ्चन ।।**
**तारतम्यापरिज्ञानादनुत्थानं तमो व्रजेत् ।**
**इत्यादिबहुमानानां सत्वादावश्यकं त्विदम् ।।**
**तारतम्यपरिज्ञानमतो लोककृपालुभिः ।**
**पूर्णप्रज्ञाचार्यवर्यैस्तत्र तत्रोपवर्णितम् ।।**
**स्वग्रन्थेऽत्यन्तदुर्बोधे देवैः शेषादिकैरपि ।**
**मानुषैः स्वल्पमतिभिः कलिकालबलादिना ।।**
**ज्ञातुं न शक्यतेऽथापि गुरोरेव कृपाबलात् ।**
**मध्वनाम्ना तारतम्यसारसङ्ग्रह उत्तमः ।।**
**कृतस्त्वयं स्वशिष्येण गुरुराजाभिधेन च ।**
**विज्ञापितेन तस्यापि त्वल्पप्रज्ञैः स्वशिष्यकैः ।।**
**अर्थो हि सम्यग्विज्ञातुं नैवेभिश्शक्यते त्विति ।**
**क्रियतेऽलं तारतम्यसारसङ्ग्रहदीपिका ।।**
**विष्णुः सर्वगुणैः श्रेष्ठश्चिदचिज्जगतः सतः ।**

इदं मूलम् । अस्यार्थः । विष्णुः श्रीनारायणः सतः सत्याच्चिदचिज्जगतः रमाब्रह्माद्यखिलचेतनाचेतनप्रपञ्चात् सर्वगुणैः लोकानुवृत्तैः तदननुवृत्तैश्च श्रेष्ठः सर्वोत्तम इति । अत्र मानम् । 'न ते विष्णो जायमानः' इति श्रुतिः ।

तथा 'ततो ब्रह्म सर्वगुणात्मकम् ।

ते च सर्वगुणाः पूर्णाः तच्छरीरः परः स्मृतः ।
प्रत्येकं तु गुणांस्तांस्तु सदा सर्वगुणात्मकान् ।
ज्ञात्वा विमुच्यते विष्णोः प्रसादान्मानुषोऽपि सन्' ।।
इति श्रुतिर्बृहद्भाष्यगता चात्र प्रमापिका ।
तथा 'तच्च परं साक्षात्सर्वानन्त्ययुतं सदा'
इति अनुव्याख्यानमप्यत्र ज्ञापकं मानमुत्तमम् ।
तथा 'देशतः कालतश्चैव गुणतश्च त्रिधा ततिः ।
सा समस्ता हरेरेव न ह्यन्ये पूर्णषड्गुणाः' ।
इत्यादिमानानां सत्वाच्छ्रेष्ठो हरिर्मतः ।

**।। इति प्रथमकक्ष्या ।।**

**ततोऽनन्तान्तगुणैर्हीना श्री(देवी) परिकीर्तिता ।।**

इदं मूलम् । मानं च ।

'प्रकृतिस्तेन चाऽविष्टा तद्वशा न हरिः स्वयम् ।
ततोऽनन्तांशहीना सा बलज्ञप्तिसुखादिभिः' ।।

इति वाक्यं बृहद्भाष्यगतं चात्र प्रमापकम् । तथा -

'विष्णोर्माहात्म्यलेशस्य विभक्तस्य च कोटिधा ।
पुनश्चानन्तधा तस्य पुनश्चापि ह्यनन्तधा ।
नैकांशसममाहात्म्याः श्रीशेषब्रह्मशङ्कराः' ।।
इति भागवततात्पर्यवाक्यमप्यत्र मापकम् ।

**।। इति द्वितीया कक्ष्या ।।**

**अगाधतारतम्यं क्व क्व च तत्र मदाग्रहः ।**
**तथाऽपि मच्छ्रमोऽभूद्देवानां प्रीतिकारकः ।।**
**तारतम्यं ततो ज्ञेयं सर्वोच्चत्वं हरेस्तथा ।**
**एतद् विना न कस्यापि विमुक्तिः स्यात्कथञ्चन ।।**
**तारतम्यापरिज्ञानादनुत्थानं तमो व्रजेत् ।**
**इत्यादिबहुमानानां सत्वादावश्यकं त्विदम् ।।**
**तारतम्यपरिज्ञानमतो लोककृपालुभिः ।**
**पूर्णप्रज्ञाचार्यवर्यैस्तत्र तत्रोपवर्णितम् ।।**
**स्वग्रन्थेऽत्यन्तदुर्बोधे देवैः शेषादिकैरपि ।**
**मानुषैः स्वल्पमतिभिः कलिकालबलादिना ।।**
**ज्ञातुं न शक्यतेऽथापि गुरोरेव कृपाबलात् ।**
**मध्वनाम्ना तारतम्यसारसङ्ग्रह उत्तमः ।।**
**कृतस्त्वयं स्वशिष्येण गुरुराजाभिधेन च ।**
**विज्ञापितेन तस्यापि त्वल्पप्रज्ञैः स्वशिष्यकैः ।।**
**अर्थो हि सम्यग्विज्ञातुं नैवेभिश्शक्यते त्विति ।**
**क्रियतेऽलं तारतम्यसारसङ्ग्रहदीपिका ।।**
**विष्णुः सर्वगुणैः श्रेष्ठश्चिदचिज्जगतः सतः ।**

इदं मूलम् । अस्यार्थः । विष्णुः श्रीनारायणः सतः सत्याच्चिदचिज्जगतः रमाब्रह्माद्यखिलचेतनाचेतनप्रपञ्चात् सर्वगुणैः लोकानुवृत्तैः तदननुवृत्तैश्च श्रेष्ठः सर्वोत्तम इति । अत्र मानम् । 'न ते विष्णो जायमानः' इति श्रुतिः ।

तथा 'ततो ब्रह्म सर्वगुणात्मकम् ।

ते च सर्वगुणाः पूर्णाः तच्छरीरः परः स्मृतः ।
प्रत्येकं तु गुणांस्तांस्तु सदा सर्वगुणात्मकान् ।
ज्ञात्वा विमुच्यते विष्णोः प्रसादान्मानुषोऽपि सन्' ।।
इति श्रुतिर्बृहद्भाष्यगता चात्र प्रमापिका ।
तथा 'तच्च परं साक्षात्सर्वानन्त्ययुतं सदा'
इति अनुव्याख्यानमप्यत्र ज्ञापकं मानमुत्तमम् ।
तथा 'देशतः कालतश्चैव गुणतश्च त्रिधा ततिः ।
सा समस्ता हरेरेव न ह्यन्ये पूर्णषड्गुणाः' ।
इत्यादिमानानां सत्वाच्छ्रेष्ठो हरिर्मतः ।

।। इति प्रथमकक्ष्या ।।

**ततोऽनन्तान्तगुणैर्हीना श्री(देवी) परिकीर्तिता ।।**

इदं मूलम् । मानं च ।

'प्रकृतिस्तेन चाऽविष्टा तद्वशा न हरिः स्वयम् ।
ततोऽनन्तांशहीना सा बलज्ञप्तिसुखादिभिः' ।।

इति वाक्यं बृहद्भाष्यगतं चात्र प्रमापकम् । तथा -

'विष्णोर्माहात्म्यलेशस्य विभक्तस्य च कोटिधा ।
पुनश्चानन्तधा तस्य पुनश्चापि ह्यनन्तधा ।
नैकांशसममाहात्म्याः श्रीशेषब्रह्मशङ्कराः' ।।
इति भागवततात्पर्यवाक्यमप्यत्र मापकम् ।

।। इति द्वितीया कक्ष्या ।।

**ततः कोटिगुणैर्हीनौ ब्रह्मवायू प्रकीर्तितौ ।**
**स्पष्टत्वविषये चैतावनन्तगुणतोऽधमौ ।।**

**अनन्तगुणतो वाऽपि हीनौ सम्परिकीर्तितौ ।**
**श्रीमद्विष्णोः सकाशाच्चानन्तानन्तगुणाधमौ ।।**

इदं मूलम् । अस्यार्थः -

लक्ष्मीगतानन्दगुणे एकोनोत्तरकोटिधा ।
विभक्ते चरमांशस्य सदृशानन्दमात्रतः ।
कोट्यंशानामभावाच्च श्रियः कोटिगुणाधमौ' ।। इति।

अत्र मानम् -

'विष्णोः प्रियत्वे तद्भक्तौ तद्ज्ञाने च श्रियस्तु ते ।
मुक्ता अप्यवरा नित्यं सर्वे कोटिगुणेन च ।
इति वाक्यं बृहद्भाष्यगतं चात्र प्रमापकम्' ।

तथा - 'देवता सर्वविद्यानाम्' इति पूर्ववाक्योक्त 'लक्ष्मीविष्णू प्रगृह्य च । ब्रह्मवायुगिरोवीन्द्रशेषरुद्राश्च तत्स्त्रियः' इत्यादिना विनिर्देश्य देवान् **'अनन्तकोटिशतकदशधाद्यंशतः क्रमात्** ।

इत्यादिना तु ऋग्भाष्ये श्रियोऽनन्तगुणोन्नता ।
तथैव ब्रह्मणः कोटिहीनत्वं चोच्यते श्रियः ।
अतो ऋग्भाष्यमप्यत्र मापकं मानमुत्तमम् ।

ननु ते एते शतं विरिञ्चाः एतावती श्रीर्भक्त्या भवति । इति दशमतात्पर्ये शतोनूत्वं कथ्यते । तथा 'न समो ब्रह्मणः कश्चिन्मुक्तावपि कथञ्चन । 'ततः सहस्रगुणिता श्रीः' इति गीतासु तात्पर्ये सहस्रन्यूनतोच्यते ।

तथा श्रीस्तथा वायोः सहस्रगुणिता गुणैरिति ।
तात्पर्ये भारतस्यापि सहस्रावरतोच्यते ।
अतः परस्परमिदं विरुद्धमिति चेन्न च ।
निरवकाशत्वतः कोटिशब्दस्य बलवत्वतः ।
कोट्युन्नतैव विज्ञेया सकाशाद् ब्रह्मणः श्रियः ।
शतादीनां तु शब्दानां शतादिपरता भवेत् ।
बहुसङ्ख्यावाचिनां तु न न्यूनवाचिता क्वचित् ।
तस्माच्छतादिशब्दाश्च भवेयुः कोटिवाचकाः ।
अतः कोऽपि विरोधोऽत्र नैव चिन्त्यः कथञ्चन ।
श्रीभूदुर्गेति या भिन्ना महामाया तु वैष्णवी ।
तच्छक्त्यनन्तांशहीनाऽथापि तस्याः श्रियः प्रभुः ।
अनन्तब्रह्मरुद्रादेर्नास्याः शक्तिकला अपि ।
तेषां दुरत्ययाऽप्येषा विना विष्णोः प्रसादतः ।
इत्यादिना त्वनन्तांशहीनत्वं ब्रह्मणः श्रियः ।
प्रोच्यते तत्तु स्पष्टत्वविषयेऽथवाऽत्र तु ।
कोटिशब्दोऽनन्तवाचीत्यतो नात्र विरुद्धता ।
एतदेवानुसन्धाय प्रवृत्तं मूलमत्र तु ।
स्पष्टत्वविषये चैतावनन्तगुणतोऽधमौ ।
अनन्तगुणतो वाऽपि हीनौ सम्परिकीर्तिताविति ।
प्राणात्तु भगवान् विष्णुरनन्तगुणतोऽधिकः ।
नित्यमुक्तो नित्यशक्तिः नित्योद्रिक्तगुणः प्रभुः ।
इति छान्दोग्यभाष्ये तु वायो विष्णोः प्रकाशतः ।
अनन्तगुणहीनत्वं चोच्यते स्पष्टमेव तु ।
एतदेवानुसन्धाय प्रवृत्तं मूलमत्र तु ।

श्रीमद्विष्णोः सकाशाच्चानन्तगुणतोऽधमौ' इति च ।

ननु –

आभासकोऽस्य पवनः पवनस्य रुद्रः
शेषात्मको गरुड एव च शक्रकामौ ।
वीन्द्रेशयोस्तदपरे त्वनयोश्च तेषा -
मृष्यादयः क्रमश ऊगुणाः शतांशात् ।।
इति भारततात्पर्ये शतोनत्वं प्रतीयते ।
विष्णोः सकाशाद्वायोस्तद्विरुद्धमिति चेन्न च ।
तत्रत्यशतशब्दस्य त्वनन्तवाचितां वदेत् ।
अतः कोऽपि विरोधोऽत्र नैव चिन्त्यः कथञ्चन ।

।। इति तृतीयकक्ष्या ।।

**ततः सरस्वती वायुपत्न्यौ शतगुणाधमे ।**
**स्पष्टत्वविषये चैते ह्यनन्तगुणतोऽधमे ।।**
**महालक्ष्म्याः सकाशाच्चानन्तगुणाधमे ।**

इदं मूलमस्यार्थः -

ब्रह्मवायुगतानन्द एकोत्तरशतेन तु ।
विभक्ते च रमांशस्य सदृशानन्दमात्रतः ।
शतांशानामभावाच्च शतोने सम्प्रकीर्तिते ।

अत्र प्राचीनाः प्राज्ञाः ।

'ब्रह्मवायुगतानन्दे विभक्ते शतधैव तु ।
तत्रत्यांशयुतत्वात्तु शतोने सम्प्रकीर्तिते' ।। इति ।।

तथात्वे चैकोनशतन्यूनत्वमेव चैतयोर्लक्ष्यतेऽतोऽभिप्रायः? तेषां न ज्ञायते स्फुटम् । अत्र मानम् -

'शिवादाशा तथैवास्याः मुख्यवायुः शतोत्तरः'
इति छान्दोग्यभाष्यस्थ वाक्यमेवात्र मापकम् ।
तथा ब्रह्मवायू च तद्भार्ये वीन्द्रशेषौ च तत्स्त्रियौ ।
शिवस्तद्दयिता शक्रकामौ तद्दयितादयः ।
सर्वे सुराः क्रमेणैव विष्णोर्जाता अबाख्यकाः ।
ज्ञानानन्दबलाद्येषु विष्णुभक्तौ च सर्वशः ।
हीनाः शतगुणेनैव क्रमेणानेन तेऽखिलाः
इत्यैतरेयभाष्यस्थ वाक्यमप्यत्र मापकम् ।
तथा शिवकन्येन्द्रसेना च द्रौपदी काशिजा तथा ।
चन्द्रेत्यादिस्वरूपास्तास्तेभ्यः शतगुणावराः
इति वाक्यं बृहद्भाष्यगतं चात्र प्रमापकम् ।

ननु -

'दशवर्षं तु तत्पश्चाज्ञननं तत्स्त्रियोरपि ।
आनन्दादिस्तद्दशांशः स्यात् कालः संवत्सरात्परः ।
इति तृतीयतात्पर्ये दशोनत्वं प्रकथ्यते ।
अतः कथं शतोनत्वं चोच्येत त्विति चेन्न च ।
अत्रत्यो दशशद्बस्तु शतादेर्वाचको यतः ।
अतः कोऽपि विरोधोऽत्र नैव चिन्त्यः कथञ्चन ।

ननु -

'उमा यावदनन्तांशान् पूर्वदृष्टेभ्य एव तु ।
विशेषान् वासुदेवस्य पश्चादुक्ता विचक्षते' ।

इत्यनुव्याख्यागते वाक्ये ब्रह्मणस्तु सकाशतः ।
सरस्वत्यास्त्वनन्तांशहीनत्वं चोच्यते स्फुटम् ।
अतः कथं शतोनत्वं चोच्यते त्विति चेन्न च ।
तत्तु स्पष्टत्वविषयं यतो नात्र विरुद्धता ।
एतदेवानुसन्धाय प्रवृत्तं मूलमत्र तु ।
स्पष्टत्वविषये चैते ह्यनन्तगुणतोऽधमे' ।। इति ।

ननु -

'आभासका त्वथ रमाऽस्य मरुत्स्वरूपात् ।
श्रेष्ठाऽप्यजात्तदनु गीः शिवतो वरिष्ठा' ।।
इति भारततात्पर्ये महालक्ष्म्याः सकाशतः ।
सरस्वत्याः शतोनत्वं कथ्यते स्पष्टमेव तु ।

तथा - 'एतावान् विरिञ्चः' ।

'त ये शतं विरिञ्चाः एतावती श्रीर्भक्त्या भवति' ।
इति दशमतात्पर्ये महालक्ष्म्याः सकाशतः ।
ब्रह्मणोऽपि शतोनत्वं कथ्यते स्पष्टमेव तु ।
अतो ब्रह्मसरस्वत्योः साम्यमेव भवत्यलम् ।
दम्पत्योः समता क्वापि न दृष्टा त्विति चेन्न च ।
बहुप्रमाणगत्वेन कोट्युक्तेर्बलवत्त्वतः ।
श्रुतिस्थशतशब्दस्य कोट्यादिपरतां वदेत् ।
तात्पर्ये शतशब्दस्य त्वनन्तवाचितां वदेत् ।
अतः कोऽपि विरोधोऽत्र नैव चिन्त्यः कथञ्चन ।
एतदेवानुसन्धाय प्रवृत्तं मूलमत्र तु ।
महालक्ष्म्याः सकाशाच्चानन्तानन्तगुणाधमाः' इति ।

**।। इति चतुर्थी कक्ष्या ।।**

**ततः फणीशगरुडौ विज्ञातव्यौ शताधमौ ।**
**स्पष्टत्वविषये चैतावनन्तगुणतोऽधमौ ।।**
**ब्रह्मवाय्वोः सकाशात्तु सहस्राणां दशाधमौ ।**

इदं मूलमस्यार्थः -

सरस्वत्यादिगानन्द एकोत्तरशतेन तु ।
विभक्ते च रमांशस्य सदृशानन्दमात्रतः ।
शतांशानामभावाच्च शतोनौ सम्प्रकीर्तितौ' ।। इति ।

अत्र मानम् -

पूर्वोक्तैश्च गुणैः सर्वैस्ताभ्यः शतगुणावराः ।
इति वाक्यं बृहद्भाष्यगतं चात्र प्रमापकम् ।

तथा -

ऐतरेयसुभाष्यस्थवाक्यं पूर्वमुदाहृतम् ।
तदप्यत्र शतोनत्वे ज्ञापकं मानमुत्तमम् ।
तथा शिवादाशा तथैवास्याः मुख्यवायुः शतोत्तरः ।
इति छान्दोग्यभाष्यस्थवाक्यमप्यत्र मापकम् ।

ननु -

उमा यावदनन्तांशान् पूर्वदृष्टेभ्य एव तु ।
विशेषान् वासुदेवस्य पश्चादुक्ता विचक्षते ।
इत्यनुव्याख्यागते वाक्ये सरस्वत्याः सकाशतः ।
अनन्तांशविहीनत्वं कथ्यते स्पष्टमेव तु ।

अतः कथं शतोनत्वं कथ्यते त्विति चेन्न च ।
तत्तु स्पष्टत्वविषयमतो नात्र विरुद्धता ।
एतदेवानुसन्धाय प्रवृत्तं मूलमत्र तु ।
स्पष्टत्वविषये चैतावनन्तगुणतोऽधमाविति ।

ननु - 'एते शतं पुरुहूता एतावान् वा रुद्रः । एते शतं रुद्राः एतावान् विरिञ्चः । ते एते शतं विरिञ्चाः एतावती श्रीर्भक्त्या भवति' इति ।

'सौकरायणश्रुत्यादौ ब्रह्मणस्तु सकाशतः ।
रुद्रादीनां शतोनत्वं कथ्यते स्पष्टमेव तु ।

तथा -

'भूपा मनुष्यगन्धर्वाः देवाश्च पितरश्चिराः ।
आजानेयाः कर्मदेवाः तत्त्वदेवाः पुरन्दरः ।
शिवो विरिञ्च इत्येते क्रमाच्छतगुणोत्तराः ।
तात्पर्ये तु सुगीतायाः शतोनत्वं प्रकथ्यते ।

तथा -

'अवैष्णवकृतं कर्म सर्वमन्तवदुच्यते ।
अनन्तं वैष्णवकृतं तत्र वर्णक्रमात्परम् ।
वैष्णवैरपि मर्त्यैर्यत्कृतं शतगुणं ततः ।
गान्धर्वकर्म तस्माच्च पितृभिर्मुनिभिस्ततः ।
देवशक्रशिवब्रह्मकृतं तस्मात्क्रमेण च ।
शतोत्तरमिति ज्ञेयं नान्यद्ब्रह्मकृतोपमम्' ।। इति ।

'तात्पर्ये भारतस्यापि शतोनत्वं प्रकथ्यते ।
अतो ब्रह्मशतोनायाः सरस्वत्याः सकाशतः ।
कथं शतगुणोनत्वं रुद्रादेर्घटते त्विदम् ।

किञ्च -

'एवं सति सरस्वत्याः रुद्रादेः समतैव तु ।
प्राप्तेत्यतो न चैवैतद् घटते त्विति चेन्न च ।
ब्रह्मरुद्रादिविषये शतशब्दश्च यश्च सः ।
सहस्रदशवाची स्यादतो नात्र विरुद्धता ।
एतदेवानुसन्धाय प्रवृत्तं मूलमत्र तु ।
ब्रह्मवाय्वोः सकाशात्तु सहस्राणां दशाधमौ' ।। इति ।

।। इति पञ्चमीकक्ष्या ।।

**ततो जाम्बवती चैव नीला भद्रा तु लक्षणा ।**
**कालिन्दी मित्रविन्दा च विष्णोः पत्न्यस्त्विमाः षट् ।।**

लक्ष्म्यावेशः सदा त्वासु जाम्बवत्यां तु सोऽधिकः ।
एषां जाम्बवती पञ्चदेवीभ्यश्च स्वरूपतः ।
किञ्च श्रेष्ठेति विज्ञेया ह्येतत्तत्वविचक्षणैः ।
पूर्वस्मादधिकावेशो यदा पञ्चसु वै भवेत् ।
तदा जाम्बवतीतुल्याः प्रीयते केशवोऽप्यलम् ।
पूर्वस्मादधिकावेशो जाम्बवत्यां यदा भवेत् ।
तदा सा शेषतुल्येति विज्ञातव्या विचक्षणैः ।
तदभावदशायां तु शेषात्पञ्चगुणाधमा ।
यदा पञ्चसु देवीषु आवेशो ह्रसते श्रियः ।
तदा ताः पञ्चदेव्यस्तु कामाद्विंशगुणाधिकाः ।

तासां भावदशायां तु ततोऽपि किञ्चिदुत्तमाः ।
एतद्भारततात्पर्ये कथितं सर्वमञ्जसा ।
एतादृग्जाम्बवत्याद्याः शेषात्पञ्चगुणाधमाः ।
**स्पष्टत्वविषये चैतास्त्वनेकगुणतोऽधमाः ।।**
पत्युर्विष्णोः सकाशाच्चानन्तानन्तगुणाधमाः ।।

इदं मूलम् । अस्यार्थः -

शेषादिगानन्दगुणे विभक्ते सति षड्विधा ।
तत्र यश्चरमो भागस्तत्समानन्दमात्रतः ।
पञ्चांशानामभावाच्च पञ्चोनाः सम्प्रकीर्तिताः ।

अत्र मानम् -

अर्थापत्तिरेवात्र मानं सम्परिकीर्तितम् ।
तत्प्रकारश्च हीत्थं तु ज्ञातव्यः सर्वकोविदैः ।
आभासकोऽस्य पवनः पवनस्य रुद्रः ।
शेषात्मको गरुड एव च शक्रकामौ ।
वीन्द्रेशयोस्तदपरे त्वनयोश्च तेषाम् ।
ऋष्यादयः क्रमश ऊनगुणाः शतांशात् ।
इति भारततात्पर्ये कामाच्छतगुणोच्चता ।
गरुडशेषरुद्राणां कथ्यते स्पष्टमेव तु ।

तथा - सर्वे त्वेते दशोत्तराः

इति छान्दोग्यभाष्ये तु कामाद्दशगुणोच्चता ।
उमादीनां च देवीनां कथ्यते च तथैव च ।
उमादीनां सकाशात्तु रुद्रादीनां दशोच्चता ।

तथा प्रद्युम्नतो विंशगुणाधिका स्युः ।
इति भारततात्पर्ये महर्षीणां परात्मनः ।
कामाद्विंशगुणोच्चत्वं कथ्यते स्पष्टमेव तु ।
तदेतद्घटनार्थाय कल्पयेदित्थमञ्जसा ।
कामाद्दशगुणोच्चाभ्यस्तूमादिभ्यः परात्मनः ।
प्रियाणां द्विगुणोच्चत्वमवश्यं परिकल्पयेत् ।
यदा कामाद्दशगुणसौपर्ण्यादिः परात्मनः ।
प्रियाणां महीषीणां तु द्विगुणत्वं भवेत्तदा ।
कामाद् विंशगुणोच्चत्वं स्वत एव भवत्यलम् ।

तथा -

रुद्रादीनां तु कामाच्च शतोच्चत्वस्य सिद्धये ।
महिषीभ्यः पञ्चगुणैरुच्चत्वं परिकल्पयेत् ।
यदा कामाद् विंशगुणमहिषीणां सकाशतः ।
पञ्चाधिकत्वं रुद्रादेस्तदा शतगुणोच्चता ।
रुद्रादीनां भवेदेव नान्यथेदं घटेत् क्वचित् ।
एवमर्थापत्तिरेव मानमत्र प्रकीर्तिता ।
यत्र यत्र च वाक्येषु ह्यनेकांशविहीनता ।
कथ्यते सा तु विज्ञेया स्पष्टत्वविषयेति च ।
एतदेवानुसन्धाय प्रवृत्तं मूलमत्र तु ।
स्पष्टत्वविषये चैतास्त्वनेकगुणतोऽधमाः' ।। इति ।

देवस्त्रियो दशांशोनाः स्वपतिभ्यस्तथा पराः ।
अष्टांशोनाश्च विज्ञेयाः यासां मुक्तौ सह स्थितिः ।

इति ।

बृहद्भाष्यगते वाक्ये देवस्त्रीणां दशोनता ।
कथ्यते तद्वदेवात्र प्रवृत्तं मूलमत्र तु ।
दशोनत्वं भवत्विति प्राप्तशङ्कानिवृत्यर्थं प्रवृत्तं
मूलमत्र तु ।
पत्युर्विष्णोः सकाशाच्च अनन्तानन्तगुणाधमा इति ।

**।। इति षष्ठीकक्ष्या ।।**

**ततः सौपर्णिवारुण्यौ ताभ्यश्च द्विगुणाधमे ।।**

**स्वपतिभ्यां तु ह्येते तु ज्ञेये दशगुणाधमे ।**
**गुणस्पष्टत्वविषये त्वनेकगुणतोऽधमे ।।**
**सरस्वत्याः सकाशात् सहस्रगुणतोऽधमे ।**

इदं मूलम् । अस्यार्थः -

जाम्बवत्यादिगानन्दे विभक्ते सति वै त्रिधा ।
तत्र यश्चरमो भागस्तत्समानन्दमात्रतः ।
द्विभागयोरभावाच्च द्व्यंशोने परिकीर्तिते ।

अत्र मानम् - पूर्वोक्तार्थापत्तिरेव मानमत्र प्रकीर्तिता । 'सर्वे त्वेते दशोत्तराः' ।

इति छान्दोग्यभाष्यं तु स्वपतिभ्यां दशोन्नतौ ।
सुपर्णपत्नी वारुण्योर्ज्ञापकं मानमुत्तमम् ।
तद्देव्यस्तद्दशांशाः स्युः ततस्त्विन्द्रादयो मताः ।
इति तृतीयतात्पर्यवाक्यमप्यत्र ज्ञापकम् ।

ननु -

उमा यावदनन्तांशान् पूर्वदृष्टेभ्य एव तु ।
विशेषान् वासुदेवस्य पश्चादुक्ता विचक्षते' ।
इत्यनुव्याख्यागते वाक्येऽनन्तांशेन हीनता ।
उमादिवाय्वन्तानां कथ्यतेऽतो दशादिना ।
तारतम्यं कथं ज्ञेयम् अस्माभिरिति चेन्न च ।
अत्र वाक्ये त्वनन्तांशतारतम्यं यदुच्यते ।
तत्तु ज्ञानादिस्फुटताविषयं केवलं त्विति ।
विज्ञातव्यमतः कोऽपि विरोधो नैव कश्चन ।
तैत्तिरीयमहाभाष्येऽप्येवमेवोदितं स्फुटम् ।
----------- अनन्तगुणितास्तथा ।
परिमाणे शतगुणेऽप्यानन्दस्फुटतावशात्' इति ।
तथा - उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटाः ।
इति तैत्तिरीयसुभाष्येऽपि जीवसर्वगुणेष्वपि ।
सामान्यतश्च स्पष्टत्वं चोच्यते स्फुटमेव तु ।

अनन्तगुणितास्तथा । परिमाणे शतगुणेऽप्यानन्दे स्फुटतावशात्' इति वाक्यस्यायमर्थः । परिमाणे अणुपरिमाणे । अपि शब्दः समान इति गृह्यते । तथा च सर्वेषां जीवानाम् अणुपरिमाणे समाने स्फुटतावशादिति आनन्दे अपिशब्दोऽप्यत्रानुवर्तते ।

तेन ज्ञानाद्यखिलगुणाः गृह्यन्ते । तथा चाऽनन्दादौ सकलगुणे शतगुणे स्फुटतावशात् सर्वे गुणाः सहस्रगुणिताः अनन्तगुणिताश्च भवन्ति इति तदर्थः ।

नन्वणुमानेन जीवानां समानां स्फुटतादिकम् ।
कथं स्यादिति शङ्कायां कैमुत्यं दृश्यतेऽत्र तु ।
यथा दीपाच्छतगुणाऽप्यग्निज्वाला न दीपवत् ।
स्फुटीभवेद् यथैवाग्निः बहुलोऽपि न सूर्यवत्' इत्यादि ।
यदाऽधिकेन्धनज्वालापेक्षयाऽल्पतरस्य तु ।
दीपस्योच्चप्रकाशित्वं लक्षणास्फुटता तदा ।
मानतः समजीवानाम् अधिकस्फुटता किमु ।

तथा च -

आनन्दादिषु सर्वेषु शतांशन्यूनतैव तु ।
तथैतरेयभाष्योक्तेर्विज्ञातव्या विचक्षणैः ।
यच्चानन्तांशहीनत्वं चोच्यते तत्र तत्र च ।
तत्तु स्पष्टत्वविषयमिति तत्त्वज्ञसम्मतम् ।
एतदेवानुसन्धाय प्रवृत्तं मूलमत्र तु ।
गुणस्पष्टत्वविषये त्वनन्तगुणतोऽधम इति ।
अत्र केचिद्वदन्त्येवमानन्दादिभिरेव वा ।
शतांशेन विहीनत्वं ज्ञानेऽनन्तांशहीनता ।। इति ।
अभिप्रायस्तु तेषां तु ज्ञायते नास्मदादिभिः ।
तथात्वे वायुपत्न्यादेर्ज्ञानाद् ब्रह्मादिकस्य च ।
ज्ञानमेवानन्तगुणं सुखाद्यन्तु शतोत्तरम् ।
इत्येवमङ्गीकार्यं स्यान्नैवैतद्घटते क्वचित् ।
स्वयोग्यभगवद्दृष्टेः सर्वैर्मुक्तिरवाप्यते ।
पुनर्ज्ञानान्तराधिक्यात्सुखाधिक्यं विमोक्षगम् ।
इत्यादि बहुभिर्वाक्यैर्विरुद्धं तत्तथैव च ।

उक्तं च साधनाधिक्यात्साध्याधिक्यं सुखादिषु ।
नाऽधिक्यं यदि साध्ये स्यात्प्रयत्नः साधने कुतः ।
इत्यनुव्याख्यानगे वाक्ये साध्यसाधनयोरपि ।
साम्ये यदुच्यते तच्च विरुद्धं स्यात्तथैव च ।
यावत्सेवा परे तत्त्वे तावत्सुखविशेषता ।
इति स्मृतावविज्ञानसुखयोः समतोच्यते ।
इत्यादिबहुमानानां विरुद्धं चैतदीरितम् ।

तथा -

यथाऽऽनन्दे तथा ज्ञाने विष्णुभक्तौ बलादिके ।
गुणैः सर्वैः शतगुणाः क्रमेणोक्तेन तेऽखिलाः ।
इति तैत्तिरीयसुभाष्येऽपि ह्यानन्दादिगुणेष्वपि ।
सर्वेषु शतगुणोनत्वं प्रोच्यते स्पष्टमेव तु ।
यत्र वाक्ये त्वनन्तांशहीनत्वं तु यदुच्यते ।
तत्तु स्पष्टत्वविषयमित्येवं साधुसम्मतम् ।
पक्षोऽयं शिरसा धार्यः सर्वैरादरपूर्वकम् ।
तस्माद् ब्रह्मापेक्षया च सरस्वत्या गुणेष्वपि ।
सर्वेषु च शतोनत्वं तथा तस्याः सकाशतः ।
शेषादीनां गुणेष्वेषु शतोनत्वमिति स्थितम् ।
तस्मादुमादिदेवानां स्वपतीनां सकाशतः ।
दशांशोनत्वमेवेति सिद्धः पक्षोऽयमञ्जसा ।

'सर्वे त्वेते दशोत्तराः'

इति छान्दोग्यभाष्यं तु चैतत्पक्षप्रसाधकम् ।
तथा 'तद्देव्यस्तद्दशांशा स्युः' इति

तृतीयतात्पर्यवाक्यमप्यत्र साधकम् ।

ननु -

'स्वपतिभ्यो दशोनत्वम् उमादीनां च यच्च यत् ।
उमा च रुद्रश्च भारती वायुरेव च ।
मुक्तावुक्ताः शतगुणाः ।
इत्यैतरेयसुभाष्ये तु ह्युमादीनां शतोनता ।
स्वपतिभ्यः प्रोच्यतेऽतो विरुद्धमिति चेन्न च ।
पार्वतीरुद्रविषये शतशब्दश्च यश्च सः ।
बहुत्वमात्रार्थक इति ज्ञेयः सर्वविचक्षणैः ।
सर्वे त्वेते दशोत्तराः इति वाक्यविरोधो नैव कश्चन ।
सकृच्छ्रुतस्य शब्दस्य मुख्यगौणोभयार्थता ।
कुत्रापि नैव दृष्टेति वक्तव्यं नैव सर्वथा ।
नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन ।
नोपरक्तं नवारिस्थं न मध्यं नभसो गतम् ।
अत्रत्यादित्यशब्दस्तु ह्यादित्येषूद्यदादिषु ।
मुख्योऽपि गौणो वारिस्थे प्रतिबिम्बो यतो हि सः ।
अत्रापि तद्वदेवेति विज्ञातव्यं विचक्षणैः ।

अथवा -

अत्र वाक्ये शतोनत्वं उमादीनां प्रकथ्यते ।
स्वपतीनां सकाशात्तु शतशब्दस्य तत्र तु ।
अनुव्याख्यानसम्मत्या त्वनन्तपरतां वदेत् ।
तत्तु स्पष्टत्वविषयमिति वै कल्प्यते यतः ।
अतः कोऽपि विरोधोऽत्र नैव चिन्त्यः कथञ्चन ।

तस्मादुमादिदेवानां स्वपतिभ्यो दशोनता ।
सिद्धेत्यतो नैव चिन्त्या काऽपि चात्र विरुद्धता ।

**।। इति सप्तमीकक्ष्या ।।**

**ततः शचीरतिपती हीन्द्रकामौ दशाधमौ ।।**

जाम्बवत्याः सकाशात्तु ज्ञेयौ विंशगुणाधमौ ।
गरुडशेषरुद्रेभ्यो ज्ञेयौ शतगुणाधमौ ।
उमादीनां सकाशात्तु स्पष्टत्वे तु शताधमौ ।
किञ्चिन्न्यूनस्तत्र कामो विज्ञातव्यः सदैव च ।
रोचनेन्द्रसकाशात्तु दशलक्षाधमौ स्मृतौ ।
यज्ञनाम्नस्त्विन्द्रदेवादनन्तगुणतोऽधमौ ।

अस्यार्थः -

उमादिगानन्दगुणे त्वेकादशविधाकृते ।
भागे यश्चरमो भागस्तत्समानन्दमात्रतः ।
दशांशानामभावाच्च दशोनौ सम्प्रकीर्तितौ' इति ।

अत्र मानम् - 'सर्वे त्वेते दशोत्तराः' इति छान्दोग्यभाष्यं तु ज्ञापकं मानमुत्तमम् । तथा -

'शेषस्य गरुडस्यापि कालो दिव्यसहस्रकः ।
शेषरुद्रौ ब्रह्मवायू यथा तद्वत्परस्परम् ।
तद्देव्यस्तद्दशांशास्युः ततस्त्विन्द्रादयो मताः' ।
इति तृतीयतात्पर्यवाक्यमप्यत्र मापकम् ।
शक्रकामादयश्चैव विशेषान् ब्रह्मणि स्थितान् ।
उमादिभ्यः प्रबुद्धेभ्यः शतांशानेव चक्षते ।

इत्यनुव्याख्यागते वाक्ये शतोनत्वं यदुच्यते ।
तत्तु स्पष्टत्वविषयमतो नात्र विरुद्धता ।
उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटाः ।
इति तैत्तरीयसुभाष्यस्थादिति वचनात्' ।। इति ।

स्फुटत्वस्फुटतरत्वाद्याः सन्त्यवान्तरजातयः ।
शुक्लत्वशुक्लतरत्वाद्या यथा वै तद्वदेव तु ।

एतेन -

स्फुटत्वस्फुटतरत्वाद्याः विशेषास्स्युः कथं त्विति ।
अनवकाशस्तु शङ्कायास्त्विति वै ज्ञायतेऽञ्जसा ।
तथा चेन्द्ररतीपत्योरुमादीनां सकाशतः ।
दशाधमत्वमेवेति सिद्धं नात्र विरुद्धता ।

'प्राय इन्द्रवत्कामः'

इत्यनुव्याख्यागतं वाक्यं कामस्येन्द्रसकाशतः ।
किञ्चिन्न्यूनत्वविषये मानं सम्परिकीर्तितम् ।
'प्रद्युम्नतो विंशगुणाधिका स्युः' ।
इति भारततात्पर्ये कामाद् विंशगुणोच्चता ।
जाम्बवत्याः कथ्यतेऽतो जाम्बवत्याः सकाशतः ।
कामेन्द्रयोर्विंशगुणहीनत्वं लभ्यते स्फुटम् ।
एतदेवानुसन्धाय प्रवृत्तं मूलमत्र तु ।
जाम्बवत्याः सकाशात्तु ज्ञेयौ विंशगुणाधमौ' ।। इति ।
आभासकोऽस्य पवनः पवनस्य रुद्रः ।
शेषात्मको गरुड एव च शक्रकामौ इति भारततात्पर्ये ।

तथा -

भूपा मनुष्यगन्धर्वाः देवाः पितर एव च ।
आजानेयाः कर्मदेवाः तत्त्वदेवाः पुरन्दरः ।
शिवो विरिञ्च इत्येते क्रमाच्छतगुणोत्तराः ।

इति स्मृतौ च । तथा -

'अवैष्णवकृतं कर्म सर्वमन्तवदुच्यते ।
अनन्तं वैष्णवकृतं तत्र वर्णक्रमात्परम् ।
वैष्णवैरपि मर्त्यैर्यत्कृतं शतगुणं ततः ।
गान्धर्वकर्म तस्माच्च पितृभिर्मुनिभिस्ततः ।
देवशक्रशिवब्रह्मकृतं तस्मात्क्रमेण च ।
शतोत्तरमिति ज्ञेयं नान्यद् ब्रह्मकृतोपमम्' ।

इति भारततात्पर्येऽपि ।

'ते एते शतं देवानामानन्दाः स एक इन्द्रस्यानन्दः । श्रोत्रियस्य चाकामहतस्य । ते एते शतमिन्द्रस्यानन्दाः स एको बृहस्पतेरानन्दः। श्रोत्रियस्य चाकामहतस्य । त एते शतं बृहस्पतेरानन्दाः स एकः प्रजापतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते एते शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः' इति श्रुतौ च । तथा - 'एतावान् पुरुहूतः । तं पुरुहूताः एतावान् वा रुद्रः त एते शतं रुद्राः एतावान् विरिञ्चः'

इत्यादि बहुवाक्येषु रुद्रादीनां सकाशतः ।
कथ्यते च (श)तोनत्वं स्पष्टं वै हीन्द्रकामयोः ।
एतदेवानुसन्धाय प्रवृत्तं मूलमत्र तु ।

गरुडशेषरुद्रेभ्यो ज्ञेयौ शतगुणाधमौ' ।। इति ।
अन्यत्सर्वं सङ्ख्ययैव विज्ञातव्यं विचक्षणैः ।

**।। इत्यष्टमी कक्ष्या ।।**

**ततोऽहङ्कारिकः प्राणो विज्ञातव्यो दशाधमः ।**

**ब्रह्मवाय्वोः सकाशाच्च शतलक्षाधमः स्मृतः ।**

इदं मूलम् । अस्यार्थः -

इन्द्रादिगानन्दगुणे त्वेकादशविधाकृते ।
भागे यश्चरमो भागः तत्समानन्दमात्रतः ।
दशांशानामभावाच्च दशोनः परिकीर्तितः ।

अत्र मानम् -

'प्राण अहङ्कारिक एव च' 'इन्द्रादनन्तरः' ।
इत्यनुव्याख्यागतं वाक्यमत्र मानं प्रकीर्तितम् ।
'सर्वे त्वेते दशोत्तराः' इति
छान्दोग्यभाष्यस्थवाक्यमप्यत्र मापकम् ।
'तथैव नासिकातोऽभून्मुख्यवायोः सुतो मरुत् ।
प्राणो वायुरिति द्वेधा' इत्यैतरेय-
सुभाष्यस्थसद्वाक्यादयमेव तु ।
विज्ञातव्यो बुधैः सर्वैर्नात्र कार्या विचारणा ।

**।। इति नवमी कक्ष्या ।।**

**ततो रतिमनुर्दक्षो शचीगुर्वनिरुद्धकाः ।।**

**दशाधमाः प्रविज्ञेयास्त्वहं वायोः सकाशतः ।**

इन्द्राच्छताधमाः प्रोक्ताः रुद्रादयुततोऽधमाः ।
उमादीनां सकाशात्तु सहस्रगुणतोऽधमाः ।
मुख्यवायोः सकाशात्तु सहस्रगुणतोऽधमाः ।
मुख्यवायोः सकाशात्तु ह्यधमा दशकोटिभिः ।

इदं मूलमस्यार्थः -

अहं वायुगतानन्दे त्वेकादशविधा कृते ।
तत्र यश्चरमो भागस्तत्समानन्दमात्रतः ।
दशांशानामभावाच्च दशोनाः परिकीर्तिताः ।। इति ।

अत्र मानम् - 'सर्वे त्वेते दशोत्तराः' इति छान्दोग्यभाष्यस्थ वाक्यमेवात्र मापकम् । तथा 'अन्नदेवोऽनिरुद्धकः' ।

[1]अन्ननामानुनादित्वात्तेजसाहंभवस्ततः ।
इत्यनुव्याख्यानमप्यत्र मापकं मानमुत्तमम् ।
एष्वप्युच्चावचात्वम् अस्तीत्याहुर्मनीषिणः ।
यथा समेषु रत्नेषु तुलया मानतोऽपि च ।
तथाऽप्युच्चावचावत्वं लावण्याधिक्यतो भवेत् ।
एवं समेषु ज्ञानाद्यैः भवेदुच्चावचादिकम् ।
किञ्चिद्द्विजत्वं पुत्रस्य मातृत्वादिनिमित्ततः ।

तद्यथा - 'यज्ञमान्यनिरुद्धकः' ।

दक्षिणामानिनी देवी रतिरेव तदाश्रया ।
इति बृहद्भाष्ये कामपत्न्याः त्वाश्रयोक्तितस्तथा ।
मातृत्वाच्चानिरुद्धस्य ततो वै किञ्चिदुच्चता ।

---

1. x x x

ज्ञायते स्पष्टमेवात्र ह्येतदेवात्र मापकम् ।
कामपत्न्याश्चोत्तमत्वे तत्पुत्रादनिरुद्धतः ।
एवं बृहस्पतेश्चापि द्विजत्वादिनिमित्ततः ।
दक्षाच्च किञ्चिदाधिक्यं विज्ञातव्यं विचक्षणैः ।
'स एक इन्द्रस्याऽनन्दः श्रोत्रियस्य चाकामहतस्य ।
ते ये शतमिन्द्रस्याऽनन्दाः स एको बृहस्पतेरानन्दः' ।
इति श्रुतावीन्द्रगतानन्दाच्छतगुणोच्चता ।
बृहस्पतेर्देवगुरोरानन्दस्योच्यते हि सा ।
विरुद्धेन्द्रसकाशाच्चोनत्वादेव गुरो रतः ।
भाष्ये तु चन्द्रशब्देन गृहीतो दक्ष एव तु ।
बृहस्पतिपदेनात्र गृहीतो हीन्द्र एव तु ।
तथा चात्रेन्द्रशब्देन वाच्यदक्षगुणस्य च ।
बृहस्पतिपदोक्तस्य हीन्द्रानन्दसकाशतः ।
कथ्यते च शतोनत्वं तैत्तिरीयश्रुतौ स्फुटम् ।
एतदेवानुसन्धाय प्रवृत्तं मूलमत्र तु ।
'इन्द्राच्छताधमाः प्रोक्ताः' इति ।

ननु -

'आभासका त्वथ रमाऽस्य मरुत्स्वरूपात्
श्रेष्ठाऽप्यजा तदनु गीः शिवतो वरिष्ठा ।
तस्या उमा विपतिनी च गिरस्तयोऽस्तु
शच्यादिकाः क्रमशः एव यथा पुमांसः ।
इति भारततात्पर्ये ह्युमादीनां सकाशतः ।
शच्यादीनां शतोनत्वं कथ्यते स्पष्टमेव तु ।

तथा - 'स एक इन्द्रस्याऽनन्दः'

इति श्रुतावीन्द्रदेवाच्छच्यादीनां शतोनता ।
कथ्यते या तु सा नैव घटते तु कदाचन ।
तथात्वेन्द्रोमयोश्चापि साम्यं स्यादिति चेन्न च ।
तात्पर्ये शतशब्दस्य सहस्रवाचितां वदेत् ।
एतदेवानुसन्धाय प्रवृत्तं मूलमत्र तु ।
'उमादीनां सकाशात्तु सहस्रगुणतोऽधमा' ।। इति ।

।। इति दशमी कक्ष्या ।।

**ततः प्रवहनामा तु वायुः पञ्चगुणाधमः ।।**

**गुणस्पष्टत्वविषये ज्ञेयः शतगुणाधमः ।**

इन्द्रात्तु पञ्चशतकैर्गुणैरधम ईरितः ।
अहं वायोः सकाशात्तु पञ्चाशद् गुणतोऽधमः ।
ब्रह्मवाय्वोः सकाशात्तु पञ्चाशत्कोटितोऽधमः ।

इदं मूलमस्यार्थः -

अनिरुद्धादिगानन्दे विभक्ते सति षड्विधा ।
तत्र यश्चरमो भागस्तत्समानन्दमात्रतः ।
पञ्चांशानामभावाच्च पञ्चोनः परिकीर्तितः ।। इति ।

अत्र मानम् - 'अनिरुद्धोऽनिलात्पञ्चगुणाधिकः' इति छान्दोग्यभाष्योक्तिर्ज्ञापिकात्र प्रकीर्तिता ।

ननु 'स एको देवानामानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतमिन्द्रस्याऽनन्दाः' ।

इति श्रुतावीन्द्रशब्दवाच्यस्य तु सतीपितुः ।
देवशब्दोक्तप्रवहाच्छतोच्चत्वं प्रकथ्यते ।
निरवकाशछान्दोग्यभाष्ये पञ्चगुणोच्चता ।
कथ्यतेऽतः कथंमिदं ज्ञातव्यमिति चेन्न च ।
श्रृतौ तु यच्छतोच्चत्वं दक्षस्य कथ्यते हि तत् ।
गुणस्पष्टत्वविषयमतो नात्र विरुद्धता ।
एतदेवानुसन्धाय प्रवृत्तं मूलमत्र तु ।
गुणस्पष्टत्वविषये ज्ञेयः शतगुणाधमः ।। इति ।।
मनुभूपामनुष्यगन्धर्वाः देवाश्च पितरश्चिराः ।
आजानेयाः कर्मदेवास्तत्त्वदेवाः पुरन्दरः ।
शिवो विरिञ्च इत्येते क्रमाच्छतगुणोत्तराः ।
इति गीतासु तात्पर्ये तत्त्वदेवपदोदितात् ।
प्रवहाच्छतगुणोच्चत्वमिन्द्रस्य तु शचीपतेः ।
कथ्यतेऽतः कथं पञ्चशतैरुच्चत्वमुच्यते ।
इति चेन्न च तात्पर्ये शतशब्दश्च यश्च सः ।
पञ्चानां शतवाची स्यादतो नात्र विरुद्धता ।
गणनायां पञ्चशतगुणोच्चत्वं भवत्यलम् ।
एतदेवानुसन्धाय प्रवृत्तं मूलमत्र तु ।
इन्द्रात्तु पञ्चशतकैर्गुणैरधम ईरितः इति ।

।। इत्येकादशी कक्ष्या ।।

**ततो यमो मानवी च चन्द्रसूर्यौ तथैव च ।।**

**चत्वार एते विज्ञेयाः प्रवहाद् द्विगुणाधमाः ।**

रत्यादीनां सकाशात्तु ज्ञेयो दशगुणाधमः ।
अहं वायोः सकाशात्तु ज्ञेयः शतगुणाधमः ।
यमः पुरन्दरादिन्द्रात्सहस्रोनः प्रकीर्तितः ।
रोचनेन्द्रसकाशात्तु शतकोटिगुणाधमः ।
यज्ञनाम्नस्त्विन्द्रदेवादनन्तगुणतोऽधमः ।

इदं मूलमस्यार्थः -

भूतवायुगतानन्दे विभक्ते सति वै त्रिधा ।
तत्रैकभागयुक्तत्वादभावाच्च विभागयोः ।
अतः प्रवहवायोस्तु द्विगुणोनाः प्रकीर्तिताः ।

अत्र मानम् । 'भूतवायुस्तथैव च' । 'द्विगुणा एव' ।

इति छान्दोग्यभाष्योक्त्या यमादीनां सकाशतः ।
भूतस्य द्विगुणाधिक्ये तदूनानां यमादिनाम् ।
द्विन्यूनत्वं भवेदेव काऽपि नात्र विचारणा ।
'सोमवच्छतरूपा च' ।
इत्यनुव्याख्या तु सोमसाम्ये तु ज्ञापिका ।
सूर्यसोमौ यथा सोमः ।
इत्यनुव्याख्या ज्ञापिका यमसूर्ययोः ।
सोमस्य दीक्षारूपा तु शतरूपा समाश्रया ।
एतद्वाक्ये तु मानव्याश्चन्द्राधारत्वमुच्यते ।
अतः सोमान्मानवी तु किञ्चिच्छ्रेष्ठेति कीर्तिता ।

ननु -

'ताभ्यः शतावरास्त्विन्द्रा पुरन्दर इतीरिताः ।
तेभ्यः शतावरास्त्वन्ये इन्द्राश्चान्याश्च देवताः ।
एतस्मिंश्च बृंहद्भाष्ये हीन्द्रदेवाच्छचीपतेः ।
यमेन्द्रस्य शतोनत्वं कथ्यते यच्च तच्च न ।
तथात्वे त्वनिरुद्धस्य तथैव च यमस्य च ।
उभयोश्च शतोनत्वं देवेन्द्रस्य सकाशतः ।
साम्यमेवोभयोः प्राप्तमनिरुद्धयमेन्द्रयोः ।

किञ्च -

'इन्द्रदेवसकाशात्तु शतोनत्वं यदत्र च ।
प्रोच्यते यमदेवस्य तदत्यन्तमसङ्गतम् ।
यमस्य गणनायां तु सहस्राधमतैव वा ।
भवत्यतः कथमिदं प्रोच्यते त्विति चेन्न च ।
भाष्यस्थशतशब्दस्य सहस्रपरतोच्यते ।
अतः कोऽपि विरोधोऽत्र नैव चिन्त्यः कथञ्चन ।
एतदेवानुसन्धाय प्रवृत्तं मूलमत्र तु ।
यमः पुरन्दरादिन्द्रात्सहस्रोनः प्रकीर्तितः इति ।
'ताभ्यश्च ते शतगुणैर्दशतो वरिष्ठाः ।
पञ्चोत्तरैरपि यथा क्रमशः श्रुतिस्थाः ।'
इति भारततात्पर्ये स्वपतीनां सकाशतः ।
देवस्त्रीणां च कासाञ्चिच्छतोनत्वं तथैव च ।
कासाञ्चिच्च दशोनत्वं कासाञ्चित्पञ्चहीनता ।
कासाञ्चिदपि पञ्चेभ्योऽप्युत्तरैः सप्तमादिभिः ।

अत्रोत्तरैरिति पदं दशपञ्चशतादिभिः ।
सम्बध्यतेति विज्ञेयं एतत्तत्वविचक्षणैः ।
तथा च ताभ्यः शतगुणैश्चापि शतैरप्युत्तरैर्गुणैः ।
तथा दशगुणैश्चापि दशेभ्योऽप्युत्तरैर्गुणैः ।
श्रेष्ठानां तत्पत्नीनां तु सत्वादनुपदेव तु ।
सन्दृश्यन्ते तादृशाश्च देवा अपि च केचन ।
तस्माद्धारततात्पर्ये ह्युत्तरैरिति यत्पदम् ।
सम्बन्धस्तस्य वक्तव्यः शतपञ्चदशादिभिः ।
स्वायम्भुवमनोश्चापि देवत्वात्तत्स्त्रियोऽपि च ।
मानव्याः शतरूपायाः दशोनत्वं भवेदलम् ।
एतदेवानुसन्धाय प्रवृत्तं मूलमत्र तु ।
स्वायम्भुवान्मानवी तु ज्ञेया दशगुणाधमा' इति ।
ननु, सूर्याचन्द्रमसौ साम्ये प्रभाधिक्यं रवेः कथम् ।
इति चेन्मण्डलस्यैव प्रभाधिक्यं रवेर्न च ।

ननु -

'तदभिमानिसूर्यस्य तारतम्यं विना कथम् ।
तदभिमन्यमानस्य कथं तदिति चेन्न च ।
वरुणाभिमन्यमानसमुद्रापेक्षयाऽपि च ।
हरेर्विशेषसान्निध्याद्विष्णुपद्याः यथोच्चता ।
तथैव भगवत्तेजो सन्निधानविशेषतः ।
प्रभाधिक्यं भवेद्भानोर्मण्डले सर्वदैव तु ।
'ज्योतिषां रविरंशुमान्' ।
तथा 'यद्यद् विभूतिमत्सत्वम्' ।

इति गीतागतं वाक्यं सन्निधाने तु ज्ञापकम् ।
अन्यत्सर्वं गणनयैव विज्ञातव्यं विचक्षणैः ।

।। इति द्वादशी कक्ष्या ।।

**ततो जलात्मा वरुणः सार्धपादगुणाधमः ।।**

अर्धेन सहितः सार्धः अर्धपादोत्तरपादेनेत्यर्थः । तेन हीन इत्यर्थः । भूतवायोः सकाशात्तु पादोनत्रिगुणाधमः । अस्यार्थः - पादेन ऊनाः पादोनाः पादोनाश्च ते त्रयश्च पादोनत्रयः पादोनत्रयश्च ते गुणाश्च पादोनत्रिगुणाः तैरूना इत्यर्थः ।

शक्रनाम्नः सूर्यदेवात् त्रयोदशशतैर्गुणैः ।
पञ्चसप्ततिभिर्युक्तैरधमः परिकीर्तितः ।

अस्यार्थः - पञ्चसप्ततिभिः पञ्चभिरधिकैः सप्ततिभिः पञ्चसप्तत्युत्तरत्रयोदशशतैर्गुणैरधम इत्यर्थः ।

इदं मूलम् । अत्र मानम् । 'अध्यर्धोनः समो मतः' ।

इत्यनुव्याख्यानमेवात्र मापकं परिकीर्तितम् ।
अन्यत्सर्वं गणनयैव विज्ञातव्यं विचक्षणैः ।

।। इति त्रयोदशी कक्ष्या ।।

**ततः श्रीनारदमुनिः पादार्धेनैव चाधमः ।**

भूतवायोः सकाशात्तु पादान्त्यांशेन संयुतैः ।
तदर्धेनापि संयुक्तैस्त्रिभिस्तु गुणतोऽधमः ।

अस्यार्थः - पादस्य चतुर्धा विभागे कृते सति तत्र योन्त्योंऽशः पादस्य चतुर्थांशस्तेन संयुतैस्तेनाधिकैरित्यर्थः । तदर्धेनापि संयुतै-

स्तस्य पादान्त्यांशस्य अर्धं तदर्धं पादस्य चतुर्थांशार्धं तेनाऽहितै-रधिकैरित्यर्थः । इदं मूलम् ।

वरुणदेवगतानन्दे भक्ते सार्धचतुष्पदैः ।
चतुःपादैश्च युक्तत्वादर्धस्याभावतश्च सः ।
वरुणादर्धपादोनहीनः सम्परिकीर्तितः इति ।

अत्र मानम् - 'वरुणाग्न्यन्तरा तत्र नारदः' ।

इत्यनुव्याख्यानमेवात्र ज्ञापकं मानमुत्तमम् ।
अन्यत्सर्वं गणनयैव विज्ञातव्यं विचक्षणैः' ।

।। इति चतुर्दशी कक्ष्या ।।

**ततो भृगुः प्रधानाग्निः प्रसूतिर्दक्षगेहिनी ।।**

**अधमा इति विज्ञेयाः पादार्धेनैव सर्वदा ।**

**वरुणापेक्षया त्वग्निः पादोनः परिकीर्तितः ।**

पादस्य यश्चतुर्थांशः तदर्धोनैस्तस्य पादस्य । चतुर्थांशस्य यदर्धं तेन ऊनैस्त्रिभिः पदैः पादैः अधम इत्यर्थः ।

पादस्य यश्चतुर्थांशस्तन्न्यूनार्धगुणैर्न च ।
युक्तैस्त्रिभिर्गुणैश्चायं प्रवहस्य सकाशतः ।
अग्निस्त्वधम विज्ञेयो गणनायां विचक्षणैः ।

अस्यार्थः । पादस्य यश्चतुर्थांशस्तेन न्यूनो योऽर्धगुणः तेन युक्तैस्त्रिभिर्गुणैरित्यर्थः ।

तत्र प्रसूतिर्विज्ञेया पत्युर्दक्षसकाशतः ।
पादत्र्यंशाधिकैः सप्त दशकैरधमा मता ।

इदं मूलमस्यार्थः ।

श्रीनारदगतानन्दे भक्तसार्धचतुष्पदैः ।
चतुष्पदैश्च युक्तत्वादर्धस्याभावतस्त्विमे ।
नारदादर्धपादेन हीना सम्परिकीर्तिता ।
तत्र प्रसूतिर्विज्ञेया पत्युर्दक्षसकाशतः ।
पादत्र्यंशाधिकैः सप्त दशकैरधमा मता ।

अस्य मूलस्यायमर्थः - त्रयश्च ते अंशाश्च त्र्यंशाः पादस्य त्र्यंशाः पादत्र्यंशाः पादस्य चतुर्ष्वंशेषु पादस्य ये त्रयोंशा पाद-त्रिंशाधिकाः तैः पादत्र्यंशैरधिकाः एतादृशैः सप्तदशकैः सप्तदशै-र्गुणैरधमेति । 'ताभ्यश्च ते शतगुणैर्दशतो वरिष्ठाः पञ्चोत्तरैरपि यथा क्रमशः सृतिस्थाः' । अत्रोत्तरैरिति शतदशपञ्चानामपि विशे-षणम् । तथा च पादः त्र्यंशाधिकसप्तोत्तरैर्दशगुणैर्वरिष्ठा उत्तमा प्रसूतिर्दक्षादिति ।

इति भारततात्पर्यवाक्यमेवात्र ज्ञापकम् ।
'वरुणाग्न्यन्तरा तत्र नारदः'
इत्यनुव्याख्यानमेवात्र नारदस्य सकाशतः ।
भृग्वादेरधमत्वे तु मानं सम्परिकीर्तितम् ।
तथा 'पादोनो वरुणादग्निः'
इति छान्दोग्यभाष्यं तु वह्नेर्वरुणदेवतः ।
पादाधमत्वविषये मानं सम्परिकीर्तितम् ।
ननु - 'वरुणाग्न्यन्तरा तत्र नारदः'
इत्यनेन च वाक्येन वरुणान्नीचतैव तु ।
नारदस्योच्यते तस्मात्पादार्धन्यूनता कथम् ।

तथा 'पादोनो वरुणादग्निः'
इत्यनेनापि वाक्येन वरुणात्पादोनतैव तु ।
वह्नेर्न त्वर्धहीनत्वं नारदस्येति चेन्न च ।
वह्नेः पादाधिकत्वोक्तेरन्यथानुपपत्तितः ।
कल्प्यते वरुणस्यैव तथा चाग्नेः सकाशतः ।
नारदस्य यदा चार्धपादाधिक्यं भवेत्तदा ।
तस्मादप्यर्धपादेन त्वाधिक्यं वरुणस्य च ।
वह्नेः पादगुणोनत्वं स्वत एव भवत्यलम् ।
तस्मादर्थापत्तिरेव मानमत्र प्रकीर्तितम् ।
अन्यत्सर्वं गणनयैव विज्ञातव्यं विचक्षणैः ।

।। इति पञ्चदशी कक्ष्या ।।

**ततो मरीचिरत्रिश्च पुलस्त्यः पुलहः क्रतुः ।।**
**अङ्गिराश्च वसिष्ठश्च सप्तैते ब्रह्मपुत्रकाः ।**
**कौशिकश्च ऋषिश्रेष्ठो वैवस्वतमनुस्तथा ।।**
**प्रोक्ता नवैते भृग्वादेर्गुणेनैकेन चाधमाः ।**

इदं मूलमस्यार्थः ।

अग्निदेवगतानन्दे विभक्ते सति वै द्विधा ।
तत्रैकगुणयुक्तत्वादन्यस्याभावतस्तथा ।
अतश्चैकगुणेनैव ह्यधमा वह्नितस्त्विमे इति ।

अत्र मानम् -

'मित्रतन्मध्ये ब्रह्मपुत्रकाः' इत्यनुव्याख्यानमेवात्र ज्ञापकं सम्प्रकीर्तितम् । 'ब्रह्मपुत्रकाः मरीच्याद्याः मित्रतन्मध्ये मित्राग्न्योर्मध्ये

परस्परं समाः मित्रादुत्तमाः अग्नेरधमाः' इति सुधा च मरीच्यादयः सप्तैवात्र विवक्षिता इत्यत्र मानम् ।

यद्यप्यत्र ब्रह्मपुत्रा इति सामान्यशब्दतः ।
ब्रह्मपुत्रास्तु ह्यन्येऽपि प्राप्नुवन्ति तथाऽपि तु ।
दक्षनारदयोरग्नेरुत्तमत्वाद् भृगोस्तथा ।
समत्वेनानुव्याख्यानवचने पृथगुक्तितः ।
सनकादिऋषीणां तु शतस्थानामनन्तरम् ।
कथनान्मित्रवह्न्योऽस्तु मध्यस्थत्वं न वै घटेत् ।
तस्मान्मरीचिमुख्यास्तु ग्राह्या सप्तैव चात्र तु ।
'विश्वामित्रः कसूनुवत्' 'वैवस्वतो मनुश्च' ।
इत्यनुव्याख्यागतं वाक्यं विश्वामित्रऋषेस्तथा ।
वैवस्वतमनोश्चापि साम्यमानं प्रकीर्तितम् ।

ननु -

'ततः सनाद्याश्च मरीचिमुख्याः
देवाश्च सर्वे क्रमशः प्रसूताः' ।
इति भारततात्पर्ये अश्व्युत्पत्तेरनन्तरम् ।
सनादीनां मरीच्यादिसप्तर्षीणां तथैव च ।
देवानामपि सर्वेषाम् उत्पत्तिः कथ्यते स्फुटम् ।
तस्मादश्व्युत्तमत्वं मरीच्यादेः कथं भवेत् ।
इति चेन्न मरीचिस्तु ऋषिर्नात्र विवक्षितः ।
मरीचिपदेन किं नाम वायुरेवात्र कश्चन ।
प्रधानवायुजो भूतवायुर्नाम्ना मरीचकः ।
इति श्रीमद्भगवद्गीतातात्पर्योक्तेस्तथैव च ।

'ततो वायोः सुतो मरुत्' ।
इति षट्प्रश्नभाष्येऽपि प्रोक्तो नाम्ना मरीचकः ।

तथा मरुदिति भूतवाय्वभिमानी । भूतवाय्वभिमानवान् ।

'विवक्षितो देव एव तथा मुख्यपदेन तु ।
तस्मादग्निः पावकाख्यः प्रथमोऽग्नेः सुतस्तथा' ।
इत्यादिना च षट्प्रश्नभाष्ये चोक्ताश्च देवताः ।
पावकाद्याः पुष्करान्ताः तथैवाऽजानजा अपि ।
विवक्षित इति ज्ञेया ऋषयोरविवक्षिताः ।

तथा च । ततः नासत्यदस्रयो उत्पत्यनन्तरं मरीचिभूतवाय्वोरवान्तराभिमानी प्रसूतस्तदनन्तरं मरीचिमुख्याः पावकादिपुष्करान्ताः तदधमाः आजानदेवताश्च प्रसूता इति भारततात्पर्यश्लोकार्थः ।

मरीचिमुख्या इत्यत्र ऋषीणां ग्रहणं यदि ।
देवत्वाभावतस्तेषां देवा इति विशेषणम् ।
घटते न ऋषीणां तु सप्तानामश्विदेवताः ।
अधमत्वे न तन्मानम् इति ज्ञेयं विचक्षणैः ।
नारदाच्च ऋषिश्रेष्ठात् सपादार्धगुणेन च ।
अधमा इति विज्ञेया गणनायां विचक्षणैः ।

पादस्यार्धं पादार्धं पादार्धेन सहितः सपादार्धः । सपादार्धश्चासौ गुणश्च सपादार्धगुणः । अर्धपादोत्तरैकगुणेन अधमा इत्यर्थः ।

प्रवहस्य सकाशात्तु सार्धपादस्तु पञ्चभिः ।
पादस्य यश्चतुर्थांशवस्तदर्धेन च संयुतैः ।
हीना इति प्रविज्ञेया मरीच्यत्रादयस्त्विमे ।

अस्यार्थः । अर्धश्चासौ पादश्चार्धपादः अर्धपादेन सहिताः सार्धपादाः तादृशैः । तथा पादस्य यश्चतुर्थांशस्तस्य यदर्धं तेनापि संयुतैः तादृशैः पञ्चभिर्गुणैश्चाधमा इत्यर्थः ।

स्वायम्भुवान्मनुश्रेष्ठः वैवस्वतमनुस्त्वयम् ।
पञ्चविंशद्गुणैश्चायं पादोनगुणतस्तथा ।
पादस्य यश्चतुर्थांशस्तदर्धेनापि संयुतैः ।
अधमः स तु विज्ञेयः तारतम्यविचक्षणैः ।

अस्यार्थः । चतुर्थश्चासौ अंशश्च चतुर्थांशः पादस्य यश्च-तुर्थांशस्तस्य यदर्धं तेन सहितैः तथा पादोनगुणतः पादोनगुणेन च सहितैः पादचतुर्थांशार्धाधिकपादो षड्विंशगुणैरधम इत्यर्थः ।

तापसाच्च मनुश्चायम् अनन्तगुणतोऽधमः । अस्यार्थः स्पष्ट एव । एतत्सर्वं गणनयैव विज्ञातव्यं विचक्षणैः ।

।। इति षोडशी कक्ष्या ।।

**ततो बृहस्पतेर्भार्या तारा मित्रस्तथैव च ।।**

**प्रावही निर्ऋतिश्चेति चतस्त्रस्तास्तु देवताः ।**
**मरीच्यादेः सकाशात्तु गुणेनैकेन चाधमाः ।।**

इदं मूलम् -

'मरीच्यादिगतानन्दे विभक्ते सति वै द्विधा ।
तत्रैकगुणयुक्तत्वादेकस्याभावतस्त्विमे ।
अतो मित्रादिदेवाश्च गुणेनैकेन चाधमाः' इति ।

अत्र मानम् । 'मित्रतन्मध्ये ब्रह्मपुत्रकाः'

इत्यनुव्याख्यागतं वाक्यं मरीच्यादेः सकाशतः ।
मित्रादेरधमत्वे तु ज्ञापकं मानमुत्तमम् ।
नन्वनेन च वाक्येन मरीच्यादेः सकाशतः ।
ऊनत्वमेव सम्प्राप्तं न त्वेकेन गुणोन्नता ।
अतः कथं गुणेनैकेनोनत्वमिति चेन्न च ।
मित्रात्तु द्विगुणत्वोक्तेरन्यथानुपपत्तितः ।
वह्नेरित्थं कल्पनीयं एतत्तत्वविचक्षणैः ।
पर्जन्यमित्रशिखिनः भूतवायुरिति छान्दोग्यभाष्यतः ।
मित्रादेकगुणोच्चत्वम् ऋषीणां कल्प्यते त्विदम् ।
मित्रादेकगुणोच्चेभ्यस्त्वग्नेरेकगुणोच्चता ।
यदा भवेत्तदा मित्राद् द्विगुणोच्चत्वं भवत्यलम् ।
तस्मादर्थापत्तिरेव मानमत्र प्रकीर्तिता ।
तारा च मित्रवत् निर्ऋतिर्मित्रसदृशः ।
मित्रवत्त्वेव प्रावही परिकीर्तिता ।
इत्यनुव्याख्यानमेतेषां साम्ये मानं प्रकीर्तितम् ।
तथा अग्न्यादीनां सकाशात्तु द्विगुणोनाः प्रकीर्तिताः ।

अस्यार्थः स्पष्ट एव ।

वरुणान्नामतः सूर्यान्मित्रनामा तु सूर्यकः ।
सार्धैस्तु द्विगुणैरेव हीनः सम्परिकीर्तितः ।

अस्याप्यर्थः स्पष्ट एव । पादस्यार्धकन्यूनैः सार्धैस्तु त्रिगुणैरयं स्पष्ट एव - विवस्वान्नामकात्सूर्यादधीनः सम्परिकीर्तितः । अस्यार्थः। पादस्यार्धं अर्धपादः तस्याप्यर्धकम् । पादस्य चतुर्थांशस्तेन न्यूनैः

ऊनैः सार्धैस्त्रिभिर्गुणैः पादचतुर्थांशन्यूनैः सार्धैस्त्रिभिर्गुणैरधम इत्यर्थः ।

प्रावही प्रवहभार्या तु प्रवहात्स्वपतेरपि ।
अर्धपादोनकैः सप्तगुणैर्हीना प्रकीर्तिता ।

अस्यार्थः स्पष्ट एव ।

सार्धपादोत्तरश्चैव चतुस्त्रिंशैर्गुणैरियम् ।
[1]x x xर्देवगुरुतस्तारा हीना प्रकीर्तिता ।

अस्याप्यर्थः स्पष्ट एव ।

शक्रनाम्नः सूर्यदेवान्मित्रनामा तु सूर्यकः ।
चतुःशतोत्तरैः सार्धसप्तत्रिंशोत्तरैरपि ।
त्रिसहस्रैः गुणैश्चायम् अधमः परिकीर्तितः ।

अस्यार्थः । अयं मित्रनामा सूर्यः शक्रनाम्नः सूर्यात् त्रिसहस्रैर्गुणैरधमः कीदृशैस्त्रिसहस्रैश्चतुःशतोत्तरैः चतुर्भिः शतैरुत्तरैरधिकैः पुनः कीदृशैः सार्धसप्तत्रिंशतोत्तरैः अर्धेन सहिताः सार्धाः सार्धाश्च ते सप्तत्रिंशाश्च सार्धसप्तत्रिंशाः सार्धसप्तत्रिंशगुणैरप्युत्तरैरधिकैरित्यर्थः । त्रिसहस्रोपरि चतुःशतैर्गुणैस्तथा सार्धसप्तत्रिंशगुणैरधम इत्यर्थः । उरुक्रमाद् हरेः सूर्यादनन्तगुणतोऽधमः अस्यार्थः स्पष्ट एव ।

**।। इति सप्तदशी कक्ष्या ।।**

---

1. x x x

**अथ शेषशतस्थानां कक्ष्या सम्यग्विविच्यते ।**
**पूर्वमुत्तरतः प्रोक्ता शतस्था देवतास्तथा ।**
**उक्तशेषशतस्थाश्च देवता इति भेदतः ।**
**त्रिविधा इति विज्ञेया शतस्थाः सोमपायिनः ।**

तथा चैवं विवेकः । शतस्था त्रिविधाः उक्तशतस्था वक्ष्यमाणशतस्थाः उक्तशेषशतस्थाश्चेति त्रिविधाः शतस्थाः ।

तत्राऽदौ प्रदर्श्यन्ते शतस्था देवतास्तु ताः । तथा हि । प्रधानवायुर्वसवो रुद्रादित्यमरुद्गणाः ।

बृहस्पतिऋभुर्द्यावापृथिव्यावश्विनौ तथा ।
विश्वेदेवाश्च पितरः शतस्था देवतास्त्विमाः ।
एतेषूक्तशतस्थास्तु ज्ञेयाः पञ्चदशा इति ।

तथा हि ।

उरुक्रमेन्द्रवरुणविवस्वान् मित्र एव च ।
पर्जन्यो वक्ष्यमाणश्च ह्यादित्येषु च षट् तथा ।
रुद्रेषूमापतिस्त्वेकस्त्वग्निर्वसुषु हव्यभुक् ।
मुख्यवायुस्त्वहं प्राणः प्रवहानिल एव च ।
बृहस्पतिर्देवगुरुः पितॄणां पतयस्त्रयः ।
ताः पञ्चाशीतिसङ्ख्याकाः विष्वक्सेनस्तथैव च ।
गणेशश्च कुबेरश्च त्रय एते सुरोत्तमाः ।
एवं त्वष्टाशीतिसङ्ख्याः देवतास्तु सुरोत्तमाः ।
एता मित्रादिदेवेभ्यो गुणेनार्धेन चाधमाः ।
उक्तादग्नेर्वसोः सप्त शिष्टाश्च वसवश्च ते ।
सार्धद्विगुणतस्तूना इति ज्ञेया विचक्षणैः ।

वरुणस्य सकाशात्तु सार्धपादैस्त्रिभिर्गुणैः ।
अधमा इति विज्ञेया शतस्थाः शेषसञ्ज्ञिनः ।
पादस्य त्वष्टमांशेन तदर्धेनापि चोत्तरैः ।
सपादकैश्चतुर्भिस्तु गुणैरूना यमादपि ।

अस्यार्थः - पादस्य यस्त्वष्टमांशः । अष्टमो भागस्तेनोत्तरैरधिकैस्तथा । तदर्धेनापि तस्य पादाष्टमभागस्य यदर्धं तेनाप्युत्तरैरधिकैस्तथा । सपादकैः पादेन सहितैः पादोत्तरैरित्यर्थः । एतादृशैश्चतुर्भिर्गुणैरूनाः अधमा इति ।

पादस्य त्वष्टमांशेन तदर्धेनापि चोत्तरैः ।
सार्धैर्गुणैश्चाष्टभिस्तु हीनाः प्रवहवायुनः ।
पादस्य यश्चतुर्थांशस्तदर्धोनैर्गुणैस्त्रिभिः ।
चत्वारिंशद्भिरधिकैर्गुरोर्हीनाः प्रकीर्तिताः ।

अस्यार्थः - पादस्य यश्चतुर्थांशस्तस्य यदर्धं पादस्याष्टमांशस्तेनाधिकैरुत्तरैरेतादृशैः त्रिभिर्गुणैरधिकैरुत्तरैश्चत्वारिंशद्भिर्गुणैः पादाष्टमांशो वा त्रिचत्वारिंशद्गुणैरित्यर्थः । एतैर्गुरोर्बृहस्पतेर्हीना इति ।

पादस्य यच्चतुर्थांशस्तद्युक्तेन च पादतः ।
ऊनैस्त्रिंशगुणोपेतैश्चतुर्भिः शतकैर्गुणैः ।
अहं वायोः सकाशात्तु ह्यधमाः परिकीर्तिताः ।

त्रिंशगुणोपेतैः । त्रिंशगुणोत्तरैरित्यर्थः ।

सार्धपादैस्त्रिभिर्न्यून त्रिंशतोत्तरकैर्गुणैः ।
चतुःसहस्रैरधमा श्रीनाम्नी हीन्द्रगेहिनी ।

शच्याश्च ह्यपरा स्वर्गमानिनी स्वपतेरियम् ।
शेषशतस्थकक्ष्योक्तद्युशब्देनोदिता च या ।

अस्यार्थः स्पष्ट एव ।

सार्धसप्तोत्तराशीति उत्तरैः षट्शतोत्तरैः ।
त्रिंशत्सहस्रैरेकोनैश्चतुर्लक्षाधमा मताः ।
उमापतेः सकाशात्तु शतस्थाः शेषसञ्ज्ञिनः ।।

अस्यार्थः - सार्धसप्तोत्तराशीत्युत्तरैः सार्धसप्तोत्तराशीति गुणैरुत्तरैरधिकैरेतादृशै षट्शतैरुत्तरैरधिकैः तथा एकोनत्रिंशत्सहस्रैश्चाधिकैश्चतुर्लक्षगुणैरधमा इत्यर्थः । कोऽर्थः । चतुर्लक्षोपरि-सार्धसप्तोत्तराशीतिगुणोत्तरैः षट्शतैः एकोनत्रिंशच्छतैः एकोन-त्रिंशत्सहस्रैश्चाधमा इत्यर्थः ।

'प्रधानवायुतः सप्तचत्वारिंशन्मरुद्गणाः ।
एकोनत्रिंशत्कोटीभिः सह कोटिचतुःशतैः ।
अष्टषष्टिकलक्षैश्च पञ्चसप्ततिभिस्तथा ।
सहस्रैरधमा ज्ञेयाः शतस्थाः शेषसञ्ज्ञिनः ।

अस्यार्थः - एकोनत्रिंशत्कोटीभिः सह एकोनत्रिंशत्कोट्युत्तरैः कोटिचतुःशतगुणैः तथा । अष्टषष्टिकलक्षैस्तथा पञ्चसप्ततिभिः सहस्रैरधमाः कोऽर्थः । चतुःशतकोट्युपरि एकोनत्रिंशत्कोटिगुणैस्तथा पञ्चसप्ततिसहस्रोत्तरैरष्टषष्टिलक्षगुणैः शेषसञ्ज्ञिनः शेषा इति सञ्ज्ञा येषां ते शेषसञ्ज्ञिनः शतस्थाः शेषशतस्थाः देवा इत्यर्थः । अहं वायोः सकाशात्तु अधमाः नीचाः ।

उक्तशेषशतस्था तु धरा पत्नी पतिव्रता ।
पत्युर्विष्णोः सकाशात्तु हीनाऽपरिमितैर्गुणैः ।

अस्यार्थः स्पष्ट एव । इदं मूलम् - तत्र 'एता मित्रादिदेवेभ्यो गुणेनार्धेन चाधमाः' इत्यस्यायमर्थः -

मित्रादिगानन्दगुणे विभक्ते सार्धद्विभागतः ।
तत्र द्विभागयुक्तत्वादर्धस्याभावतस्त्विमे ।
मित्रादीनां सकाशात्तु गुणेनार्धेन चाधमाः ।
x x x x x x सत्वर्यमांशसुसञ्ज्ञिनोः ।

आदित्ययोः सन्निवेशः कथ्यते स्पष्टमेव तु ।
आदित्येष्वंशनाम्नस्तु सूर्यस्यैवाप्रसिद्धितः ।
आवेशस्तु कथं तस्य घटते त्विति चेन्न च ।
आदित्येष्वेव ह्येतेषु ह्यादित्यस्य तु कस्यचित् ।
नामान्तरं त्वंश इति विज्ञातव्यं विचक्षणैः ।
एवमेव तु सर्वेषां सन्ति नामान्तराण्यपि ।
केचिदाहुस्त्वाधुनिकास्त्वयं स्यात्त्वंशकस्य च ।
द्वयोरादित्ययोरेतावत्वतारौ शठोल्मुकाविति ।
नन्वादित्येष्वंशनामा तु सूर्यो नास्तीति चेन्न च ।
इन्द्रो विवस्वान् पूषा च त्वष्टाऽथ सविता तथा ।
धाताऽर्यमा च मित्रश्च वरुणांशो भगस्तथा ।
इति प्रमाणसिद्धोऽयमंशनामा तु सूर्यकः ।
तस्माद्विरूपाक्षवद् अंशनामापि कश्चन ।
सूर्यश्चास्तीति ज्ञातव्यमेतत्तत्त्वविचक्षणैः ।

अथ मरुद्गणाः -

प्राणोऽपानस्तथा व्यान उदानश्च समानकः ।
नागश्च कृकलः कूर्मो देवदत्तो धनञ्जयः ।
प्रवहो विवहः शंयुः शंवहश्च परावहः ।
उद्वहश्चावहश्शङ्कुः कालश्वासानलोऽनिलः ।
प्रतिभः कुमदः कान्तः शुचिः श्वेतोऽजितो गुरुः ।
सञ्ज्ञाप्रवर्तकः कालोऽदितिः सोम्यो कपिर्जडः ।
मण्डूकः सन्ततः सिद्धो रक्तः कृष्णो पिकः शुकः ।
यतिर्भीमो हनुः पिङ्गोऽहंप्राणः कम्पनस्तथा ।
सप्तसप्तकसङ्ख्याकाः मरुतोऽमी प्रकीर्तिताः ।
चक्रगन्धर्वान्तरिक्षनामभेदाः प्रकीर्तिताः ।

तेषां वायुसुतश्चक्र इत्यादि बहुधोक्तिभ्यः त्रयोऽत्रापर-नामकाः । तथा 'पवनगणवरांशौ श्वेतसम्पातिनौ च' तथा 'केसरीति प्रवरमथ मरुत्सु' ।

इति भारततात्पर्यवाक्यादपि च ज्ञायते ।
एकोनपञ्चांशत्स्वेतेषु गणाः सप्तमरुत्सु च ।
अन्तर्भूता इति ज्ञेया एतत्तत्वविचक्षणैः ।

एतच्चोक्तम् ऋग्भाष्यटीकायां - 'सप्तसप्तकोटिमरुद्गणाः' इति बहुवचनम् ।

तत्रैकैको गणः सप्तसप्तात्मकोऽस्ति हि ।
एता भूमिं समारभ्य ध्रुवमण्डलमेव च ।

उक्तशेषशतस्था तु धरा पत्नी पतिव्रता ।
पत्युर्विष्णोः सकाशात्तु हीनाऽपरिमितैर्गुणैः ।

अस्यार्थः स्पष्ट एव । इदं मूलम् - तत्र 'एता मित्रादिदेवेभ्यो गुणेनार्धेन चाधमाः' इत्यस्यायमर्थः -

मित्रादिगानन्दगुणे विभक्ते सार्धद्विभागतः ।
तत्र द्विभागयुक्तत्वादर्धस्याभावतस्त्विमे ।
मित्रादीनां सकाशात्तु गुणेनार्धेन चाधमाः ।
x x x x x x सत्वर्यमांशसुसञ्ज्ञिनोः ।

आदित्ययोः सन्निवेशः कथ्यते स्पष्टमेव तु ।
आदित्येष्वंशनाम्नस्तु सूर्यस्यैवाप्रसिद्धितः ।
आवेशस्तु कथं तस्य घटते त्विति चेन्न च ।
आदित्येष्वेव ह्येतेषु ह्यादित्यस्य तु कस्यचित् ।
नामान्तरं त्वंश इति विज्ञातव्यं विचक्षणैः ।
एवमेव तु सर्वेषां सन्ति नामान्तराण्यपि ।
केचिदाहुस्त्वाधुनिकास्त्वयं स्यात्त्वंशकस्य च ।
द्वयोरादित्ययोरेताववतारौ शठोल्मुकाविति ।
नन्वादित्येष्वंशनामा तु सूर्यो नास्तीति चेन्न च ।
इन्द्रो विवस्वान् पूषा च त्वष्टाऽथ सविता तथा ।
धाताऽर्यमा च मित्रश्च वरुणांशो भगस्तथा ।
इति प्रमाणसिद्धोऽयमंशनामा तु सूर्यकः ।
तस्माद्विरूपाक्षवद् अंशनामापि कश्चन ।
सूर्यश्चास्तीति ज्ञातव्यमेतत्तत्त्वविचक्षणैः ।

अथ मरुद्गणाः -

प्राणोऽपानस्तथा व्यान उदानश्च समानकः ।
नागश्च कृकलः कूर्मो देवदत्तो धनञ्जयः ।
प्रवहो विवहः शंयुः शंवहश्च परावहः ।
उद्वहश्चावहश्शङ्कुः कालश्वासानलोऽनिलः ।
प्रतिभः कुमदः कान्तः शुचिः श्वेतोऽजितो गुरुः ।
सञ्ज्ञाप्रवर्तकः कालोऽदितिः सोम्यो कपिर्जडः ।
मण्डूकः सन्ततः सिद्धो रक्तः कृष्णो पिकः शुकः ।
यतिर्भीमो हनुः पिङ्गोऽहंप्राणः कम्पनस्तथा ।
सप्तसप्तकसङ्ख्याकाः मरुतोऽमी प्रकीर्तिताः ।
चक्रगन्धर्वान्तरिक्षनामभेदाः प्रकीर्तिताः ।

तेषां वायुसुतश्चक्र इत्यादि बहुधोक्तिभ्यः त्रयोऽत्रापर-नामकाः । तथा 'पवनगणवरांशौ श्वेतसम्पातिनौ च' तथा 'केसरीति प्रवरमथ मरुत्सु' ।

इति भारततात्पर्यवाक्यादपि च ज्ञायते ।
एकोनपञ्चांशत्स्वेतेषु गणाः सप्तमरुत्सु च ।
अन्तर्भूता इति ज्ञेया एतत्तत्वविचक्षणैः ।

एतच्चोक्तम् ऋग्भाष्यटीकायां - 'सप्तसप्तकोटिमरुद्गणाः' इति बहुवचनम् ।

तत्रैकैको गणः सप्तसप्तात्मकोऽस्ति हि ।
एता भूमिं समारभ्य ध्रुवमण्डलमेव च ।

आध्रुवमण्डलं ध्रुवमण्डलं मर्यादीकृत्येत्याध्रुवमण्डलं ध्रुवमण्डलपर्यन्तरमित्यर्थः ।

तत्र भूमिं समारभ्य मेघमण्डलमेव तु ।

आमेघमण्डलं मेघमण्डलपर्यन्तम् ।

आवहनामैकगणो वर्तते च सविस्तरम् ।
यद्गणे यस्तु प्रथमः तन्नाम्ना तद्गणोऽपि च ।
प्रोच्यते त्विति विज्ञेयं नान्यथा तु कथञ्चन ।
गणः प्रवहनामा तु द्वितीये मेघमण्डलम् ।
आरभ्य वर्तते भानोर्मण्डलान्तं तृतीयकः ।
गणस्तूद्वहनामा तु आरभ्य सूर्यमण्डलम् ।
चन्द्रमण्डलपर्यन्तमभिव्याप्य तु वर्तते ।
चतुर्थः संवहो नाम प्रारभ्य चन्द्रमण्डलम् ।
नक्षत्राणामभिव्याप्य मण्डलं वर्तते गणः ।
पञ्चमो विवहो नाम नक्षत्राणां तु मण्डलम् ।
आरभ्य च ग्रहाणां तु मण्डलान्तं प्रतिष्ठति ।
यः परावहनामा तु गणः षष्ठो हि मण्डलम् ।
ग्रहाणां तु समारभ्य सप्तर्षीणां तु मण्डलम् ।
वर्तते समभिव्याप्य तथैव सप्तमो गणः ।
ऋषीणामुपरिष्टात्तु मण्डलान्तं ध्रुवस्य च ।
तिष्ठत्येवं तु विज्ञेयं गणनास्थितिरीदृशी ।
मरुत्स्वेतेष्वहङ्कारः प्रवहो बहुभिर्गणैः ।
स्वरूपेणैव ह्यधिको मित्रादिव्यवधानतः ।

प्रोक्तत्वादिति विज्ञेयं प्राणादेः पञ्चकस्य तु ।
एककक्ष्यागतत्वेऽपि ज्ञेया वै किञ्चिदुच्चता ।

अत्र मानम् । 'मरुतश्च समाः सर्वे सप्त तेषु प्रधानकाः' इति श्रुतिगीतासु वाक्यमेवात्र ज्ञापकम् ।

क्वचिच्च श्वेतसम्पातिनाम्नोश्च कपिपुङ्गवयोः ।
परावहसुनाम्नोऽपि ह्युत्तमत्वं क्वचित् क्वचित् ।
एककक्ष्यागतत्वेऽपि प्रोच्यते हि च यच्च यत् ।
किञ्चिदुच्चत्वमेवेति ज्ञेयं तत्त्वविचक्षणैः ।

अत्र मानम् ।

देवादिष्वेव सर्वेषु प्रोक्ता अपि हि विशेषिणः ।
पञ्चाशतो दशांशाद् वा स्वस्वजात्यां परस्परम् ।

एकस्य तु गुणस्य पञ्चधा दशधा विभक्ते सति यः पञ्चमो दशमो वा अंशस्तस्मादधिका इत्यर्थः । बृहस्पतिर्देवगुरुरेक एवेति विज्ञायते । 'ततोऽप्येषां शैब्यनामार्भुरग्रे' इति भारततात्पर्यप्रसिद्धो ऋभुनामकः । देवोऽपि ह्येक एवेति विज्ञातव्यः सुरोत्तमः । किञ्च अयं देवायेर्त्यृग्भाष्यटीकायां च 'ऋभुनामैक एव विश्वाराजिश्चा-परौ । तथाऽपि साहचर्यादिकनाम्ना त्रयोऽप्युच्यन्ते ।

इत्युक्तत्वादपि ऋभरेक एवेति ज्ञायते ।
ऋभोरेतस्य विलयस्त्वग्नावेवेति ज्ञायते ।
अग्नौ देवा विलीयन्ते विशन्ति शिष्टा अपि हव्यवाहम् ।
इत्यनुव्याख्याश्रुती चात्र ज्ञापके परिकीर्तिते ।

ननु -

ऋभवो नाम ये देवा सोमं प्राप्ताः सहस्रशः ।
इति स्मृतौ ऋभूणां तु पृथिव्यां लय उच्यते ।
अतः कथं लयस्त्वंग्नावुच्यते त्विति चेन्न च ।
ऋभवो नाम ये देवा सोमं प्राप्ताः सहस्रशः इति ।
पुराणोक्तास्तु ऋभवः पृथिव्या ह्यधमास्तु ते ।
तत्र वै लयवन्तश्च ह्यन्ये तस्माद् ऋभोरिमे ।
ऋभुस्त्वयं पृथिव्यास्तु समस्तत्र न वै लयः ।
सोमाधिकारस्त्वेषां तु तपसा च वरादिना ।
सोमाधिकारो वेदोक्तस्त्वेषां नैव कदाचन ।
सोमाधिकारस्त्वेतस्य वेदोक्त इति वै स्मृतः ।
तस्मात्समत्वात्पृथिव्या ऋभोरत्र न वै लयः ।
दिवशब्देन चैवात्र स्वर्गावान्तरमानिनी ।
शक्रभार्या तु श्रीनाम्नी याद्धा[1] शच्याः पुरा तु या ।

यथोक्तम् -

सुरेन्द्रलोकश्रीरेव शक्रदयिता त्वपरैव शच्याः ।
इति भारततात्पर्ये प्रसिद्धा हीन्द्रगेहिनी ।
अत्राऽहुरार्यास्त्वन्येषु वायुपत्नी तु भारती ।
द्युशब्देनात्र ग्राह्येति परतत्वविचक्षणाः ।
पृथ्वीशब्देन वै चात्र धराऽवान्तरमानिनी ।
धरा ग्राह्या वराहस्य पत्न्यन्या या श्रियस्त्विति ।

1. याऽन्या इति स्याद्वा

अन्ये त्वाहुर्द्रोणभार्या धरानाम्नी तु देवता ।
पृथ्वीशब्देन ग्राह्येति निर्णये च तथोक्तितः ।
'द्रोणनामा वसुः सः स्वभार्यया धरयेति' ।
अभिप्रायस्तु तेषां तु ज्ञायते नास्मदादिभिः ।
तथात्वे द्रोणधरयोर्दाम्पत्यं न घटेत् क्वचित् ।
देवस्त्रीणां भर्तृसाम्यं कुत्रापि नैव दृश्यते ।

यथोक्तं बृहद्भाष्ये -

देवस्त्रियो दशांशोनाः स्वपतिभ्यस्तथापराः ।
अष्टांशोनाः प्रविज्ञेयाः यासां मुक्तौ सहस्थितिः' इति ।

अश्विनौ द्वौ । अग्नीषोमवदश्विनोरेकहविर्भागित्वरूपस्य देवतात्वस्येकत्वेऽपि व्यक्त्यवनेकत्वस्य अपह्नवायोगात् ।

अथ विश्वेदेवाः - 'इष्टिश्राद्धे क्रतुर्दक्षः सकीर्त्यौ वैश्वदेविके । नान्दीमुखे सत्यवसू काम्ये धुरिलोचनौ । पुरूरवार्द्रवा च वै पार्वणे समुदाहृतौ । नैमित्तिके कालकामावेवं सर्वत्र कीर्तयेत्' इति स्मृत्युक्तदशविश्वे देवाः । अथ पितरः -

प्राज्ञा प्राहुस्त्वाधुनिकास्त्वेतस्मिन् विषयेऽत्र तु ।
वसुरुद्रादित्यसञ्ज्ञाः पितरः श्राद्धदेवताः ।

इति स्मृत्युक्ताः । तथा -

'वसवः पितरो ज्ञेयाः रुद्रास्तत्र पितामहाः ।
पितुः पितामहाः प्रोक्ता आदित्या बर्हिषि स्थिताः' ।

इत्यादौ च प्रोक्ता वसुरुद्रादित्या इति त्रयो देवविशेषा एव पितृत्रयः । न तु गणदेवताः । गणदेवतायां पृथग्गृहीतत्वेन पुनः

पितृत्वेन ग्रहणवैयर्थ्यात् । शतसङ्ख्यायाः न्यूनत्वप्रसङ्गाच्चेति वर्णयन्ति । अत्र स्मृतौ पितरः पितामहा इति बहुवचनम् एकपिण्डभागिनः पितृतदनुवर्तिनश्चापेक्ष्य । अत एव 'बर्हिषि स्थिताः' इत्युक्तम् । बर्हिरास्तरणं कृत्वा शुन्धन्तां पितरः शुन्धन्तां पितामहाः इति बहुवचनप्रयोगादिति भावः । अत्र केचित्तु 'इष्टिश्राद्धे क्रतुर्दक्षः' इत्युक्तस्मृत्या तत्तच्छ्राद्धे द्वयोर्द्वयोरेव विश्वेदेवत्वेऽपि 'आगच्छन्तु महाभागा विश्वेदेवा महाबलाः' । इति पूजाख्यापनार्थं यथाबहुवचनम् तथा 'शुन्धन्तां पितरः' इति श्रुतौ 'वसवः पितरो ज्ञेयाः' इति तदनुसारिस्मृतौ च पूज्यत्वज्ञापनार्थं बहुवचनमित्याहुः। अस्मद्गुरुचरणास्तु पितृणां बहुत्वेऽपि सोमपानार्हास्त्रय एव ग्राह्याः ते च सोमो यमोऽग्निश्चेति । हव्यवाडनलश्च सोमो यमश्चैवार्यमा तथा' इत्युक्त्वा । 'अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः' । इति गयामाहात्म्ये यमादीनां पितृपतित्वेन सोमपातृत्वोक्तेः । 'सोमः पितृमान् यमोऽङ्गिरस्वानग्निकव्यवाहनादयो ये पितरः' इत्याश्वलायनगृह्यपरिशिष्टे स्नानाङ्गपितृतर्पणकथनप्रसङ्गे 'सोमाय पितृमते स्वधा नमः स्वाहा सोमाय पितृमते पुरोडाशं षट्कपालम्' इत्यादौ च सोमादीनां पितृपतित्वेन पितृमत्वस्योक्तेः । तथा । यमाय सोमं सुनुता यो न इन्दुः पितरो हृत्सु पीतः त्वं सोम पितृभिः संविदानः ।राज्ञा वै पूर्वेऽपि यं तस्माद्यामीमेव पूर्वं शंसेत्। 'त्वमग्न ईलितो जातवेदो' इत्यादिवेदेऽपि यमादीनां सोमपानावगतेश्च' इति । तस्माद् द्यावापृथिव्योः अश्विनोश्च द्वित्वं पितृणां च त्रित्वं ऋभोरेकत्वमेवेति सिद्धम् । अग्नेर्वस्वन्तस्थत्वेन चेति रूपद्वयेन सोमपानं ज्ञेयम् ।

एवं प्रधानवाय्वाद्याः वेदोक्ताः सोमपायिनः ।
शतस्था इति विज्ञेयाः स्मृत्युक्ता देवतोत्तमाः ।
एतेषूक्तशतस्थास्तु पूर्वमेव प्रदर्शिताः ।
श्रीनाम्न्याः स्वर्गमारिच्याः हीन्द्रपत्न्या यदुच्यते ।
तत्रोक्तसङ्ख्यया पत्युरिन्द्रादूनत्वमञ्जसा ।
गणनादेव तद्ज्ञेयं गणनायां विचक्षणैः ।
धरादेव्यास्त्वनन्तांशहीनत्वं परमात्मनः ।
कैमुत्यसिद्धमेवेति नात्र कार्या विचारणा ।

।। इत्यष्टादशी कक्ष्या ।।

**ततस्त्वण्डान्तरे एव कर्मणा देवतां गताः ।।**

**एतादृक्कर्मदेवास्तु बल्याद्या मनवोऽपि च ।**
**एकादशाष्टौ गन्धर्वाः पितॄणां सप्तकं तथा ।।**

**राजानः शतसङ्ख्याकाः वैन्याद्याश्चक्रवर्तिनः ।**
**ऋषयोऽशीतिसङ्ख्याकाः गृहधर्मरताः सदा ।।**

**दशसंन्यासिनश्चैव सनाद्याश्चोर्ध्वरेतसः ।**
**एवं नवतिसङ्ख्याकाः ऋषयो ब्रह्मतत्पराः ।।**

**अर्चिनामा पावकश्च प्रधानाग्नेः सुतस्तथा ।**
**ऊर्वश्याद्याश्चाप्सरसः षडेवात्र प्रकीर्तिताः ।।**

**मङ्गलः शुक्रराहुश्च केतुः प्रह्लाद एव च ।**
**तथैवार्चिरमार्गस्थाः धूमादिमार्गगा अपि ।।**

**पाददेवो जयन्तश्च जयाद्याः विष्णुपार्षदाः ।**
**मरीचिर्भूतवाय्वात्मा चित्रगुप्तस्तु लेखकः ।।**

**इत्याद्याः कर्मजसमा ये च तेऽर्धगुणाधमाः ।**

मित्रनाम्नः सूर्यदेवाद् गुणेनैकेन चाधमाः ।
मरीच्यादेः सकाशात्तु द्विगुणोनाः प्रकीर्तिताः ।
अग्नेः सकाशतस्त्वेते त्रिगुणोनाः प्रकीर्तिताः ।
श्रीनारदसकाशाच्च सार्धपादाधिकैस्त्रिभिः ।
गुणैर्हीनाः प्रविज्ञेया बल्याद्याः कर्मदेवताः ।

वरुणस्य सकाशात्तु पादोनैश्च चतुर्गुणैः ।
हीना इति प्रविज्ञेया ह्येताः कर्मजदेवताः ।

यमादीनां सकाशात्तु सार्धपादैस्तु पञ्चभिः ।
पादस्य यच्चतुर्थांशः तदर्धेन च संयुतैः ।
हीना इति प्रविज्ञेया गुणैरेताश्च देवताः ।

प्रवहस्य सकाशात्तु बल्याद्याः कर्मदेवताः ।
पादार्धार्धेन युक्पादसहितैर्दशभिर्गुणैः ।
अधमा इति विज्ञेया गणनायां विचक्षणैः ।

पादार्धार्धेनेत्यस्य मूलस्य अयमर्थः - पादार्धार्धो न पादस्यार्धं पादार्धपादार्धं पादार्धार्धेन युक् युक्तश्चासौ पादश्च । अयमर्थः । तेन सहितैर्दशभिर्गुणैः अधमा इति ।

गुणस्पष्टत्वविषये प्रवहस्य सकाशतः ।
शताधमाः प्रविज्ञेया बल्याद्याः कर्मदेवताः ।
स्वायम्भुवसकाशात्तु सार्धेनैकगुणेन तु ।
पादस्य यश्चतुर्थांशस्तद्युक्तेनापि वै तथा ।
युक्तैस्तु ह्येकपञ्चाशद् गुणैस्तु ह्यधमा मताः ।

इन्द्रदेवसकाशात्तु सपादषड्गुणैर्युतैः ।
सार्धैस्तु शतकैः पञ्चसहस्रैरधमा मताः ।

अस्यार्थः - इन्द्रदेवसकाशात्तु सपादषड्गुणैर्युतैः सार्धैस्तु शतकैः पञ्चसहस्रैरधमाः मताः । इन्द्रदेवसकाशात्तु पञ्चसहस्रैरधमाः । कथम्भूतैः पञ्चसहस्रैः सार्धशतकैर्युक्तैः सार्धशतकोत्तरैरित्यर्थः । पुनः कथम्भूतैः पञ्चसहस्रैः सपादषड्गुणैः पादेन सहिताः सपादाः। सपादाश्च ते षड्गुणाश्च सपादषड्गुणाः पादोत्तरषड्गुणैरित्यर्थः। तैर्युक्तैरेतादृशैः पञ्चसहस्रैरधमा इति ।

रोचनेन्द्रसकाशात्तु बल्याद्याः कर्मदेवताः ।
सार्धद्विषष्टिकलक्षयुक्पञ्चदशकोटिभिः सहितैः ।
पञ्चशतककोटिभिस्त्वधमा मताः ।

अस्यार्थः - कर्मदेवताः पञ्चशतकोटिगुणैरधमाः । कीदृशैः सार्धद्विषष्टिकलक्षयुक्पञ्चकोटयः ताभिः सार्धद्विषष्टिलक्षगुणैर्युजः युक्ताः एतादृशाश्च ताः पञ्चदशकोटयश्च सार्धद्विषष्टिलक्षयुक्पञ्चदशकोटिभिः ताभिः सार्धद्विषष्टिलक्षाधिकपञ्चदशकोटिगुणोत्तरैः । पञ्चशतकोटिगुणैरित्यर्थः । पञ्चदशकोट्युत्तरपञ्चशतकोट्युपरि सार्धद्विषष्टिलक्षगुणैरधमा इति फलितोऽर्थः ।

**यज्ञनाम्नस्त्विन्द्रदेवादनन्तगुणतोऽधमाः ।**

इदं मूलम् । अस्यार्थः -

शेषशतस्थगानन्दभक्ते सार्धगुणेन तु ।
तत्रैकगुणयुक्तत्वादर्धस्य च विहीनतः ।
गुणार्धेनैव ह्यधमाः इति वै सम्प्रकीर्तिताः ।

पर्जन्याद्यधिकत्वोक्तेरन्यथानुपपत्तितः ।
मित्रस्य कल्प्यते त्वित्थं नान्यथेदं घटेत् क्वचित् ।

अत्र मानम् -

चतुःश्लोकात्मके सर्वैर्मान्ये वै तारतम्यके ।
अज्ञातकर्तृकेऽश्वादिदेवेभ्यश्च ह्यनन्तरम् ।
कर्मजसमानानां वैन्यादीनां च भूभृताम् ।
प्रोक्तत्वाच्च तदेवात्र कर्मजानां तु नाकिनाम् ।
अश्विदेवाधमत्वे तु ज्ञापकं मानमुत्तमम् ।
ताभ्यः शतवरास्त्विन्द्रा पुरन्दर इतीरिताः ।
तेभ्यः शतावरा त्वन्ये इन्द्राश्चान्याश्च देवताः ।
द्वित्रिपञ्चादिगुणतः परस्परविशेषिणः ।
सनत्कुमारस्तु सदा पुरन्दरसमो मतः ।
सनकाद्या नारदश्च दक्षभृग्वादयोऽपि च ।
देवावरा यथा तद्वन्मनवोऽपि प्रकीर्तिताः ।
त्रिचतुर्भागभेदेन तेऽप्यन्योऽन्यविशेषिणः ।
इत्यादीनि च वाक्यानि ह्यन्येषां चोक्तसङ्ख्यया ।
परस्पराधमत्वे तु सन्ति वै ज्ञापकानि च ।
निष्प्रमाणमिदं सर्वम् इति वाच्यं न सर्वथा ।

ननु 'ते ये शतं देवानामानन्दाः स एक इन्द्रस्याऽनन्दः' ।

इति श्रुतौ देवशब्दगृहीतात्प्रवहानिलात् ।
कर्मजानां शतोनत्वं प्रोच्यते स्पष्टमेव तु ।

तथा -

कार्तवीर्यः पृथुश्चैव दौष्यन्तिर्भरतस्तथा ।
शशबिन्दुश्च मान्धाता ककुस्थाद्यास्तथापरे ।
सर्वे ते विष्णुनाऽऽविष्टाः विष्णोर्भिन्नाः सदैव हि ।
शतावराश्च देवेभ्यः कर्मदेवा इति स्मृताः ।
इति चात्र बृहद्भाष्ये तत्त्वदेवसकाशतः ।
प्रोच्यते यच्छतोनत्वं तदत्यन्तमसङ्गतम् ।
यद्यत्र देवशब्देन वह्न्याद्याश्च विवक्षिताः ।
अश्विभ्योऽर्धगुणोनत्वादग्नेस्तु त्रिगुणत्वतः ।
अतोऽत्र देवशब्देन ग्राह्या नाग्न्यादिदेवताः ।
विवक्षिताश्चेच्चन्द्राद्यास्तत्पक्षोऽपि न सम्भवेत् ।
जलदेवाच्च पादोनचतुर्भिर्गुणतोनता ।
कर्मजानां भवत्यस्माद् वरुणो न विवक्षितः ।
चन्द्रादीनां सकाशात्तु पञ्चभिः किञ्चिदुत्तरैः ।
कर्मजानां भवत्यस्मात्तेऽपि नैव विवक्षिताः
प्रवहोऽपि न वै चात्र ग्राह्यो देवपदेन तु ।
प्रवहादधमत्वं तु दशभिः किञ्चिदुत्तरैः ।
कर्मजानां भवत्यस्मात् सोऽपि नैव विवक्षितः ।।
इति चेन्न श्रुतौ चात्र शतोनत्वं यदुच्यते ।
शतावराश्च देवेभ्यः कर्मदेवा इति स्मृताः ।
इति स्मृतावपि ह्येषां शतोनत्वं यदुच्यते ।
तत्तु स्पष्टत्वविषयमतो नात्र विरुद्धता ।
एतदेवानुसन्धाय भाष्यकारैरपि ह्ययम् ।
गृहीतो देवशब्देन सर्वज्ञैः श्रुतिगेन तु ।

एतदेवानुसन्धाय प्रवृत्तं मूलमत्र तु ।
गुणस्पष्टत्वविषये प्रवहस्य सकाशतः ।
शताधमाः प्रविज्ञेयाः बल्याद्याः कर्मदेवताः ।। इति ।
अन्यत्सर्वं गणनयैव विज्ञातव्यं विचक्षणैः ।
स्वारोचिषश्चोत्तमश्च रैवतश्चाक्षुषस्तथा ।
सावर्णिर्ब्रह्मसावर्णिरुद्रसावर्णिरेव च ।
तथैव चेन्द्रसावर्णिर्दक्षसावर्णिरेव च ।
तथैव मेरुसावर्णिर्धर्मसावर्णिरेव च ।
शिष्टाश्चैकादशा ह्येते मनवो ह्यधमा यतः ।
अतः कर्मजदेवानां समा इति प्रकीर्तिताः ।
एषां चाश्व्यधमत्वेऽश्विपश्चादन्ये ततोऽवराः ।
इत्यनुव्याख्यागतं वाक्यं ज्ञापकं मानमत्र वै ।

तथा - स्वायम्भुवाद्भगवदवतारात्तापसाच्चान्ये मनवः ततो वैवस्वताद् अवराः अश्विभ्यां पश्चादवराः पर्जन्यादुत्तमाः । एवं सुधाऽपि चात्रैव ज्ञापकं मानमुत्तमम् । 'कर्मदेवगणा अष्टगन्धर्वा इति' । बृहद्भाष्यगतं वाक्यं दुष्टगन्धर्वकस्य च । कर्मदेवसमानत्वे ज्ञेयं मानमुत्तमम् । तथा । अष्टगन्धर्वा इत्येतत्कर्मदेवसमाः इति । व्याख्यातत्वाद् भावबोधे तदप्यत्र ज्ञापकम् ।

ते चाष्टगन्धर्वाः - 'स सर्वगन्धर्वपतिः स तुम्बुरुः' । 'धृतराष्ट्राभिधेयो, गन्धर्वराट् हूहूगन्धर्वसत्तमः' । 'गन्धर्वाणां चित्ररथः' ।

इत्यादिवाक्ये श्रेष्ठत्वेनोक्ता ज्ञेया विचक्षणैः ।
पितॄणां सप्तकं यत्तत्कर्मदेवसमं मतम् ।
इति बृहद्भाष्यगतं वाक्यं पितॄणां सप्तकस्य च ।

कर्मदेवसमानत्वे ज्ञापकं सम्प्रकीर्तितम् ।
कार्तवीर्यः पृथुश्चैव दौष्यन्तिर्भरतस्तथा ।
शशबिन्दुश्च मान्धाता काकुत्स्थाद्यास्तथापरे ।
इति बृहद्भाष्ये चोक्तशतराजानो भूभृतस्त्विमे ।
ग्राह्याः कर्मजकक्षायां ये च ते व्याप्तदर्शिनः ।
स्मृतिस्थाद्यपदेनात्र परीक्षिज्जननकादयः ।
ये व्याप्तदर्शिनो भूपास्ते ग्राह्याः सर्व एव तु ।
प्रियव्रतो गयश्चैव कर्मदेवसमौ गुणैः ।
ऋते हैहयवैन्यादीनार्षभस्येह कः समः ।
इति पञ्चमतात्पर्यवाक्यानुसारतस्तथा ।
गायत्रीजन्मभवौ ग्राह्यावप्यत्र सत्तमौ ।
ऋष्यशीतिस्तथा सप्त पितरः ।
इति पञ्चमतात्पर्यप्रोक्ताश्चाशीतयो द्विजाः ।
ऋषयो ये च तेषां तु मुनीनां व्याप्तदर्शिनाम् ।
पितॄणां सप्तकं यत्तत्कर्मदेवसमं मतम् ।
इति बृहद्भाष्यस्थवाक्योक्तकर्मदेवसमैश्च तैः ।
पितृभिः सहसाम्योक्तेश्चाशीति ऋषयोऽपि च ।
ग्राह्याः कर्मजकक्षायां गृहधर्मरतास्तु ये ।

ननु -

'विश्वामित्रब्रह्मपुत्रान् ऋते चाप्यृषयोऽखिलाः ।
सूर्यादिभ्योऽधमाश्चैव मन्वादिभ्यस्तथैव च इति ।
बृहद्भाष्यस्थवाक्ये तु विश्वामित्रं भृगुं तथा ।
मरीच्यत्र्यादयः सप्त नारदो ऋषिसत्तमः ।

एतद्दश ऋषिभिन्नानां सर्वत्र हरिदर्शिनाम् ।
नवतीनाम् ऋषीणां तु ह्यश्विपर्यन्तमेव च ।
उक्ततात्विकदेवेभ्यो ह्यधमत्वोक्तितः कथम् ।
ऋषयोऽशीतिसङ्ख्याका इति चेदत्र चोच्यते ।

स्मृत्यर्थस्त्वित्थम् - 'सूर्यश्च चन्द्रमाश्चैव यमश्चेति त्रयः सुराः । प्रोक्तेभ्यस्त्ववराः' इत्यव्यवहितपूर्वश्लोकप्रकृतेभ्यः सूर्य-चन्द्रयमेभ्यः वरुणाग्निमित्राश्विदेवव्यवधानेनाधमाः । मन्वादि-भ्यश्चाधमाः । 'मन्वादिभ्यश्चाधमाः' इत्यस्यानुकर्षः । मनूना-मादयो मन्वादय इति तत्पुरुषः । पुंस्यादिः पूर्वर्णैरस्य प्रथमाद्या इत्यमरकोशादादिशब्दः प्रथमार्थः । तथा च मन्वादिभ्यः मनूनां मध्ये प्रथमेभ्यः श्रेष्ठेभ्यः तापसादित्रिभ्योऽधमाः । अन्यथा 'सूर्या-दिभ्योऽधमाः' इत्यनेनैव सूर्याद्यधममन्वाद्यधमत्वलाभेन विधान-वैयर्थ्यात् । 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायात् ।

तस्माद् ऋषीणां नवतेर्ग्राह्यत्वाद् व्याप्तदर्शिनाम् ।
ऋषयोऽशीतयस्त्वेतदयुक्तमिति चेन्न च ।

'ऋषयोऽखिलाः' इति ।

बृहद्भाष्यगते वा ये ऋषयो व्याप्तदर्शिनः ।
कर्मदेवसमास्तावदुच्यन्ते इति च सङ्गतम् ।
सूर्यादिभ्योऽधमाश्चैव मन्वादिभ्य इति वाक्यतः ।
द्विविधास्ते तु विज्ञेया ऋषयो व्याप्तदर्शिनः ।
गृहस्था यतयश्चेति तत्राऽद्याश्चावनादयः ।
द्वितीयाः सनकाद्यास्तु मुनयस्तूर्ध्वरेतसः ।
द्विविधानप्यभिप्रेत्य समतां कर्मजैः सह ।

भाष्ये नवतित्वोक्तिः ऋषीणां व्याप्तदर्शिनाम् ।
अभिप्रेत्यैव गुणितौ ह्यशीत्योक्तिर्न कश्चन ।
विरोधश्चिन्तनीयोऽत्र ह्येतत्तत्त्वविचक्षणैः ।

अत्रेदं बोध्यम् -

मुक्तियोग्यास्तु त्रिविधा इति वै सर्वसम्मतम् ।
तत्र ये उत्तमास्तेऽपि द्विविधाः परिकीर्तिताः ।
आधिकारिकसञ्ज्ञाश्च तद्भिन्नाश्चेति केचन ।
तत्र ये जनकाद्याश्चाप्रत्यक्षेणैव दर्शिनः ।
यज्ञादिकर्म कृत्वैव ज्ञाने तु ह्यधिकारिणः ।
हरीछयैव सम्प्राप्तकर्माधिकारिणस्त्विति ।
शास्त्रे प्रसिद्धा राजानस्ते च वै ह्याधिकारिकाः ।

एतदेवाभिप्रेत्य प्रमेयदीपिकायाम् 'आधिकारिकपुरुष इति पुरुषविशेषसञ्ज्ञा' इत्युक्तम् ।

आधिकारिकास्तेऽपि त्रिविधाः सम्प्रकीर्तिताः ।
महाधिकारिणश्चैव ह्यल्पाधिकारिणस्त्विति ।
तत्राद्याः 'प्रजापाश्च तथा देवाः' इत्यनेन प्रदर्शिताः ।
द्वितीयास्तु 'ऋष्यशीतिस्तथा' इति श्लोकदर्शिताः ।
यत्याश्रमेणैव ये च ज्ञानिनस्तत्र चोदितैः ।
शमादिभिर्गुणैर्ज्ञानसाधनेऽधिकृतास्तु ते ।
आधिकारिकभिन्नास्तु सनकाद्या महर्षयः ।

'अनधीकारिणः परे ।'

इत्यनेन तु वाक्येन सम्यग्वै सम्प्रदर्शिताः ।

एतेनाशीतिसङ्ख्यानाम् ऋषीणां व्याप्तदर्शिनाम् ।
कथमल्पाधिकारित्वं कथं च सनकादिनाम् ।
एषामनधिकारित्वं समानानां दिवौकसाम् ।
इत्यादिदोषपूगन्तु परास्तं दूरतस्त्विदम् ।
यच्चाप्यनधिकारित्वं तथैवाचाधिकारिता ? ।
एवमन्याधिकारित्वमपि मुख्यं न वै भवेत् ।
किन्तु साङ्केतिकं ज्ञेयं प्रमेयदीपिकोक्तितः इति ।
तस्मादग्निः पावकाख्यः प्रधानाग्नेः सुतस्तथा ।
इति षट्प्रश्नभाष्योक्तस्त्वग्नेर्ज्येष्ठसुतश्च यः ।
एकस्मिंस्तु पुरे संस्थो द्विरूपोऽग्नेः सुतो महान् ।
इति वै सूत्रभाष्योक्तस्त्वर्चिर्नामा स एव तु ।
विज्ञातव्यः स चाप्यत्र कर्मदेवेषु पठ्यते ।
अत्र कर्मजदेवानां सद्भावाल्लक्षणस्य च ।
ऊर्वशी पूर्वचित्तिश्च सहजन्या च मेनका ।
विश्वाची च घृताची च षडेवाप्सरसां वराः ।
इत्यादिपर्वसम्प्रोक्ता उत्तमास्त्वप्सरोऽपि च ।
कर्मदेवसमा ज्ञेयास्तथोर्वश्यादिका अपि ।
इति बृहद्भाष्योक्तिरेवात्र मानं सम्परिकीर्तिता ।

स्मृत्यर्थस्त्वित्थम् । ऊर्वश्यादिका अपि । तथा । कर्मदेव-वत् । सूर्यादिभ्योऽधमा इति ।

तथा -

'आहुरप्युत्तमस्त्रीणामधिकारं तु वैदिके ।
'यथोर्वशी यमी चैव'

इति सूत्रभाष्योक्तयमपत्नीवदेव च ।
उत्तमस्त्रीत्वकथनादूर्वशी ह्यप्सरोत्तमा ।
तस्माच्छ्रीमद्बृहद्भाष्यवाक्येऽप्यादिपदेन तु ।
अप्सरोमात्रग्रहणं विरुद्धं भारतस्य च ।
तस्माद्भारतवाक्योक्ता ग्राह्याश्चात्र षडेव तु ।
एवं वै मङ्गलः शुक्रराहुः केतुस्तथैव च ।
ग्रहाश्चत्वार एते तु मेषादिराशिचारिणः ।
ग्राह्याः कर्मजकक्ष्यायां सद्भावाल्लक्षणस्य तु ।
अत्र प्रह्लाद इत्येतदन्यराजोपलक्षकम् ।
प्रह्लादोऽप्यन्तराप्राप्तदेवत्वात् कर्मजः स्मृतः ।
औपाधिकासुरत्वस्य नाशानन्तरमेव च ।
देवतात्वं स वै याति प्रह्लादो निजमेव तु ।
एतच्चोक्तं स्पष्टमेव गीतातात्पर्य एव च ।
'देवाः शापबलाद्देवि प्रह्लादाद्या बभूविरे ।
हेतुतः सोऽन्यथाभावो रक्तता स्फटिके यथा ।
अतः पुनश्च देवत्वं ते यान्ति निजमेव त्विति ।'
'ऋते तु तात्विकान् देवान्नारदादींस्तथैव च ।
प्रह्लादादुत्तमः कोऽनु विष्णुभक्तौ जगत्त्रये ।'
इति सप्तमतात्पर्ये तात्त्विकाधमतोक्तितः ।
कर्मदेवसमानत्वं सिद्धं तस्य महात्मनः ।
धूमार्चिरादिमार्गस्थाः ज्ञेया कर्मदेवसमा इति ।
स ऐच्छद् भगवान् विष्णुः स्रष्टुं लोकाभिमानिनः ।
तल्लोकनामवाच्याश्च ब्रह्माडान्तर एव च ।
वेदोक्तनामरूपत्वदेवत्वं प्राप्नुवन्ति हि ।

अतः कर्मजकक्ष्यायां ग्राह्यास्ते सर्व एव तु ।
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
इति वै पितृयानस्था धूमादिनामदेवतास्तथा ।
'उत्क्रान्तस्तु शरीरात् स्वाद्गच्छत्यर्चिषमेव तु ।
ततोऽहः पूर्वपक्षं चाप्युदुक् संवत्सरं तथा ।
तदितमित्यन्तवाक्योक्तास्त्वर्चिराद्यास्तु देवताः ।
ताश्चैवाप्यत्र कक्ष्यायां सङ्ग्राह्या देवतोत्तमाः ।
पादौ तु विष्णुनाऽऽविष्टौ यज्ञशम्भू शचीसुतौ ।
इति गीतासु तात्पर्ये प्रोक्तौ पादाभिमानिनौ ।
तावप्यत्रैककक्ष्यायां ग्राह्यावेतौ सुरोत्तमौ ।
तत्त्वमानित्वेऽपि तयोः प्रागनुक्तत्वहेतुतः ।
पर्जन्यादिवक्ष्यमाणदेवान्यत्वाच्च हेतुतः ।
कर्मजानां तु कक्ष्यायां ग्राह्यावेतौ सुरोत्तमौ ।
तथैव चोक्ततत्त्वेभ्यस्तत्त्वदेवाश्च केचन ।
सर्वेऽपि कर्मदेवाश्च तत्समानाश्च ये सुराः ।
ते सर्वेऽप्यत्र कक्ष्यायां सङ्गृह्यन्ते सुरोत्तमाः ।
शतस्थान्तदेवेभ्यो पर्जन्यादिभ्य एव च ।
अजानजेभ्यस्त्वन्यत्वे सति देवत्वमत्र तु ।
कक्ष्यायां कर्मदेवानां ग्राह्यत्वे च प्रयोजकम् ।
अतो देवा जयन्ताद्यास्तत्त्वदेवाश्च केचन ।
प्रह्लादाद्याश्च ते देवा ग्राह्यास्तत्र सुरोत्तमाः ।
पार्षदाद्या जयाद्याश्च ग्राह्यास्तत्रैव चोत्तमाः ।
काला जयाद्या अपि विष्णुपार्षदाः ।
नीचा सुरेभ्यस्तत एव तेऽखिलाः ।

इति भारततात्पर्यवाक्यं चात्र प्रमापकम् ।
'तावक्षयोऽनुजगृहे निजपार्षदौ हि
पूर्वं विकुण्ठसदनाद्धरिसेवनाय ।
प्राप्तौ भुवं वृजिनपुष्पकरौ पुरापि' ।
इति भारततात्पर्यनिर्णयोक्तौ च तावुभौ ।
अत्र कर्मजकक्षायां ग्राह्यौ तौ हरिपार्षदौ ।
'आकाशदेवता विघ्नः ततो वायोः सुतो मरुत् ।
इति षट्प्रश्नभाष्ये तु गणेशोत्पत्यनन्तरम् ।
मरीच्युत्पत्तिकथनात्कर्मदेवसमो मतः ।

'चित्रगुप्तस्तु लेखकः । यश्चित्रगुप्तो नाम पूर्वं सुलेखः ।

इति भारततात्पर्ये प्रोक्तश्चाण्डान्तरेव तु ।
लेखकत्वमनुप्राप्तश्चित्रगुप्तोऽपि कर्मजः इत्याद्याः ।
इत्याद्यपदेनात्र विश्वकर्ममुखा अपि ।
तथैव भीमभार्याश्च वासुदेव्यश्च विंशतिः ।
इत्याद्या वक्ष्यमाणान्या उक्तान्या याश्च देवताः ।
ताः सर्वाश्चात्र कक्ष्यायां सङ्ग्राह्या देवता अपि ।
विश्वकर्माप्यन्तरैव प्राप्तदेवत्वतत्स्वयम् ।
ज्ञेयः कर्मजदेवानां समो वै देववर्धकिः ।

'अन्याश्चासु वासुदेव्यो दिशो याः आपुः पूर्वं विंशतिरग्र्यरूपाः'
इति भारततात्पर्ये प्रोक्ताः । पतिपरायणाः ।

दिशां चैवाभिमानिन्यो भीमभार्याश्च ता अपि ।
देवानां पारिजातादिवृक्षा गजहयादयः ।
सर्वे तत्रैव कक्ष्याया सम्प्राप्ता देवतोत्तमाः ।

भीमभार्याः पञ्चशतकोटिभिर्गुणतोऽधमाः ।
स पञ्चदशकोटीभिः सार्धं द्विषष्टिलक्षकैः ।
स्वपतेर्भीमसेनाच्च वासुदेव्यश्च विंशतिः ।

।। इत्येकोनविंशी कक्ष्या ।।

**ततः पर्जन्यगङ्गे च सञ्ज्ञा च सूर्यगेहिनी ।।**

**शशिपत्नी रोहिणी च शामला यमगेहिनी ।**
**विराण्णाम्न्यनिरुद्धस्य गेहिनी षट् च देवताः ।।**

**पूर्वोक्तेभ्यः कर्मजेभ्यो गुणेनार्धेन चाधमाः ।**

शेषशतस्थदेवेभ्यः गुणेनैकेन चाधमाः ।
मित्रस्यापेक्षया त्वेते द्विगुणोनाः प्रकीर्तिताः ।
अग्नेः सकाशतस्त्वेते चतुर्भिर्गुणतोऽधमाः ।
वरुणाद् भागीरथी गङ्गा ज्ञेया पञ्चगुणाधमा ।
शामला रोहिणा सञ्ज्ञास्त्रिस्त्र एतास्तु या स्त्रियः ।
सूर्यचन्द्रयमानां तु स्वपतीनां सकाशतः ।
अर्धपादोनकैः सप्तगुणैर्हीनाः प्रकीर्तिताः ।
विराण्णाम्नी तु या साऽपि स्वपतेरनिरुद्धतः ।
पादोनकैर्नवषष्टिगुणैर्हीना प्रकीर्तिता ।
पञ्चसप्तत्युत्तरैरष्टशतकैः षट्सहस्रकैः ।
पुरन्दरसकाशात्तु हीना सा परिकीर्तिता ।

अत्र मानम् ।

अर्थापत्तिरेवैषां कर्मजानां सकाशतः ।
गुणार्धन्यूनतायां तु मानं सम्परिकीर्तिता ।

पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च ।
द्विगुणा एवेति छान्दोग्यभाष्यगं वाक्यमेव तु ।
मित्रात्तु द्विगुणोनत्वे मानं सम्परिकीर्तितम् ।
अन्यत्सर्वं गणनयैव विज्ञातव्यं विचक्षणैः ।

**।। इति विंशी कक्ष्या ।।**

**ततो ये नवकोटीनां देवानां मध्यवर्तिनः ।।**

**गङ्गादिभ्यः प्रविज्ञेयाः गुणेनैकेन चाधमाः ।**

**कर्मजानां सकाशात्तु ह्येते सार्धगुणाधमाः ।**

अत्र मानम् - 'तदन्ये तु ततोऽवराः'

इत्यनुव्याख्यानमेवैषां गङ्गादीनां सकाशतः ।
ऊनत्वविषये चैतद् ज्ञेयं मानमनुत्तमम् ।

तथा -

तदन्ये अनतिप्रसिद्धाधिकारिणस्ते पर्जन्यादवरा इति ।
सन्यायरत्नावलिरप्यत्र वै ज्ञापिका मता ।
'कूर्मो दृष्टो विष्णुपद्यां मयोक्तस्त्वमुत्तमो ।
नास्त्यधिकस्तवेति ऊचे गङ्गामुत्तमाम्' ।
इति भारततात्पर्ये कूर्मस्यावरतोक्तितः ।
पर्जन्यसमगङ्गायाः सोऽप्येषां तु समानकः ।

'शतस्थान्तदेवातिरिक्तनवकोट्यन्तर्गतादिदेवाः द्विविधाः । प्रसिद्धाधिकाराः अप्रसिद्धाधिकाराश्चेति । तत्राऽद्यानां तदन्ये उक्तेभ्योऽन्ये देवाः ततः शतान्तर्गतदेवताभ्यः अवराः । अवर-

मनुसमानाः' । इति सुधायां 'तदन्ये तु ततोऽवराः' इत्यनुव्याख्यानव्याख्यानरूपायाम् एकादशमनुसमानत्वमुक्तम् । द्वितीयानां तदन्येऽनतिप्रसिद्धाधिकाराः ये देवास्ते पर्जन्यादवराः । सन्यायरत्नावल्यां पर्जन्यादवरत्वमुक्तम् । तेन न सुधासन्यायरत्नावल्योर्विरोध इति ज्ञेयम् ।

।। इत्येकविंशी कक्ष्या ।।

**ततः प्रधानाग्निभार्या गुणेनैकेन चाधमा ।**
**पर्जन्यापेक्षया स्वाहा द्विगुणोना प्रकीर्तिता ।।**

कर्मजेभ्यस्तु देवेभ्यः सार्धद्विगुणतोऽधमा ।
स्वपत्यग्नेः सकाशात्तु ह्यष्टभिर्गुणतोऽधमा ।

इदं मूलमस्यार्थः ।

नवकोटिस्थदेवानामानन्दे तु द्विधा कृते ।
तत्रैकगुणयुक्तत्वादेकस्याभावतश्च सा ।
गुणेनैकेन हीनेति स्वाहा वै सम्प्रकीर्तिता ।

अत्र मानम् ।

पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च ।
इति छान्दोग्यभाष्ये तु स्वाहायाः द्विगुणोच्चता ।
पर्जन्यस्योच्यते । सैव मानमत्र प्रकीर्तिता ।
'उषा स्वाहा च पर्जन्यः' ।
ततः पर्जन्य उद्धृतः स्वाहातो मन्त्रदेवता ।
इत्यनुव्याख्यानषट्प्रश्नभाष्यस्थवाक्ययोरिदम् ।
पर्जन्यादधमत्वं तु स्वाहायाः ज्ञायते स्फुटम् ।

पर्जन्याद् द्विगुणोक्तेरन्यथानुपपत्तितः ।
स्वाहायाः कल्प्यते त्वित्थम् एकेनैव गुणोनता ।
अन्यत्सर्वं गणनयैव विज्ञातव्यं मनीषिभिः ।

।। इति द्वाविंशी कक्ष्या ।।

**उदकात्मा बुधस्तस्याः द्विगुणोनः प्रकीर्तितः ।**

नवकोटिस्थदेवेभ्यः त्रिगुणैरधमः स्मृतः ।
गङ्गादीनां सकाशात्तु चतुर्भिर्गुणतोऽधमाः ।
कर्मजेभ्यस्तु देवेभ्यो ज्ञेयः पञ्चगुणाधमः ।

इदं मूलमस्यार्थः -

स्वाहागतानन्दगुणे विभक्ते सति वै त्रिधा ।
तत्रैकगुणयुक्तत्वाद् द्विगुणाभावतत्स्वयम् ।
स्वाहातो द्विगुणन्यून इति वै सम्प्रकीर्तितः ।
अर्थापत्तिरेवात्र मानं सम्परिकीर्तिता ।
तत्प्रकारश्च हीत्थं तु ज्ञातव्यः सर्वकोविदैः ।
सर्वे त्वेते दशोत्तराः ।
इति छान्दोग्यभाष्ये [1] x x x गुणोच्चता ।
स्वाहायास्त्वग्निजायायाः कथ्यते स्पष्टमेव तु ।
तदेतद् घटनायापि पञ्चभिश्चोच्चतोषसः ।
बुधस्यावश्यं वक्तव्यं तस्माच्च द्विगुणोच्चता ।
यदा भवेद् वह्निपत्न्यास्तदा दशगुणोच्चता ।

1. x x x

उषसस्तु सकाशाच्च स्वत एव भवेदलम् ।
बुधात्तु द्विगुणोच्चत्वं स्वाहायास्तु यदा भवेत् ।
तदा तस्याः सकाशात्तु बुधस्य द्विगुणोनता ।
भवेदर्थापत्तिरेव तस्मान्मानं प्रकीर्तिता ।
एतमेवोत्तरत्रापि विज्ञातव्यं विचक्षणैः ।
तथा 'उदकात्मको बुधस्तस्याः ।'
इति षट्प्रश्नभाष्यं तु स्वाहायास्तु सकाशतः ।
बुधस्योनत्वविषये ज्ञापकं मानमुत्तमम् ।

**।। इति त्रयोविंशी कक्ष्या ।।**

**बुधात्सा देवकी प्रोक्ता गुणेनैकेन चाधमा ।**

यशोदायाः सकाशात्तु गुणेनैकेन चोत्तमा ।
अग्निपत्न्याः स्वाहायास्तु त्रिगुणैरधमा मता ।
नवकोटिस्थदेवेभ्यश्चतुर्भिर्गुणतोऽधमा ।

इदं मूलमस्यार्थः स्पष्ट एव । अत्र मानम् -

अत्रार्थापत्तिरेव मानं सम्परिकीर्तितम् ।
ताभ्यः सहस्रसमिता यशोदा नन्दगेहिनी ।
ततोऽप्यभ्यधिका देवी देवकीभक्तितस्ततः ।
एवमेकादशस्कन्धतात्पर्यादवगम्यते ।
यशोदायाः सकाशात्तु देवक्याश्चोच्चताऽपि तु ।

**।। इति चतुर्विंशी कक्ष्या ।।**

**ततो यशोदा देवक्यागुणेनैकेन चाधमा ।।**

बुधात्तु द्विगुणन्यूना स्वाहायास्तु चतुर्गुणैः ।
नवकोटिस्थदेवेभ्यः षड्भिश्च गुणतोऽधमा ।
गङ्गादीनां सकाशात्तु ह्यष्टभिर्गुणतोऽधमा ।
कर्मजानां सकाशात्तु ज्ञेया दशगुणाधमा ।
शेषशतस्थकक्ष्योक्तानन्दाद् द्वादशतोऽधमा ।

इदं मूलमस्यार्थः -

देवकी देवगानन्दे विभक्ते सति वै द्विधा ।
तत्रैकगुणयुक्तत्वाद्देवक्याभावतस्त्वियम् ।
सकाशाद्देवकीदेव्याः गुणेनैकेन चाधमा ।

अत्र मानम् । 'यशोदा नन्दगेहिनी ।'

ततोऽप्यभ्यधिका देवी देवकी भक्तितस्त्वतः ।
इत्येकादशतात्पर्यवाक्यमेवात्र ज्ञापकम् ।
अर्थापत्तिरप्यत्र मानं सम्परिकीर्तिता ।

**।। इति पञ्चविंशी कक्ष्या ।।**

**ततस्तूषा यशोदायाः सार्धद्विगुणतोऽधमा ।**

देवक्यपक्षेया त्वेषा पादोनैश्च चतुर्गुणैः ।
बुधात्पञ्चगुणा ज्ञेया स्वाहायास्तु दशाधमा ।
नवकोटिस्थदेवेभ्यो ज्ञेया पञ्चदशैर्गुणैः ।
गङ्गादीनां सकाशात्तु विंशद्भिर्गुणतोऽधमा ।
कर्मजेभ्यस्तु विज्ञेया पञ्चविंशगुणाधमा ।
शेषशतस्थदेवेभ्यः त्रिंशद्भिर्गुणतोऽधमा ।

इदं मूलमस्यार्थः । द्वौ च तौ गुणौ च द्विगुणौ अर्धेन सहितौ सार्धौ सार्धौ च तौ द्विगुणौ सार्धद्विगुणौ सार्धद्विगुणाभ्यामिति सार्धद्विगुणत इति ।

पुष्कराद्दशगुणत्वोक्तेरन्यथानुपपत्तितः ।
उषसः कल्प्यते त्वित्थं नान्यथेदं घटेत् क्वचित् ।
एतदर्थापत्तिरेव मानमत्र प्रकीर्तिता ।
तथा आजानजेभ्यः सहस्रोक्तेरन्यथानुपपत्तितः ।
यशोदायाः नन्दपत्न्याः कल्प्यमित्थं विचक्षणैः ।
एतदर्थापत्तिरपि मानमत्र प्रकीर्तिता ।
'उषा नामात्मिका ततः' ।
इति षट्प्रश्नवाक्यं तु बुधादूनत्व एव च ।
उषा नाम्न्याश्च देव्यास्तु ज्ञापकं परिकीर्तितम् ।
'सर्वे त्वेते दशोत्तराः' इति ।
छान्दोग्यभाष्यं तु स्वाहायास्तु सकाशतः ।
उषसस्तु दशोनत्वे ज्ञापकं मानमुत्तमम् ।

**।। इति षड्विंशी कक्ष्या ।।**

**ततः शनिः पृथिव्यात्मा द्विगुणोनः प्रकीर्तितः ।।**

यशोदायाः सकाशात्तु ज्ञेयः पञ्चगुणाधमः ।
देवक्यपेक्षया चापि सार्धसप्तगुणाधमः ।
बुधाच्छनिः पृथिव्यात्मा दशभिर्गुणतोऽधमः ।
अग्निपत्न्याः स्वाहायास्तु ज्ञेयो विंशगुणाधमः ।

नवकोटिस्थदेवेभ्यस्त्रिंशद्भिर्गुणतोऽधमः ।
गङ्गादीनां सकाशात्तु चत्वारिंशद्गुणाधमः ।
कर्मजानां सकाशात्तु पञ्चाशद्गुणतोऽधमः ।

इदं मूलम् अस्यार्थः ।

उषोगतानन्दगुणे विभक्ते सति वै त्रिधा ।
तत्रैकगुणयुक्तत्वाद् द्विगुणाभावतस्त्वयम् ।
द्विगुणाधम इति ज्ञेयः पृथिव्यात्मा शनिस्तु सः ।

अत्र मानम् । 'ततः शनिः पृथिव्यात्मा' इति षट्प्रश्नभाष्यमेवात्र ज्ञापकं परिकीर्तितम् । अर्थापत्तिरत्रापि मानं सम्परिकीर्तिता ।

।। इति सप्तविंशी कक्ष्या ।।

**ततः पुष्करदेवस्तु शनेः पञ्चगुणाधमः ।**

उषसस्तु सकाशात्तु दशाधम इतीरितः ।
यशोदायाः पुष्करस्तु पञ्चविंशगुणाधमः ।
देवेभ्यश्च सकाशाच्च त्रिंशद्भिः सार्धसप्तकैः ।
बुधदेवसकाशात्तु पञ्चाशद्गुणतोऽधमः ।
अग्निपत्न्याः स्वाहायास्तु ज्ञेयः शतगुणाधमः ।
नवकोटिस्थदेवेभ्यः सार्धशतगुणाधमः ।
गङ्गादीनां सकाशात्तु द्विशतोनः प्रकीर्तितः ।
कर्मजेभ्यस्तु देवेभ्यः सार्धशतद्वयाधमः ।

इदं मूलम् अस्यार्थः ।

शनैश्चरगतानन्दे विभक्ते सति षड्विधा ।
तत्रैकभागं युक्तत्वात्पञ्चाशानामभावतः ।
अतः शनेः सकाशात्तु पञ्चोनः परिकीर्तितः इति ।

अत्र मानम् - 'कर्मात्मा पुष्करस्तथा' ।

क्रमात्प्रत्यवरा एते मुक्ताः सर्वे गुणैरपि ।
इति षट्प्रश्नभाष्यं तु पुष्करस्य शनैश्चरात् ।
अधमत्वमात्रमेवैतद् ज्ञापकं परिकीर्तितम् ।
'सर्वे त्वेते दशोत्तराः' ।
इति छान्दोग्यभाष्यं तु उषसस्तु सकाशतः ।
पुष्करस्य दशोनत्वे ज्ञापकं परिकीर्तितम् ।
शनेः पञ्चगुणोनत्वे त्वर्थापत्तिस्तु केवलम् ।
कर्मात्मनः पुष्करस्य ज्ञापिका परिकीर्तिता ।

।। इत्यष्टाविंशी कक्ष्या ।।

आजानदेवाः । 'अनाख्याता देवता हि जाता देवकुले च याः । आजानदेवतास्ता हि' । इति तैत्तिरीयसुभाष्योक्त-लक्षणैरायुताश्च ये ।

**ते वै चाऽजानदेवास्तु गन्धर्वाणां शतं तथा ।।**

**पितरः शतसङ्ख्याकाः तथैवाप्सरसां शतम् ।**
**त्रिंशत्सङ्ख्याका असुरास्तावन्तश्चारणा अपि ।।**

**यक्षाः सप्ततिसङ्ख्याकाः तावन्तो राक्षसा अपि ।**
**सिद्धाश्च शतसङ्ख्याकाः तथा किन्नरगुह्यकाः ।।**

**नागाश्चाजानदेवानां समा एते तथैव च ।**
**पत्न्यः षोडशसाहस्रसङ्ख्याकाश्च शताधिकाः ।।**

**कृष्णस्यैता ह्यग्निपुत्रस्वरूपास्तासु चोत्तमा ।**
**कशेरुः कर्मकक्ष्योक्तपावकाग्निस्वरूपका ।।**

**अतस्तद् व्यतिरिक्तास्ताह्याजानजसमा मताः ।**
**पूर्वोक्तपुष्करादेवाच्चत्वारिंशद्गुणाधमाः ।।**

यशोदायाः सकाशात्तु न्यूना ह्येते सहस्रकैः ।
देवक्यास्तु सकाशात्तु हीनाः सार्धसहस्रकैः ।
द्विसहस्रैर्बुधाद् ज्ञेया स्वाहायास्तु सकाशतः ।
चतुःसहस्रैरूना षट्सहस्रैस्तथैव च ।
नवकोटिस्थदेवेभ्यस्तथा ह्यष्टसहस्रकैः ।
गङ्गादिभ्यः कर्मजेभ्यश्चोना दशसहस्रकैः ।

इदं मूलम् अस्यार्थः ।

पुष्करस्य गुणे चैकचत्वारिंशतिधा कृते ।
तत्रैक भागयुक्तत्वाच्चत्वारिंशदभावतः ।
अतः पुष्करदेवाच्च चत्वारिंशद्गुणाधमाः ।

अत्र मानम् -

पूर्वोक्तार्थापत्तिरेव चत्वारिंशद्गुणोन्नतौ ।
तस्मादाजानदेवानां ज्ञापिका समुदाहृता ।

तस्मात् पुष्करात् ।

नन्वाजानजानां कर्मजेभ्यो गुणैर्दशसहस्रकैः ।
ऊनत्वे कर्मदिवानाम् आजानजसकाशतः ।
तावद्भिरेव ह्युच्चत्वं प्राप्तमेतन्न वै घटेत् ।
'ते ये शतम् आजानदेवानामानन्दाः'
'स एको कर्मजदेवानामानन्दः'
इति श्रुतौ शतगुणैरुच्चत्वं तूच्यते तथा ।

कार्तवीर्यादिराजभ्यो देवभृत्याः शतावराः ।
'आजानदेवास्ते प्रोक्ताः'
इति बृहद्भाष्यस्थवाक्येऽपि कर्मजानां सकाशतः ।
आजानजानां देवानां शतोनत्वं प्रकथ्यते ।
कथं दशसहस्रैस्तु न्यूनत्वमिति चेन्न च ।
अवरायाः यशोदायाः कर्मजानां सकाशतः ।
आजानजेभ्यस्तु यदा सहस्रगणतोच्चता ।
तदा शतगुणोच्चत्वं कर्मजानां कथं भवेत् ।
अतः श्रुतिस्मृतिस्थस्य शतशब्दस्य चात्र तु ।
सहस्रदशवाचित्वं वदेन्नात्र विरुद्धता ।
अत्राप्यर्थापत्तिरेव मानं सम्परिकीर्तिता ।
'शब्दः शतं दशसहस्रमिति स्म यस्मात् ।
तस्मान्न हीनवचनोऽथ तदग्र्यरूपाः' ।
इति भारततात्पर्यवाक्यं शतपदस्य तु ।
सहस्रदशवाचित्वे ज्ञापकं परिकीर्तितम् ।
आजानदेवतास्ता का इति चेदुच्यतेऽञ्जसा ।
अनाख्याता देवता हि जाता देवकुले च याः ।
आजानदेवतास्ता हि ।
इति भाष्ये तैत्तिरीये तूक्तं तल्लक्षणद्वयम् ।
कर्मतत्त्वदेववच्च विशेषैर्नामरूपकैः ।
अनाख्याता देवभृत्या ज्ञेयात्स्वाजानदेवताः ।
तथा देवकुले जाता देवभृत्याश्च देवताः ।
ते वै चाजानदेवाश्च ज्ञेया ह्येता द्विधा इति ।
तत्र देवकुलोत्पन्ना देवा ह्याजानजास्तु के (इति चेत्) ।

प्रोक्तास्त्वष्टविधा देवा विबुधाः सर्व एव तु ।
पितॄणां शतमेवात्र असुरास्त्रिंशदेव च ।
गन्धर्वाप्सरसां चैव द्विशतं परिकीर्तितम् ।
सप्ततिर्यक्षरक्षस्सु त्रिंशच्चारणजातिषु ।
शतं सिद्धास्तथान्यासु सप्ततिः सर्वजातिषु ।
वैकारिकेषु, ह्येते वै मुग्धभोगिनः ।
इति तृतीयतात्पर्ये प्रोक्तास्त्वाजानदेवताः ।
मुग्धभोगिन इत्यस्य ईषच्च भोगिनस्त्विति ।
अथ ईषच्च भोगश्च यज्ञाङ्गहविभोजनम् ।
अनेन यज्ञभोक्तृत्वरूपं वै देवलक्षणम् ।
प्राप्तमेतेष्वतस्तेषां देवत्वं सिद्धमञ्जसा ।
तथा, विद्याधराप्सरसोयक्षरक्षोगन्धर्वकिन्नराः ।
पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ।

देवाः योनयो येषां मूलकारणानि त । इति विग्रहेण देवकुलोत्पन्नत्वसिद्धिः ।

इति विद्याधरादीनां ज्ञायतेऽमरकोशतः ।
देवताकुलजत्वं तु सिद्धं त्विति x x x[1] ।
तस्माद्देवकुलोत्पत्तिमत्वाद् देवत्वतोऽपि च ।
पित्राद्या एव विज्ञेया देवास्त्वाजानजा इति ।
कर्मदेवगणा अष्टगन्धर्वास्तत्परे शतम् ।

---

1. x x x

आजानदेवा इति ।

बृहद्भाष्यगतं वाक्यं गन्धर्वाणां शतस्य च ।
एषामाजानदेवत्वे ज्ञापकं समुदाहृतम् ।
सर्वज्ञास्तैः सहाराध्या च भक्तास्तेष्वन्तरेव ।
नृत्तगानादिकर्तारो वाहनादिकृतस्तथा ।
सिद्धसिद्धेति वक्तारश्चाराश्चैषां पृथक् पृथक् ।
सेवाकरा इति ह्येतैर्भेदैरष्टविधा मताः ।
इति तृतीयतात्पर्याद्देवदूतत्वमञ्जसा ।
पित्रादीनां सिद्धमिति विज्ञातव्यं विचक्षणैः ।
अत्र तैस्तु सहाराध्या इति वाक्येन तैः सह ।
देवैः पूज्यत्वमेवोक्तं पित्रादीनां तथाऽपि तु ।
धर्मराजः पितृपतिरिति वाक्ये यमस्य च ।
उक्तं पितृपतित्वं तु ज्ञेयं संयमनीपतेः ।
यमस्य पितृपतित्वे तु पितॄणां यमभृत्यता ।
सिद्धैवेति प्रविज्ञेया सर्वैस्तत्त्वविचक्षणैः ।
**'भक्तास्तेष्वन्तरेव च'** ।
इति वाक्येनासुराणामपि भृत्यत्वमञ्जसा ।
एतेषां सिद्धमेवेति विज्ञातव्यं विचक्षणैः ।
नृत्तगानादिकर्तार इत्यनेन च वाक्यतः ।
गन्धर्वाप्सर आदीनां देवभृत्यत्वमञ्जसा ।
वाहनादिकृत इति वाक्येन यमरक्षसाम् ।
सिद्धं तु देवभृत्यत्वं वाहनं शिबिकादिकम् ।
सर्वं स्याद्वाहनं यानम् इति वै ह्यमरकोशतः ।
तथैव सिद्धसिद्धेति वक्तार इति वाक्यतः ।

सिद्धं देवकार्यं वक्तृणामिति सर्वदा ।
सिद्धानां देवभृत्यत्वं ज्ञायते स्पष्टमेव तु ।
चाराश्चैषां पृथक् पृथक् ।
अनेन देवभृत्यत्वं चाराणां ज्ञायते स्फुटम् ।
'चारणादेव चारकाः'
इति बृहद्भाष्यगताद् वाक्याद् ज्ञेया वै देवभृत्यता ।
क्वचित्क्वचित्कार्यविशेषे देवानां सेवाकराः ।
इत्यनेन सुवाक्येन भूतप्रेतादिनामपि ।
किन्नरादय इत्यादिपदेन गुह्यनामकाः ।
सङ्ग्राह्यास्ते च वै चेषां यक्षराट् गुह्यकेश्वरः ।
इति वाक्ये गुह्यकानां स्फुटं वरुणभृत्यता ।

तस्मात् ।

पित्राद्या एव सर्वेऽपि देवा ह्याजानजा मताः ।
तथैव कृष्णपत्न्योऽपि वह्निपुत्रस्वरूपकाः ।
शतोत्तरद्व्यष्टसहस्रसङ्ख्याकाः कृष्णवल्लभाः ।
समा ह्याजानदेवैस्ता ज्ञेयाः कृष्णैकलालसाः ।

अत्र ज्ञापकम् ।

'अग्नेः पुत्राः पूर्वमासंस्तथैवेति ।
पूर्वजन्मन्यग्निजत्वमुक्त्वा ह्यासां तथैव च ।

आजानदेवैः सर्वगुणैः समस्ताः स्वभावतोऽथेन्दिरावेशतोऽतः।

गुणाधिका इति भारततात्पर्ये निर्णये च स्वभावतः ।
आजानदेवसाम्यस्य लक्ष्म्यावेशनिमित्ततः ।

आधिक्यस्य च प्रोक्तत्वादेतदेवात्र ज्ञापकम् ।
अत्रापि वह्निपुत्रेषु पावकं त्वग्निपुत्रकम् ।
विनैव त्वग्निपुत्राणां ज्ञेया त्वाजानतुल्यता ।

काश्चित्तत्राऽसन् देवगन्धर्वकन्याः तासां प्रधाना त्वष्ट्रपुत्री कशेरुः ।

इत्युक्तेर्विद्यमानत्वात्पावकाग्निस्वरूपका ।
कशेरुनाम्ना जाता सा ह्यन्याभ्यश्चोत्तमा मता ।
पावको वह्निपुत्रस्तु कर्मदेवसमो मतः ।
एतदेवानुसन्धाय प्रवृत्तं मूलमत्र तु ।
यशोदायाः सकाशात्तु सहस्रगुणतोऽधमाः' इति ।
अन्यत्सर्वं गणनयैव विज्ञातव्यं विचक्षणैः ।

।। इत्येकोनत्रिंशी कक्ष्या ।।

**ततः कर्मजकक्ष्योक्त षडैवाप्सरसो विना ।**
**तथा चाऽजानकक्ष्योक्तशतमप्सरसां विना ।।**

**शिष्टाः सर्वाश्चाप्सरसो ज्ञेयास्तद् द्विगुणाधमाः ।**

**ऊर्वश्याद्यप्सरोभ्यस्तु न्यून विंशसहस्रकैः ।**

इदं मूलम् । अस्यार्थः -

आजानजगतानन्दे विभक्ते सति वै त्रिधा ।
तत्र यश्चरमो भागः तत्समानन्दमात्रतः ।
द्विभागयोरभावाच्च द्विगुणोनाः प्रकीर्तिताः ।

**तत्र काश्चिदप्सरसः कृष्णसङ्गार्थमेव तु ।।**

**कात्यायनीव्रतधराः भूमौ गोपालकन्यकाः ।**
**जाताः उद्वाहिताश्च तथानुद्वाहिताश्च याः ।।**

**अन्यैरुद्वाहिता कृष्णभुक्ता गोपाङ्गनाश्च ताः ।**

**आजानदेवताभ्यस्तु ज्ञेया वै द्विगुणाधमाः ।**

अत्र मानम् -

कृष्णप्रियाभ्यो गोपीभ्यो भक्तितो द्विगुणाधिकाः ।
महिष्यष्टौ विना यास्ताः कथिताः कृष्णवल्लभाः ।
इत्येकादशतात्पर्यवाक्यमेवात्र ज्ञापकम् ।

तथा - 'कात्यायनीव्रतधराः स्वपतित्वहेतोः कन्या उवाह भगवान् । तथा । अन्यैर्धृता अयुगबाणशराभिनुन्नाः प्राप्ताः निशाश्च रमयत् । इति भारततात्पर्यवाक्यमेवात्र ज्ञापकम् । तथा च । 'कृष्णेनोद्वाहिताश्चैव तथानुद्वाहिता अपि । द्विविधा इति विज्ञेया पूर्वमप्सरस्त्विति' । अत्र मानम् । 'परमाप्सरसः पुरा याः' इति भारततात्पर्यवाक्यमेवात्र ज्ञापकम् ।

**।। इति त्रिंशी कक्ष्या ।।**

**ततस्तात्विककक्ष्योक्तान् विनैव तु दशर्षिकान् ।।**

**तथा कर्मजकक्ष्यायाम् उक्तान्नवतिकान् ऋषीन् ।**
**विनैव सर्व ऋषयस्त्वप्रतीकावलम्बनाः ।।**

**पञ्चाशद्भिर्गुणैरूना ऋषयः शंसितव्रताः ।**
**आजानदेवताभ्यस्तु शतोनाः परिकीर्तिताः ।।**

कर्मकक्ष्योक्तनवति ऋषिभ्यो दशलक्षकैः ।

अधमा इति विज्ञेयाः मरीच्यादेः सकाशतः ।
चतुर्विंशतिलक्षेभ्यः त्वधमा इति कीर्तिताः ।
ऋषेर्भृगोः सकाशात्तु द्वात्रिंशल्लक्षतोऽधमाः ।
नारदाच्च ऋषिश्रेष्ठा षट्त्रिंशल्लक्षतोऽधमाः ।

इदं मूलम् । अस्यार्थः -

अप्सरस्त्रीगतानन्दे एकपञ्चाशधा कृते ।
तत्र यश्चरमो भागस्तत्समानन्दमात्रतः ।
पञ्चाशद्भागहीनत्वात्पञ्चाशद्गुणतोऽधमाः इति ।
अर्थापत्तिरेवात्र मानं सम्परिकीर्तिता ।
तत्प्रकारश्च हीत्थं तु ज्ञातव्यः सर्वकोविदैः ।
'ते ये शतम् ऋषीणामानन्दाः
स एको आजानदेवानामानन्दः' ।
इति श्रुतौ तु ह्याजानदेवानां तु सकाशतः ।
ऋषीणां शतगुणोनत्वं कथ्यते स्पष्टमेव तु ।

तथा -

'कृष्णप्रियाभ्यो गोपीभ्यो भक्तितो द्विगुणाधिकाः ।
इत्येकादशतात्पर्ये द्विगुणोनत्वं सदैव तु ।
स्त्रीणामप्सरसां ह्यासां ऋषिभ्यः कथ्यते स्फुटम् ।
तदेतद्धटनार्थाय पञ्चाशद्भिर्गुणोच्चता ।
ऋषिभ्यस्त्वप्सरसस्त्रीणां वक्तव्याऽवश्यमेव तु ।
आजानदेवतानाम् ऋषिभ्यः शतगुणोच्चता ।
यदा ऋषिभ्यस्त्वप्सरसां पञ्चाशद्भिर्गुणोच्चता ।
तदा तद्द्विगुणाजानदेवानां च शतोच्चता ।

घटते नान्यथा चेदं घटते च कदाचन ।
अतस्त्वर्थापत्तिरेव पञ्चाशद्गुणतोनतौ ।
ऋषीणामप्सरोभ्यस्तु मानं सम्परिकीर्तिता ।
दशलक्षोनतादित्वं ज्ञेयं गणनयैव तु ।
एवमेवोत्तरत्रापि ज्ञेयं सङ्ख्याविचक्षणैः ।
एते तु ऋषयो ज्ञेयाः सङ्ख्यया शतकोटयः ।
अप्रतीकालम्बनाश्च प्रतीकालम्बनास्तथा ।
द्विविधा इति विज्ञेया ऋषयस्तत्त्वदर्शिनः ।
शरीरान्तर्बहिश्चापि सर्वत्र हरिदर्शिनः ।
अप्रतीकालम्बास्ते ज्ञेयास्तत्त्वविचक्षणैः ।

अत्र ज्ञापकम् -

नवकोट्यो हि देवानाम् ऋषीणां शतकोटयः ।
नारायणायनाः सर्वे केचिद्वै तत्परायणाः ।
इति षट्प्रश्नभाष्यं तु ज्ञापकं परिकीर्तितम् ।
तथा ज्ञात्वा हरिं ध्यात्वा स्वान्तः पश्यन्ति केचन ।
ऋषयः केचिद् ऋषयो नारदाद्या बहिस्त्वपि ।
इति गीतासुतात्पर्यमपि ज्ञापकमत्र तु ।

अत एव सूत्रभाष्येऽपि । 'ऋषीणां शतमेव च' ।

इति वै व्याप्तदर्शित्वेनोक्ता ज्ञेया महर्षयः ।
तेषाम् ऋष्यादयः क्रमशः ऊनगुणाः शतांशात् ।
इति भारततात्पर्ये निर्णयः स्पष्टमेव तु ।
सर्वदेवाधमत्वोक्त्या ह्याजानाधमताऽपि तु ।
संसिद्धैवेति विज्ञेयम् एतत्तत्त्वविचक्षणैः ।

अत्र त्वाजानदेवेभ्यो ऊनता व्याप्तदर्शिनाम् ।
ऋषीणां च शतोनत्वं घटते च कदाचन ।
नारदादिदशर्षीणां सर्वत्र हरिदर्शिनाम् ।
यथायथं तत्त्वदेवकक्ष्यासूक्तत्वतस्तथा ।
नवतश्चवनादीनां प्रोक्तत्वात्कर्मजेषु च ।
परिशेषप्रमाणाच्च शिष्टाश्च ऋषयोऽपरे ।
आजानदेवताभ्यस्तु ज्ञेयाः शतगुणाधमाः ।
अप्सरोभ्यस्तु पञ्चाशद् गुणैर्हीना इति स्थितम् ।

तथा -

'प्रतीकं देह उद्दिष्टस्तत्रैव हरिदर्शनम्' ।

ते प्रतीकावलम्बाः 'ऋषयोऽन्तःप्रकाशा इत्यादिनोक्ता ऋषयः सर्वेऽपि शंसितव्रताः । आजानजाधमाश्चेति सिद्धमेतत्तथैव च । तथा - वैष्णवैरपि मर्त्यैर्यत् कृतं शतगुणं ततः । गान्धर्वं कर्म तस्माच्च पितृभिर्मुनिभिस्ततः । 'देवशक्रशिवब्रह्मकृतं तस्मात्क्रमेण च । शतोत्तरम्' इति ज्ञेयम् । इति भारततात्पर्यनिर्णये मुनि-कृतादपि । देवैः कृतं तु यत्कर्म शतोच्चमिति कथ्यते । तेन तत्कर्मणां शतोच्चत्वं भवेत् स्फुटम् । तत्तत्कर्मकर्तॄणां तारतम्यं विना क्वचित् । तेषां तेषां कर्मणां च शतोच्चत्वं न वै क्वचित् । स्वाधिकाराधिको यत्नः कथञ्चिन्नोपपद्यते । इति न्यायविवर-णोक्तयोग्यतातिक्रमेण च । निषिद्धत्वात्साधनानाम् अनुष्ठानस्य सर्वथा । तस्माद्देवाधमत्वं तु ऋषीणां सिद्धमञ्जसा ।

तथा - मनुष्येभ्यो गन्धर्वाणां गन्धर्वेभ्यो ऋषीणाम् ऋषिभ्यो देवानां देवेभ्य इन्द्रस्य इत्युपासनापादीयसूत्रभाष्ये ह्युदाहृता ।

श्रुतिश्च ज्ञापिकाऽत्रेति विज्ञातव्या विचक्षणैः ।
तथा 'देवऋषिपितृपनराः' ।
इति वै तत्त्वसङ्ख्यानवाक्यमप्यत्र ज्ञापकम् ।
एतत्सर्वमभिप्रेत्य प्रवृत्तं मूलमत्र तु ।
ततस्तात्त्विककक्ष्योक्तान् ऋषीन् दश विना तथा ।
कर्मजगीर्वाणकक्ष्यायामुक्तान्नवतिकान् ऋषीन् ।
ये तान् विना तु सर्वेऽपि शिष्टाश्च ऋषयः परे ।
पञ्चाशद्भिर्गुणैरूनाः विज्ञातव्या विचक्षणैः ।
आजानदेवताभ्यस्तु शतोनाः परिकीर्तिताः ।

।। इत्येकत्रिंशी कक्ष्या ।।

**ततस्तात्विककक्ष्योक्तपितृणां तु त्रयं विना ।।**

**तथा कर्मजकक्ष्यायामुक्तान् सप्तपितॄन् विना ।**
**तथाऽऽजानजकक्ष्यायामुक्तान् शतपितॄन् विना ।।**

**शिष्टाः सर्वेऽपि पितरो ज्ञेयाः शतगुणाधमाः ।**

अप्सरोभ्यस्तु विज्ञेया हीनाः पञ्चसहस्रकैः ।
आजानेभ्यस्तु विज्ञेया हीना दशसहस्रकैः ।
कर्मकक्ष्योक्तपितृतस्तूनास्तु दशकोटिभिः ।
पितृस्वरूपादग्नेस्तु द्वात्रिंशत्कोटितोऽधमाः ।
पितृस्वरूपयोश्चन्द्रयमयोश्च सकाशतः ।
अधमाः कोटिगुणकैः पञ्चाशद्भिः सपञ्चकैः ।

इदं मूलमस्यार्थः -

ऋषिसंस्थानन्दगुणे एकोत्तरशतेन तु ।

विभक्ते च रमांशस्य सदृशानन्दमात्रतः ।
शतांशानामभावाच्च शतोनाः परिकीर्तिताः ।। इति ।

अत्र मानम् - 'पितृभिर्मुनिभिः कृतम्' ।

इति पूर्वोक्तार्थापत्तिरेव ज्ञापकं मानमुत्तमम् ।

'तथा देवर्षिपितृपनराः' ।

इति वै तत्त्वसङ्ख्याने ऋषीणां गणनादपि ।
देवपित्रोस्तु मध्ये च ऋषीणां च सकाशतः ।
शताधमा इति ज्ञेयाः पितरश्चिरसञ्ज्ञिनः ।

तथा -

'अन्येभ्यस्तु विमुक्तेभ्यो आनन्दश्चक्रवर्तिनाम् ।
मुक्तानां हि शतोद्रिक्तः पितृणां तेभ्य एव च ।
तेभ्योऽप्यृषीणां मुक्तानाम्'
इति वाक्यं बृहद्भाष्यगतं चात्र प्रमापकम् ।

ननु ते ये शतं देवगन्धर्वाणामानन्दाः स एकः पितृणां चिरलोकलोकानामानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः स एक आजानदेवानामानन्दः ।

एवमाजानदेवेभ्यः पितॄणां तु शतोनता ।
प्रोच्यते तु ऋषीणां तु कथ्यते च शतोनता ।
अतश्चिरपितृणां च ऋषीणां च समानता ।
प्राप्तेत्यतः शतोनत्वं कथं स्यादिति चेन्न च ।
श्रुतिस्थशतशब्दस्य सहस्रदशवाचिताम् ।

वदेदेव ततः कोऽपि विरोधो नैव विद्यते ।
तस्मात् त्रयपितृणां तत्त्वकक्ष्यायां कथितत्वतः ।
तथा कर्मजकक्ष्यायां पितृणां सप्तकस्य च ।
तथैवाजानकक्ष्यायां प्रोक्तत्वात्तच्छतस्य च ।
एभ्यः शिष्टाश्च पितरो ऋषिभ्यस्तु शताधमाः ।
एतदेवानुसन्धाय प्रवृत्तं मूलमत्र तु ।
ततस्तात्त्विककक्ष्योक्तपितृणां तु त्रयं विना ।।

इत्यादि ।

।। इति द्वात्रिंशी कक्ष्या ।।

**ततः कर्मजकक्ष्योक्तानष्टगन्धर्वकान् विना ।**
**तथैवाऽजानजसमशतगन्धर्वकान् विना ।।**

**शिष्टाः सर्वेऽपि गन्धर्वाः शतोनाः परिकीर्तिताः ।**

आजानकक्ष्योक्तगन्धर्वाणां सकाशतः ।
दशलक्षाधमा ज्ञेयाः कर्मदेवसमाश्च ये ।
गन्धर्वास्तेभ्यो विज्ञेयाः सहस्रकोटितोऽधमाः ।

इदं मूलमस्यार्थः ।

पितृस्थितानन्दगुणे एकोत्तरशतेन तु ।
विभक्ते चरमांशस्य सदृशानन्दमात्रतः ।
शतांशानामभावाच्च शतोनाः परिकीर्तिताः ।। इति ।

अत्र मानम् -

कर्मदेवगणा अष्टगन्धर्वास्तत्परे शतम् ।

आजानदेवास्तेभ्योऽपि पितृभ्यश्च शतावराः ।
स्वमुखेनैव देवैर्य आज्ञाप्याः सर्वदा गणाः ।

आख्याता देवगन्धर्वाः इति वाक्यं बृहद्भाष्यगतं चात्र प्रमापकम् ।

**।। इति त्रयस्त्रिंशी कक्ष्या ।।**

**ततो मनुष्यगन्धर्वाः ज्ञेयाः शतगुणाधमाः ।।**

इदं मूलम् । अत्र मानम् - ये त्वन्यमुखगोचराः ।

मानुषास्ते च गन्धर्वास्तेभ्यः ते च शतावराः ।
इति वाक्यं बृहद्भाष्यगतं चात्र प्रमापकम् ।

**।। इति चतुस्त्रिंशी कक्ष्या ।।**

**ततः कर्मजकक्ष्यायामुक्तराजशतं विना ।**
**शिष्टाः सर्वेऽपि राजानो ज्ञेयाः शतगुणाधमाः ।।**

पितृभ्यस्तु प्रविज्ञेया हीना दशसहस्रकैः ।
कर्मदेवकक्ष्योक्तशतराजभ्य एव च ।
शतसङ्ख्यगुणैश्चोनाः ज्ञेयाः सङ्ख्याविचक्षणैः ।
देवगन्धर्वसञ्ज्ञेभ्यो हीना दशसहस्रकैः ।
पितृभ्यस्तु प्रविज्ञेया हीना वै दशलक्षकैः ।

इदं मूलमस्यार्थः -

मनुष्यगन्धर्वगानन्दे एकोत्तरशतेन तु ।
विभक्ते चरमांशस्य सदृशानन्दमात्रतः ।
शतांशानामभावाच्च शतोनाः परिकीर्तिताः ।। इति ।

अत्र मानम् -

भूपा मनुष्यगन्धर्वाः देवाः पितर एव च ।
आजानेयाः कर्मदेवास्तत्त्वदेवाः पुरन्दरः ।
शिवो विरिञ्च इत्येते क्रमाच्छतगुणोत्तराः ।
इति गीतासु तात्पर्यं मानमत्र प्रकीर्तितम् ।

ननु

'अन्येभ्यस्तु विमुक्तेभ्यो आनन्दश्चक्रवर्तिनाम् ।
मुक्तानां हि शतोद्रिक्ताः पितृणां तेभ्य एव च ।
इति श्रीमद्बृहद्भाष्ये पितृभ्यः शतगुणोनता ।
कथ्यतेऽतः कथं मूले दशलक्षगुणोनता ।
पितृभ्यस्तु प्रविज्ञेया हीना वै दशलक्षकैरिति ।

पितृभ्यः शतगुणोनतेति । भूपानामिति शेषः । अतः 'पितृभ्यस्तु प्रविज्ञेया हीना वै दशलक्षकैः' इति मूले चोच्यमाना दशलक्षगुणोनता कथमित्यन्वयः । इति चेदत्र भाष्ये तु शतशब्दस्तु यश्च सः । दशानां लक्षवाची स्यादतो नात्र विरुद्धता । यथोक्तम् - सर्वज्ञैर्भाष्यकारैः - 'शतशब्दस्यायुतदशलक्षादावपि समत्वात्' । चक्रवर्तिभ्यो मनुष्यगन्धर्वाः शताधिकाः देवगन्धर्वा अयुताधिकाः पितरो दशलक्षाधिकाः इत्यादि।

अत्रेदं बोध्यम् -

सर्वत्र नीचेभ्यश्चोत्तमेषु च ।
ज्ञानानन्दबलादीनामाधिक्यं त्वस्ति यच्च तत् ।
सङ्ख्यामानांशवैचित्र्यस्फुटताभिश्च पञ्चधा ।

आधिक्येष्वेषु पञ्चसु सङ्ख्याधिक्यं प्रदर्श्यते ।
नीचेषु त्वेकजातीयफलादिगजं सुखम् ।
यावत्ततोऽप्यनेकानि तज्जातीयानि च भोगतः ।
सुखानि सन्ति ह्युच्चेषु सङ्ख्यामानं तदुच्यते ।
ज्ञानादिष्वप्येवमेव विज्ञातव्यं विचक्षणैः ।
'विषयेभ्योऽधिकसुखव्यक्तिः प्राकाश्यमिति कथ्यते ।
इतरेषां सुराणां तु निःसीमानन्दभोजनम् ।'
इत्युक्तसिद्धिमांश्चैकतद्धीनश्चापरस्तथा ।
तयोश्च सिद्धिहीनस्य चूतादिफलभोगतः ।
यावत्सुखाभिव्यक्तिस्स्यात्ततोऽप्यधिकमेव तु ।
प्राकाश्यसिद्धिमत्पुंसो चूतादिफलभोगतः ।
निःसीमसुखव्यक्तिस्याद् यदि देवो भवेद्धि सः ।
इति शास्त्रे तूच्यते हि मानाधिक्यं समञ्जसा ।
न च गुणे गुणायोग इति वाच्यं तु सर्वथा ।
अस्मत्पक्षे गुणाद्याश्च तद्वन्तो हि विशेषतः ।
इत्यनुव्याख्यानतस्तेऽपि ज्ञातव्या गुणिनस्त्विति ।
एवं तु सङ्ख्यायाधिक्यं मानाधिक्यं तथैव च ।
सम्यक् प्रदर्शितेदानीमंशाधिक्यं प्रदर्श्यते ।
तूलादि पिण्डसाम्येऽपि वज्रादेः परिमाणतः ।
तथैव बहुलांशित्वं वज्रादेर्गुरुता यतः ।
तथेन्द्रादिगतानन्दापेक्षया दशशतादितः ।
उमादिषु गतानन्दस्याऽधिक्येऽपि च मानतः ।
तदानन्दस्य ह्यंशानां मानं नैतावदेव तु ।
तत्तदानन्दगा ह्यंशा ह्यनन्ता इति सम्मताः ।

इदं त्वंशाधिक्यमिति विज्ञातव्यं विचक्षणैः ।
नन्वद्रव्यत्वाद् गुणानां तु नैवांश इति चेन्न च ।
तस्माद् गुणादिकमपि नास्त्यनंशतया क्वचित् ।
इति गीतासु तात्पर्ये गुणानामपि सन्ति ते ।
अंशाः समाहितत्वात्तु वैचित्र्याधिक्यमुच्यते ।

तथा हि ।

अप्रकृष्टविषयोत्थो हि मोद इत्युच्यते बुधैः ।
प्रकृष्टविषयोत्थो हि प्रमोद इति गीयते ।
अप्रकृष्टेषु वैचित्र्याद् विषयेषु तथैव च ।
मोदप्रमोदयोश्चापि वैचित्र्यं तु प्रतीयते ।
तत्रैव मोदगाधिक्यात् प्रमोदे तु विशेषतः ।
प्रतीयते यदाधिक्यं वैचित्र्यं तु तदुच्यते ।
एवं शेषविपादीनाम् आनन्दादेः सकाशतः ।
सरस्वत्यादिदेवानामानन्दादिगुणेष्वपि ।
मोदाद्यानन्दवैचित्र्यविशेषस्त्वभिव्यज्यते ।
परिमाणे शतगुणेऽप्यानन्दस्फुटतावशात् ।
यथा दीपाच्छतगुणाप्यग्निज्वाला न दीपवत् ।
स्फुटी भवेद् यथैवाग्निर्बहुलोऽपि न सूर्यवत् ।
इति तैत्तरीयसुभाष्ये तु स्फुटताधिक्यमञ्जसा ।
सम्यग् व्युत्पादितं चैतद् विज्ञातव्यं विचक्षणैः ।
तस्माद् उमा यावदनन्तांशानित्युक्तेश्च तथैव च ।
एते समा व्याप्त्या ब्रह्मेरौ गुणतोऽधिकौ ।
अनन्ताश्च गुणा ह्येषामन्यजीवव्यपेक्षया ।

तेभ्योऽप्यनन्ता विष्णोऽस्तु इति वाक्ये तथैव च ।
मध्यमो वायुरेवैकः उत्तमः केवलो हरिः ।
सर्वशब्दोदितो तस्मादेतौ द्वावेव नापरः ।
अन्ये चैव मितैः शब्दैः उच्यते नामितैः क्वचित् ।
श्रीरप्यखिलशब्दोक्ता विष्णुवन्न तु मुख्यतः ।
तस्मादमितनामानावपि तौ मितनामवत् ।
श्रीश्च वायुश्च विष्णुस्तु मुख्योक्तेरमिताभिधः ।
अनन्तनामवत्त्वाच्च सोऽनन्तगुण ईरितः ।
इत्यैतरेयसुभाष्ये च ह्युमादीनां सकाशतः ।
यदनन्तगुणोच्चत्वं लक्ष्म्यादीनां प्रकथ्यते ।
तत्तु स्पष्टत्वविषयमिति ज्ञेयं विचक्षणैः ।

तथा -

यथाऽऽनन्दे तथा ज्ञाने विष्णुभक्तौ बलादिके ।
सर्वैर्गुणैः शतगुणाः क्रमेणोक्तेन तेऽखिलाः ।
इति वै पूर्वसद्वाक्येऽप्याधिक्योक्तेस्तथैव च ।
उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटाः ।
इत्युत्तरस्मिन्नपि वाक्येऽप्यानन्दादेर्गुणस्य च ।
लक्ष्मीब्रह्माद्युमादीनां सुखज्ञानादिकैरपि ।
गुणैः सर्वैः कोटिशतदशकोनत्वमेव तु ।
स्फुटत्वापेक्षयानऽन्तन्यूनत्वं सिद्धमञ्जसा ।

**।। इति पञ्चत्रिंशी कक्ष्या ।।**

**ततः शताधमा ज्ञेयाः मानुषेषूत्तमाश्च ये ।।**

तेष्वप्युच्चावचावत्वं ज्ञेयं तन्मोक्षसाधनम् ।
मानुषेषूत्तमा ये च ज्ञेयास्तेऽपि चतुर्विधाः ।
ब्राह्मणाः क्षत्रियाः वैश्या शूद्रा इति प्रभेदतः ।
सर्वेभ्यो मानुषेभ्यस्तु ब्राह्मणाश्चोत्तमोत्तमाः ।

इदं मूलम् अत्र मानम् -

ते ये मानुषमुक्ताश्च विप्रमुक्तास्ततोऽधिकाः ।
इति तृतीयतात्पर्यं मुक्तियोग्यनरेषु च ।
विप्राणामधिकत्वे तु मानं सम्परिकीर्तितम् ।
तारतम्यं ब्राह्मणेषु तत्रैव कथितं स्फुटम् ।
तत्रोपदेशमात्रेण मुक्तेभ्यो वेदवेदिनः ।
अर्थज्ञाः ऋषयस्तेभ्यः ते देवाः संशयच्छिदः ।
पूर्णधर्मस्त्वतस्त्विन्द्रो निःसङ्गो गरुडस्ततः ।
भक्तिपूर्णो हरेर्ब्रह्मा तस्मान्नान्योऽधिकस्ततः । इत्यादि
सावित्रं च प्राजापत्यं ब्राह्मं चाथ बृहत्तराः ।
वार्ताः सञ्चयशीला शिलोञ्छा इति वै ग्रहे ।
वैखानसा वालखिल्योदुम्बराः फेनपा वने ।
न्यासे कुटीचकः पूर्वं बहूदो हंसनिष्क्रियौ ।
इति श्रीमद्भागवते तृतीयस्कन्धसञ्ज्ञिके ।
व्यासोक्तेर्विद्यमानत्वाद् ब्राह्मणा येऽपि तेऽपि च ।
चतुर्विधा इति ज्ञेया ब्रह्मविद्याविशारदाः ।
सन्न्यासिनो वनस्थाश्च गृहिणो ब्रह्मचारिणः ।
सन्यासिनश्च ये तेऽपि विज्ञातव्याश्चतुर्विधाः ।

तेभ्योऽप्यनन्ता विष्णोऽस्तु इति वाक्ये तथैव च ।
मध्यमो वायुरेवैकः उत्तमः केवलो हरिः ।
सर्वशब्दोदितो तस्मादेतौ द्वावेव नापरः ।
अन्ये चैव मितैः शब्दैः उच्यते नामितैः क्वचित् ।
श्रीरप्यखिलशब्दोक्ता विष्णुवन्न तु मुख्यतः ।
तस्मादमितनामानावपि तौ मितनामवत् ।
श्रीश्च वायुश्च विष्णुस्तु मुख्योक्तेरमिताभिधः ।
अनन्तनामवत्त्वाच्च सोऽनन्तगुण ईरितः ।
इत्यैतरेयसुभाष्ये च ह्युमादीनां सकाशतः ।
यदनन्तगुणोच्चत्वं लक्ष्म्यादीनां प्रकथ्यते ।
तत्तु स्पष्टत्वविषयमिति ज्ञेयं विचक्षणैः ।

तथा -

यथाऽऽनन्दे तथा ज्ञाने विष्णुभक्तौ बलादिके ।
सर्वैर्गुणैः शतगुणाः क्रमेणोक्तेन तेऽखिलाः ।
इति वै पूर्वसद्वाक्येऽप्याधिक्योक्तेस्तथैव च ।
उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटाः ।
इत्युत्तरस्मिन्नपि वाक्येऽप्यानन्दादेर्गुणस्य च ।
लक्ष्मीब्रह्माद्युमादीनां सुखज्ञानादिकैरपि ।
गुणैः सर्वैः कोटिशतदशकोनत्वमेव तु ।
स्फुटत्वापेक्षयानऽन्तन्यूनत्वं सिद्धमञ्जसा ।

।। इति पञ्चत्रिंशी कक्ष्या ।।

**ततः शताधमा ज्ञेयाः मानुषेषूत्तमाश्च ये ।।**

तेष्वप्युच्चावचावत्वं ज्ञेयं तन्मोक्षसाधनम् ।
मानुषेषूत्तमा ये च ज्ञेयास्तेऽपि चतुर्विधाः ।
ब्राह्मणाः क्षत्रियाः वैश्या शूद्रा इति प्रभेदतः ।
सर्वेभ्यो मानुषेभ्यस्तु ब्राह्मणाश्चोत्तमोत्तमाः ।

इदं मूलम् अत्र मानम् -

ते ये मानुषमुक्ताश्च विप्रमुक्तास्ततोऽधिकाः ।
इति तृतीयतात्पर्यं मुक्तियोग्यनरेषु च ।
विप्राणामधिकत्वे तु मानं सम्परिकीर्तितम् ।
तारतम्यं ब्राह्मणेषु तत्रैव कथितं स्फुटम् ।
तत्रोपदेशमात्रेण मुक्तेभ्यो वेदवेदिनः ।
अर्थज्ञाः ऋषयस्तेभ्यः ते देवाः संशयच्छिदः ।
पूर्णधर्मस्त्वतस्त्विन्द्रो निःसङ्गो गरुडस्ततः ।
भक्तिपूर्णो हरेर्ब्रह्मा तस्मान्नान्योऽधिकस्ततः । इत्यादि
सावित्रं च प्राजापत्यं ब्राह्मं चाथ बृहत्तराः ।
वार्ताः सञ्चयशीला शिलोञ्छा इति वै ग्रहे ।
वैखानसा वालखिल्योदुम्बराः फेनपा वने ।
न्यासे कुटीचकः पूर्वं बहूदो हंसनिष्क्रियौ ।
इति श्रीमद्भागवते तृतीयस्कन्धसञ्ज्ञिके ।
व्यासोक्तेर्विद्यमानत्वाद् ब्राह्मणा येऽपि तेऽपि च ।
चतुर्विधा इति ज्ञेया ब्रह्मविद्याविशारदाः ।
सन्न्यासिनो वनस्थाश्च गृहिणो ब्रह्मचारिणः ।
सन्यासिनश्च ये तेऽपि विज्ञातव्याश्चतुर्विधाः ।

परमहंसास्तथा हंसाद् बहूदाः कुटजा इति ।
निःसूत्री एकदण्डी च हिंसाकर्मविवर्जितः ।
परमहंसः स विज्ञेयः सर्वन्यासिषु चोत्तमाः ।
यज्ञोपवीत्येकदण्डी स तु हंस इतीरितः ।
पुत्रादिदत्तेनान्नेन यो वै प्राप्नोति जीवनम् ।
स्वग्रहे एव तिष्ठंस्तु स कुटीज इति स्मृतः ।
तत्र यः परमो हंसः सः राजभ्यः पादतोऽधमः ।

**।। इति षट्त्रिंशी कक्ष्या ।।**

ततः परमहंसाच्च पादोनो हंसनामकः ।
राज्ञां सकाशतस्त्वेषः गुणेनार्धेन चाधमः ।

**।। इति सप्तत्रिंशी कक्ष्या ।।**

हंसाद् बहूदः पादोनः तथा परमहंसतः ।
गुणेनार्धेन विज्ञेयो गुणेनैकेन राजतः ।

**।। इत्यष्टत्रिंशी कक्ष्या ।।**

बहूदात्कुटिजो न्यासी पादोनः परिकीर्तितः ।
हंसाच्चार्धगुणेनैव ह्यधमः परिकीर्तितः ।
महाहंसात्स विज्ञेयो गुणेनैकेन चाधमः ।
स कुटीजः महाहंसात् । परमहंसात् तथैव च ।
क्षितिपेभ्यस्तु राजभ्यो द्विगुणाधम ईरितः ।
एतत्तु भगवद्गीतातात्पर्ये कथितं स्फुटम् ।

**।। इति एकोनचत्वारिंशी कक्ष्या ।।**

एवं वनस्था एतेऽपि विज्ञातव्याश्चतुर्विधाः ।
फेनपोदुम्बरश्चैव वालिखिल्यस्तथैव च ।
वैखानसाश्चेति भेदाद् वनधर्मपरायणाः ।
फेनपास्ते तु विज्ञेया ये च वै वत्सफेनपाः ।
उदुम्बुरास्तु ते ज्ञेया ये च वै फलभक्षकाः ।
वालिखिल्यास्तु ते प्रोक्ता ये च वै सर्वभक्षकाः ।
वैखानसास्तु ते ज्ञेया ये च वै मूलभक्षकाः ।
तत्राद्यः फेनपश्चापि वनधर्मपरायणाः ।
कुटिजात् न्यासिनः सोऽपि पादोन इति कीर्तितः।

।। इत्येकचत्वारिंशी कक्ष्या ।।

फेनादुदुम्बरश्चापि पादोन इति कीर्तितः ।

।। इति द्विचत्वारिंशी कक्ष्या ।।

एतस्माद्वालिखिल्योऽपि पादोनः परिकीर्तितः ।
क्षितिपेभ्येऽस्तु राजभ्यश्चतुर्भिर्गुणतोऽधमः ।

।। इति त्रिचत्वारिंशी कक्ष्या ।।

ग्रहस्था मानुषा येतु तेऽपि ज्ञेयाश्चतुर्विधाः ।
शिलोञ्छाश्चाथ शालीनास्तथा केचिदसञ्चयाः ।
तथावार्ताश्चेति भेदाग्रहधर्मपरायणाः ।
व्रीह्यादि स स्वक्षेत्रेषु धान्यैस्तु गलितैस्तु यः ।
जीवनोपायकर्ता तु स शिलोञ्छ उदाहृतः ।
समग्रवर्षपर्यन्तं स्वजीवननिमित्ततः ।
धान्यसङ्ग्रहकारी यः स शालीन इतीरितः ।

असञ्चयास्ते ते ज्ञेयाः एकाहित्वव्रते स्थिताः ।
वार्तास्तु ते वै विज्ञेया यायावारोपजीविनः ।
तत्राऽद्या ये शिलोञ्छाश्च ग्रहधर्मपरायणाः ।
वैखानसाद् वनस्थाच्च पादोनाः परिकीर्तिताः ।

।। इति चतुश्चत्वारिंशी कक्ष्या ।।

शिलोञ्छादपि शालीनाः पादोनाः परिकीर्तिताः ।

।। इति पञ्चचत्वारिंशी कक्ष्या ।।

शालीनात्सञ्चयश्चापि पादोन इति गीयते ।

।। इति षट्चत्वारिंशी कक्ष्या ।।

ततो वार्ताः प्रविज्ञेयाः तस्मात्पादगुणाधमाः ।
वैखानसाद् वनस्थाच्च द्विगुणोनाः प्रकीर्तिताः ।
भूमिपेभ्यस्तु राजभ्यो ह्यष्टभिर्गुणतोऽधमः।

।। इति सप्तचत्वारिंशी कक्ष्या ।।

ब्रह्मचारिणस्तु ये तेऽपि विज्ञातव्याश्चतुर्विधाः ।
बृहत्तराश्च ब्राह्माश्च प्राजापत्यास्तथैव च ।
सावित्राश्चेति भेदेन ब्रह्मचर्यव्रते स्थिताः ।
यावज्जीवं ब्रह्मचर्ये नैष्ठिके तु व्रते स्थिताः ।
ब्रह्मतरास्तु ते ज्ञेया ब्रह्मचर्यपरायणाः ।
प्राजापत्यास्तु ते ज्ञेया एकभार्यर्तुगामिनः ।
द्वादशवर्षपर्यन्तं गुरूणां कुलवासतः ।
वेदाध्ययनकर्तारः सावित्रास्ते तु वै स्मृताः ।

बृहत्तराश्च तत्राऽद्याः ब्रह्मचर्यपरायणाः ।
वार्तेभ्यस्तु ग्रहस्थेभ्यो द्विगुणोनाः प्रकीर्तिताः ।

**।। इत्यष्टचत्वारिंशी कक्ष्या ।।**

ततो बृहत्तरा ब्राह्माद् द्विगुणोनाः प्रकीर्तिताः ।

**।। इत्येकोनपञ्चाशत्कक्ष्या ।।**

प्राजापत्यास्ततो ब्राह्मात् द्विगुणोनाः प्रकीर्तिताः ।

**।। इति पञ्चाशत्कक्ष्या ।।**

प्राजापत्याच्च सावित्राः ब्रह्मचर्यपरायणाः ।
पादार्धार्धेन सहितेनैकेन च गुणाधमाः ।
वार्तेभ्यस्तु ग्रहस्थेभ्यः सार्धद्वादशतोऽधमाः ।
न्यासिभ्यः कुटजेभ्यस्तु पञ्चाशद् गुणतोऽधमाः ।
गन्धर्वेभ्यो मानुषेभ्यस्त्वयुतोनाः प्रकीर्तिताः ।
इत्यवान्तरभेदेन भेदिनो ये नरोत्तमाः ।
भूपेभ्यस्तु विमुक्तेभ्यो ज्ञेयाः शतगुणाधमाः ।

अत्र मानम् । 'अन्येभ्यस्तु विमुक्तेभ्यो आनन्दश्चक्रवर्तिनाम्। मुक्तानां हि शतोद्रिक्तः' ।

इति वाक्यं बृहद्भाष्यगतं चात्र प्रमापकम् ।
एवं क्षत्रियवैश्याश्च यत्याद्याश्रमभेदिनः ।
तारतम्ययुता ज्ञेया स्वेषु स्वेषु पृथक् पृथक् ।

अत्र मानम् - त्रिवर्णा अपि यतिवानप्रस्थब्रह्मचारिग्रहस्थभेदेन तारतम्यवन्तः ।

मानुषा वर्णभेदेन तथैवाऽश्रमभेदतः ।
इति सूत्रभाष्योक्तिरेवात्र मानं सम्परिकीर्तिता ।

तथा यतयोऽपि परमहंस हंसबहूदाःकुटीजा इति भेदेन तारतम्यवन्तः ।

इति गीतासुतात्पर्यमपि चात्र प्रमापकम् ।

ननु 'आशिष्टो दृढिष्टो बलिष्ठाः यस्येयं सर्वा वित्तेन पूर्णा स्यात् स एषो मानुषो भक्तो भवति । ते एते शतं मानुषा भक्ता एतावान् मानुषो गन्धर्वः' इति तैत्तिरीयश्रुतावमुक्तनृभ्यः सकाशतः। गन्धर्वाणां मानुषाणां शतोच्चत्वं प्रकथ्यते । तथा - एकानन्द-स्वरूपोऽसौ मानुषो मुक्त इष्यते । तस्माच्छतगुणानन्दा गन्धर्वा मानुषात्मकाः । इति तच्छ्रुतिभाष्येऽपि शतोच्चत्वं प्रकथ्यते ।

तथा 'आशिष्ठो दृढिष्ठो बलिष्ठः तस्येयं सर्वा वित्तेन पूर्णा स्यात् स एको मानुषो भक्तो भवति । ते एते शतं मानुषभक्ताः एतावान्मानुषगन्धर्वः ते एते शतं मानुषगन्धर्वाः' ।

इति सुसौकरायणश्रुतावपि नृणां सकाशतः ।
गन्धर्वाणां मानुषाणां शतोच्चत्वं प्रकथ्यते ।
अतस्तेभ्यः शतोनतां भूपानां च सकाशतः ।
कथं शतगुणोनत्वं मानुषाणां घटेदिदम् ।
किञ्च एवं सति मनुष्याणां भूपानां समतैव तु ।
प्राप्ते सतो न वै चैतद् घटते त्विति चेन्न च ।
अत्र यः शतशब्दः सः सहस्रदशवाचकः ।
नरमानुषगन्धर्वविषयेऽत्र वदेदिति ।

नरमानुषेति । नराः मनुष्योत्तमाः । मानुषगन्धर्वाश्च नरमानुषगन्धर्वाः । एतेषां विषये यः शतशब्दः सः दशसहस्रवाचकः इति वदेदित्यन्वयः ।

अतः कोऽपि विरोधोऽत्र नैव चिन्त्यः कथञ्चन ।
ननु 'मनुष्येभ्यस्तु भूपानां शतोच्चत्वं प्रकथ्यते ।
मनुष्योत्तमशब्देन के वै चात्र विवक्षिताः ।
यदि शूद्रादि वक्ष्यन्ते तदत्यन्तमसङ्गतम् ।
ब्राह्मणः सर्वतः श्रेष्ठस्तुर्यांशस्तस्य बाहुजः ।
वैश्यस्तु तत्पञ्चमांशः षष्ठांशस्तस्य शूद्रकः ।
इत्युक्तेर्विप्रपर्यन्तं गणनायां तु शूद्रतः ।
विप्रस्य विंशाधिकं शतोच्चत्वं प्रलभ्यते ।
अतः शतगुणोच्चत्वं मनुष्येभ्यस्तु भूभृताम् ।
कथं स्यादिति चेदित्थं विज्ञातव्यं विचक्षणैः ।
विप्रादेव तु तत्रापि सावित्राद् ब्रह्मचारिणः ।
शतोच्चत्वं वदेद् राज्ञां नान्यथेदं घटेत् क्वचित् ।
अतस्तद् घटनार्थाय एवमेव प्रकल्पयेत् ।
किञ्च शूद्रादिक्षत्रियान्तानां नरोच्चत्वं न वै भवेत् ।
चतुर्वर्णमनुष्येषु विप्राणामेव चोन्नता ।

तस्मात् -

मनुष्योत्तमविप्रेषु सावित्राद् ब्रह्मचारिणः ।
राज्ञां शतगुणोच्चत्वं नान्येषां तु सकाशतः ।
अतो विष्णुरहस्ये तु केवलं द्विजभूपयोः ।
सुखस्य तारतम्यं तु कथ्यते स्पष्टमेव तु ।

तथा हि - जम्बुद्वीपवती मही ।

यद्वशात् सुदृढो विद्वान् युवा चिन्तादिवर्जितः ।
तत्सौख्यतुल्यसुखयुक् मुक्तौ क्षितिप ईरितः ।
सप्तद्वीपवती राजा [1]दृश्यश्च सततं स्वतः ।
स्वेष्टस्त्रीपुत्रभृत्याद्यैः सम्भृतो वैरिवर्जितः ।
यस्तस्य यत्सुखं लोके मुक्तौ विप्रस्य तादृशम्' इति ।
विप्रादिवर्णभिन्नानां यत्याद्याश्रमभेदिनाम् ।
आनुलोम्यप्रातिलोम्यजातीनां च तथैव च ।
नीचोच्चत्वमपि ह्येषां तत्रैव कथितं स्फुटम् ।

तथा हि -

ब्राह्मणः सर्वतः श्रेष्ठः तुर्यांशस्तस्य बाहुजः ।
वैश्यश्च तत्पञ्चमांशः षष्ठांशस्तस्य शूद्रकः ।
आनुलोम्यप्रातिलोम्यजातीनां क्रमतः सुखम्' इत्यादि ।
[2]प्रातिx x x? हीनस्य केवलं ह्यन्त्यजस्य तु ।
सुखस्य परिमाणं तु तत्रैव स्फुटमीरितम् ।
वंशैर्दीर्घा षण्णवत्याशीत्या भूमिः सुविस्तृता ।
क्षेत्रमित्युच्यते प्राज्ञैर्वंशस्तु दशहस्तकः ।
पञ्चोत्तरैर्विंशतिभिः सहस्राणां च षट्शतैः ।
(षट्शताधिकपञ्चविंशसहस्रसङ्ख्याकैः क्षेत्रैरित्यर्थः ।)
क्षेत्रैर्युतं च यत् स्थानं यत् स्यान्निरुपद्रवम् ।

---

1. 'हृष्टश्च' इति स्यात्

2. x x x

सुखे यदधिकं यस्य स्याद् यत्ते सुखमीरितम् ।
प्रातिलोमिषु हीनो यः तस्य स्याद[1] x x x x ।

स्मृत्यर्थस्त्वित्थम् जातीनां विप्रत्वादिचतुष्टयव्यतिरिक्तसूतादिविलोमजातीनाम् आनुलोम्यप्रातिलोम्यनिमित्ततारतम्येन सुखं तत्र प्रातिलोम्यजात्यपेक्षया अनुलोमजातौ सुखविशेषः ।

विप्राद्युत्तमजातीयपुरुषाणां सकाशतः ।
क्षत्रियाद्यधमस्त्रीषु जाता सा त्वानुलोमिका ।
अस्यास्तु विपरीता तु प्रतिलोमेति कीर्तिता ।

वंशैर्दीर्घैरिति ।

षण्णवत्या षडधिकनवत्या । षडधिकनवतिसङ्ख्याकैः वंशैर्दीर्घाकारेण परिमितभूरेव अशीतिसङ्ख्याकैर्वंशैर्विस्तृता सति क्षेत्रमित्युच्यते । वंशः क इत्यत आह - वंशस्त्विति । दशहस्ताः परिमाणमस्येति दशहस्तकः । सहस्राणां पञ्चोत्तरैः विंशतिभिः षट्शतैश्च षट्शताधिकपञ्चविंशत्सहस्रसङ्ख्याकैः क्षेत्रैरित्यन्वयः । यस्य पुरुषस्येतावत् । स्थानं निरुपद्रवं राजचोराद्युपद्रवशून्यं स्वकीयं यदा स्यात्तदा तदधिकस्य एतत्क्षेत्रसमुदायवतो यत्सुखं स्यात्तत्सुखं प्रतिलोमसु जस्य मुक्तान्तजस्य स्यादिति स्मृत्यर्थोऽवगन्तव्यः ।

**।। इत्येकपञ्चाशत्कक्ष्या ।।**

सावित्रात् क्षत्रियो ज्ञेयः चतुर्भिर्गुणतोऽधमः इति ।

**।। इति द्विपञ्चाशत्कक्ष्या ।।**

---

1. x x x x

ततश्च वैश्यजातीयो गुणैः पञ्चाधमः स्मृतः ।

।। इति त्रिपञ्चाशत्कक्ष्या ।।

ततोऽनुलोमजातीयो ह्यधमः परिकीर्तितः ।

।। इति चतुःपञ्चाशत्कक्ष्या ।।

ततश्च शूद्रजातीया षड्भिश्च गुणतोऽधमाः ।।

।। इति पञ्चपञ्चाशत्कक्ष्या ।।

ततश्च प्रतिलोमस्तु ह्यवरः परिकीर्तितः ।

।। इति षट्पञ्चाशत्कक्ष्या ।।

ततश्च मोक्षयोग्यो यो ह्यन्त्यजस्त्वधमः स्मृतः ।

।। इति सप्तपञ्चाशत्कक्ष्या ।।

नरादनन्तरकक्षस्य जङ्गमानामथोच्यते ।
तारतम्यं यथा शास्त्रे कथ्यते च तथैव च ।
अन्त्यजाद्दशलांशेन गजाः प्राणभृतास्त्विमे ।
चित्तव्यापारसहिताः ह्यधमाः परिकीर्तिताः ।
चित्तं प्राणभृत्सु प्राणभृत्स्वेव विस्तरात् इति ।
ऐतरेयश्रुतिस्त्वत्र मानं सम्परिकीर्तितम् ।
स्मृत्यर्थस्त्वित्थम्
प्राणभृत्सु चेष्टावत्सु पश्वादिषु चित्तं दृश्यते ।
तस्मादात्मा प्राणभृत्स्वेव अविस्तरम् ।
ओषध्यादिभ्यो विशेषेणाऽविर्भवति।

।। इत्यष्टपञ्चाशत्कक्ष्या ।।

ततोऽश्वाश्वगजेभ्यस्तु प्रोक्ता द्विगुणतोऽधमाः ।

**।। इत्येकोनषष्ठीकक्ष्या ।।**

मृगाश्च ग्राम्यपशवस्तुरगाद् द्विगुणाधमाः ।

**।। इति द्विषष्ठीकक्ष्या ।।**

ततश्च वृक्षजातीयाद् द्विगुणोनाः प्रकीर्तिताः ।

**।। इति त्रिषष्ठीकक्ष्या ।।**

ततो लताश्च वृक्षेभ्यः द्विगुणोनाः प्रकीर्तिताः ।

**।। इति चतुःषष्ठीकक्ष्या ।।**

ततो गुल्मा लताभ्यश्च द्विगुणोनाः प्रकीर्तिताः ।

**।। इति पञ्चषष्ठीकक्ष्या ।।**

ततश्चोषधयो गुल्माद् द्विगुणोनाः प्रकीर्तिताः ।

**।। इति षट्षष्ठीकक्ष्या ।।**

ततश्चिदानन्दरूपो तृणजीवोऽवरः स्मृतः ।

अत्र मानम् ।

गजाद्यात्स्वधमास्तस्मात् तेभ्यश्चाश्वास्ततो मृगाः ।
पशश्वस्ततः पक्षिजातयो जलजा अपि ।
ततः क्षुद्रा जन्तवस्तु ततो वृक्षास्ततो लताः ।
गुल्मास्ततश्चोषधयः ततस्तृणमुखाः क्रमात् ।
द्विगुणावराः ।
इति विष्णुरहस्यस्थवाक्यमेवात्र ज्ञापकम् ।

मनुष्येभ्योऽधमा ज्ञेयाः चतुष्पादास्तु जङ्गमाः ।
तेभ्योऽधमा इति ज्ञेया बहुपादास्तु जङ्गमाः ।
तेभ्यश्चोभयतो दन्तहीना इति प्रकीर्तिताः ।
हीनास्ततो रूपविदस्तेभ्यः शब्दविदोऽधमाः ।
तेभ्यो हीना गन्धविदस्तेभ्यस्तु रसवेदिनः ।
तेभ्यो हीना स्पर्शविदस्ततस्त्विन्द्रियवृत्तयः ।
ततः सचित्तात्स्वधमास्ततः प्राणभृतोऽधमाः ।
ततो जीवनमात्रं तु धारिणस्त्वधमा मताः ।
सजीवेभ्यो ह्यजीवास्तु ह्यधमाः परिकीर्तिताः ।

अत्र मानम् -

जीवाः श्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे ।
ततः सचित्ताः प्रवराः ततस्त्विन्द्रियवृत्तयः ।
अत्रापि स्पर्शवेदिभ्यः प्रवरा रसवेदिनः ।
तेषां गन्धविदः श्रेष्ठाः ततः शब्दविदोऽवराः ।
रूपभेदविदस्तत्र ततश्चोभयतोदताः ।

तेषां बहुपदः श्रेष्ठाः ।

एवं तृतीयस्कन्धे श्रीमद्भागवते स्थितम् ।
ज्ञापकं वाक्यमेवात्र मानं सम्परिकीर्तितम् ।

तथा -

'पशुवृक्षादिभेदेन जीवा एवं व्यवस्थिताः ।
संसृतौ व्यत्ययस्तेषां मुक्तौ तत्तत्स्वरूपता ।
तत्र स्थावरमुक्तेभ्यः अवरा जङ्गममुक्तिगाः ।

तेभ्यो मानुषमुक्ताश्च विप्रा मुक्तास्ततोऽधिकाः ।
इति तद्वाक्यतात्पर्यादपि ज्ञेयमिदं त्विति ।
वन्दे नारायणं तं श्रियमथ च विधिप्राणनाथौ सभार्यौ ।
वीन्द्रशेषौ च पत्नीः खगमृडदयिते चेन्द्रकामौ च वायुम् ।
दक्षं चैनं प्रवाहं यममपि जलपं नारदं चाग्निदेवम् ।
विश्वामित्रं तथैतान्नलिनभवसुतान्मित्रतारेऽश्विनौ च ।।
बल्यादीन् स्वर्नदीं तामितरसुरवरानग्निजायां बुधं तम् ।
तां देवीं देवकीं च व्रजपतिदयितां नामतस्तां यशोदाम् ।
एतां वै नामदेवीमुषसमथ शनैश्चारिणं पुष्करं तम् ।
देवाश्चाजानसञ्ज्ञानथ सुरगणिकाश्चोक्त शिष्टानृषींस्तान्।
एवं चोक्तेतरांस्तान् चिरपितृनिकरान् देवगन्धर्वसञ्ज्ञान्।
गन्धर्वान् मानुषांस्तान् क्षितिपतिनिकरान्मानुषेषूत्तमांस्तान्।
तेष्वप्युच्चान्द्विजादीनथ करितुरगव्याघ्रपूर्वान् तृणांतान् ।
सर्वांस्तान् मुक्तियोग्यान् नृहरिपदनिरतान्मुक्तिदातॄन्
भवार्णात् ।

आलोच्य श्रीब्रह्मसूत्रगीताभाष्यादिकान्यपि ।
महाभारततात्पर्यगीतातात्पर्यमप्यलम् ।
श्रीमद्भागवतस्यापि तात्पर्यं परमोत्तमम् ।
कृतेयं करवीरस्थानन्ताचार्यसुतेन वै ।
मध्वनाम्ना तारतम्यसारसङ्ग्रहदीपिका ।
संवत्सरे भावनाम्नि मासे कार्तिकसञ्ज्ञिके ।
शुक्लपक्षद्वितीयायां सुलग्ने सुमुहूर्तके ।

विष्णुवाय्वादिदेवानां गुरूणां तु कृपालवात् ।
समाप्तेयं तारतम्यसारसङ्ग्रहदीपिका * ।

**इति श्रीमन्मध्वनाम्ना विरचिता**
**तारतम्यसारसङ्ग्रहदीपिकाव्याख्या समाप्ता ।।**

**।। श्रीकृष्णार्पणमस्तु ।।**

---

* गुरोरन्तर्गतेकृष्णे श्रीदामोदरसञ्ज्ञिनि । समर्पिता मध्वनाम्ना भक्तिपूर्वं तु सादरम् । शालिवाहनशके नाम्ना षोडशानां तथोपरि । षट्सप्ततितमे वर्षे ग्रन्थोऽयं पूर्णतामगात् ।। (१६७६)

## 17 (ताम्रपर्णी) आनन्दतीर्थप्रणीता

# तारतम्यस्तुतिः

जयति श्रीमदानन्दतीर्थार्येष्टो रमापतिः ।
अनन्तानन्तनिस्सीमगुणपूर्णोऽखिलोत्तमः ।। १ ।।
अनन्तानन्तगुणतो विष्णोर्नीचतरा रमा ।
सज्ज्ञानानन्दसौन्दर्यमुखसर्वगुणेष्वपि ।। २ ।।
तस्यास्तु कोटिगुणतो नीचौ ब्रह्मप्रभञ्जनौ ।
सरस्वती भारती च ताभ्यां शतगुणाधमे ।। ३ ।।
शर्वशेषसुपर्णाश्च ताभ्यां शतगुणाधमाः ।
तेभ्यस्तु पञ्चगुणतो नीचाः षण्महिला [1]वि(भोः) ।। ४ ।।
रमावेशह्रासकाले, तद्बाहुल्ये समा मता ।
शेषादिभिः जाम्बवती, अन्याः किञ्चित्ततोऽधमाः ।। ५ ।।
ताभ्यो द्विगुणतो नीचाः शेषवीन्द्रशिवस्त्रियः ।
स्वभर्तृभ्यस्तु ता देव्यः उक्ताश्शतगुणाधमाः ।। ६ ।।
कोट्यादितारतम्यं यदुक्तं यद् वक्ष्यते तथा ।
तत्सर्वं सुखपूर्वाणां गुणानां परिमाणगम् ।। ७ ।।
उमा यावत्पूर्वपूर्वे ज्ञानेऽनन्तगुणाधिकाः ।
शिवाद्या स्वावरा ज्ञानगुणोल्लेखिन्यनन्यगे ।। ८ ।।
शक्रकामादयश्चैव विशेषान् ब्रह्मणि स्थितान् ।
उमादिभिः प्रबुद्धेभ्यः शतांशानेव चक्षते ।। ९ ।।
आनन्दबलपूर्वेषु गुणेषु तु दशावरौ ।।
शक्रकामा उमादिभ्यः तत्रेन्द्रः किञ्चिदुत्तमः ।। १० ।।

---

1. x

स्वनियम्यजगद्ज्ञाने तारतम्यमनन्तकम् ।
नियम्यजगदानन्त्यात् सर्वेषां [1] ---- ।। ११ ।।
गुणस्याष्टतमांशेण वैचित्र्येण च सङ्ख्यया ।
विजातीयैर्गुणैश्चैव उमान्ता अप्यनन्तकाः ।। १२ ।।
पुष्करान्ताः सुरास्सर्वेऽप्यनन्तांशगुणक्रमात् ।
अतोऽणूनामपि ह्येषाम् अनन्तद्रव्यगौरवम् ।। १३ ।।
स्वांशा अपि तदूनास्तु नानन्तांशताः क्रमात् ।
तैजसाहम्भवः प्राणो दशोनश्शक्रकामतः ।। १४ ।।
गुरुर्दक्षोऽनिरुद्धश्च रतिः स्वायम्भुवः शची ।
प्राणाद् दशावराः प्रोक्ताः कर्मेन्द्रियगुणाधिपात् ।। १५ ।।
तेभ्यस्तु पञ्चगुणतो नीचः प्रवह ईरितः ।
मानवी यमसोमार्का प्रवहाद् द्विगुणतोऽधमाः ।। १६ ।।
तेभ्यस्तु वरुणः पादपादार्धगुणतोऽधमः ।
प्रसूतिवह्निभृगवो वरुणात्पादपादतोऽधमाः ।। १७ ।।
वरुणाग्न्यन्तरा प्रोक्तो नारदो द्विगुणाधमः ।
वह्नेः मित्रः प्रावही च तारा निर्ऋतिस्तथा ।। १८ ।।
कसूनवो मरीच्याद्याः वैवस्वतमनुस्तथा ।
विश्वामित्र इति ह्येते नव मित्राग्निमध्यगाः ।। १९ ।।
सन्न्यायरत्नावलितो नयचन्द्रसुधोक्तितः ।
प्रधानवायुर्वसवो रुद्रादित्या मरुद्गणाः ।। २० ।।
बृहस्पतिर्ऋभुर्द्यावापृथिव्यावश्विनौ तथा ।
विश्वेदेवाश्च पितरः शतस्थाः देवताः मताः ।। २१ ।।

---

1. xxx

द्रोणः प्राणः ध्रुवोर्कोऽग्निर्दोषोवस्तुर्विभावसुः ।
वसवोऽष्टाविमे ज्ञेयाः आदित्या द्वादशा मताः ।। २२ ।।
विवस्वानिन्द्रवरुणमित्रोरुक्रमनामकाः ।
पञ्च षष्ठस्तु पर्जन्यः त्वष्टा च सविता भगः ।। २३ ।।
धाता पूषाऽर्यमा चेति रुद्रा एकादश स्मृताः ।
रैवतोऽजो भवो भीमो वाम उग्र वृषाकपिः ।। २४ ।।
अजैकपादहिर्बुध्न्यः बहुरूपो महानिति ।
क्रतुर्दक्षो वसुस्सत्यः कामः कालो धुनिर्धरः ।। २५ ।।
पुरूरवार्द्रवाश्च विश्वेदेवा दश स्मृताः ।
प्राणोऽपानस्तथा व्यानः उदानश्च समानकः ।। २६ ।।
नागश्च कृकलः कूर्मो देवदत्तो धनञ्जयः ।
प्रवहो विवहः [1]शंयुः संवहश्च परावहः ।। २७ ।।
उद्वहश्चावहः शङ्कुः काल[2]श्चानिलोऽनलः ।
प्रतिभः कुमुदः कान्तः [3]x x x गुरुः ।। २८ ।।
सञ्ज्ञः संवर्तकः कालः दितिः सौम्यः कपिर्जडः ।
मण्डूकः सन्ततः सिद्धः [4]x x कपिः शुक्लः ।। २९ ।।
यतिर्भीमो हनुः पिङ्गोऽहंप्राणः कम्पनस्तथा ।
वायुना सहिता एते पञ्चाशन्मरुतः स्मृताः ।। ३० ।।
यमसोमाग्नयः प्रोक्ताः पितृणां पतयस्त्रयः ।
ऋभुसञ्ज्ञो गणो ह्येकः गुरुरप्यश्विनौ तथा ।। ३१ ।।

---

1. शम्भुः
2. श्वासोऽ
3. श्वेतोऽजितो
4. रक्तः कृष्णः पिकः शुक्लः

द्यावापृथिव्यावित्येते शतस्था देवता मताः ।
वसुष्वेक [1]x x रुद्रेष्वेकं गुरुस्तथा ।। ३२ ।।
मरुत्सु त्रीन् ऋभून् त्रींश्च विनैते पायदाः समाः ।
समादिष्टशतस्थानां विष्वक्सेनो धनेश्वरः ।। ३३ ।।
विघ्नपश्चेत्यमी देवाः मित्रपर्जन्यमध्यगाः ।
मरुतश्च समाः सर्वे सप्त तेषु प्रधानकाः ।। ३४ ।।
प्राणाद्याः [2]पञ्चहं प्राणः प्रवहश्चेति सप्तकम् ।
केसरी मरुतां श्रेष्ठः सम्पातिः श्वेत एव च ।। ३५ ।।
मरुत्प्रवीराः पाण्डुश्च चक्रस्य मरुतो मरुत् ।
गन्धर्व आश्रयस्तस्य चान्तरिक्षाभिधो मरुत् ।। ३६ ।।
आकाशादवरो वायुपुत्रो [3]मरुदीरितः ।
ऋभवः पृथिवीन्यूनाः तस्यां तेषां लयश्रुतेः ।। ३७ ।।
एवं शिष्टशतस्थेषु किञ्चिन्नीचोच्चता मता ।
तस्मादग्निः पावकाख्यः प्रथमोऽग्नेः सुतोऽवरः ।। ३८ ।।
नासत्यदस्रयोः पश्चात् सनाद्या निर्णयोक्तितः ।
पावकोऽपि मरुद् [4]x x x षट्प्रश्नोक्त्याऽवगम्यते ।। ३९ ।।
अतश्च सनकादीनाम् उक्तिः सम्भावितो भवेत् ।
चशब्दात् सनकादींश्च विनेत्यपि विवक्षितम् ।। ४० ।।
अतो मित्राग्निमध्यत्वं कसूनूनां न रुध्यते ।
पर्जन्यश्च विराट्सञ्ज्ञा गङ्गा धार्मी च रोहिणी ।। ४१ ।।

---

1. x x x
2. पञ्च संप्राणः
3. मरुदुदीरितः
4. x x

षडेताः पावकान्यूनाः मित्रात्तु द्विगुणाधमाः ।
स्वाहाऽग्निजाया चैतेभ्यो देवेभ्यो द्विगुणाधमा ।। ४२ ।।
पर्जन्यादधमाः केचिद् देवाः स्वाहोत्तमा मताः ।
जलमानी बुधस्तस्या अवरः सम्प्रकीर्तितः ।। ४३ ।।
ततो नामात्मिका तूषा अवरा सम्प्रकीर्तिता ।
स्वाहातो दशतो न्यूना शनिस्तस्यावरो मतः ।। ४४ ।।
शनेरप्यवरा देवाः शिष्टाः प्रह्लादपूर्वकाः ।
तेभ्योऽवरः पुष्कराख्यस्तूषसस्तु दशाधमः ।। ४५ ।।
अथानुक्ताश्च मनवो गन्धर्वाणां तथाऽष्टकम् ।
ऊर्वश्याद्यप्सरस्त्रीणां चत्वारिंशच्च सप्त च ।। ४६ ।।
ऋष्यशीतिश्च बल्यादिसप्तकं पितृसप्तकम् ।
जात्यन्तरे विंशतिश्च पृथुहैहयपूर्विणाम् ।। ४७ ।।
राज्ञां शतं विप्रराजन्यविशेषोऽत्रापि कश्चन ।
शतोनाः पुष्करादेते कर्मदेवाश्च तत्समाः ।
नन्दपत्नी कर्मजेभ्यः प्रोक्ता दशगुणोत्तमा ।। ४८ ।।
तस्यास्तु देवकी श्रेष्ठा तद्भर्ता तु ततोऽधिकः ।
तत आजानजाः सर्वे शतोनशतकोटयः ।। ४९ ।।
सशतव्यष्टसाहस्रसम्मिता याश्च योषितः ।
कृष्णस्य प्रागग्निपुत्राः गन्धर्वाणां शतं तथा ।। ५० ।।
त एते कर्मदेवेभ्यः प्रोक्ताश्शतगुणाधमाः ।
कशेरुः प्राक् त्वष्टृपुत्री तासामत्यधिका स्मृता ।। ५१ ।।
कृष्णाङ्गसङ्गोप्यस्तु परमाप्सरसः पुरा ।
आजानजेभ्यो द्विगुणतो नीचाश्च पितरश्चिराः ।। ५२ ।।
नीचाश्शतगुणैर्ज्ञेयाः प्रोक्ताऽन्ये शतसङ्ख्यकाः ।
तेभ्योऽपि देवगन्धर्वाः प्रोक्ताः शतगुणाधिकाः ।। ५३ ।।

तेभ्यो मानुषगन्धर्वा कथितास्तु शतावराः ।
तेभ्यः शतावराः प्रोक्ताः मानुषाश्चक्रवर्तिनः ।। ५४ ।।
तेभ्यः शतावरा ज्ञेयाः मानुषेषु य उत्तमाः ।
वर्णाश्रमविभेदेन तारतम्यं च तेष्वपि ।। ५५ ।।
तेभ्यस्तु पशवो न्यूनाः स्थावरास्तु ततोऽवराः ।
तृणान्ता इति विज्ञेयाः पारावर्यं सुरेष्विदम् ।। ५६ ।।
ज्ञात्वा तदन्तगत्वेन ज्ञात्वोत्कर्षं हरेर्महत् ।
मुच्यते नात्र सन्देहो नान्यथा तु कथञ्चन ।। ५७ ।।
स्वोत्तमं गुरुमारभ्य ब्रह्मान्ता गुरवो मम ।
क्रमेण स्वेषु सर्वेषु लक्ष्म्यां लक्ष्मीपतावपि ।। ५८ ।।
भक्तिं चानादिसंसिद्धां वर्धयन्तु तथा मतिम् ।
स मम श्रीमदानन्दतीर्थाचार्यगुरुर्हरिः ।
महालक्ष्मीमुखाम्भोजराजहंसः प्रसीदतु ।। ५९ ।।
श्रीमन्मध्वहृदब्ज [1] x x कृष्णायाऽनन्दसिन्धवे ।
नमोऽस्तु ते स्वतन्त्रातिप्रियायामिततेजसे ।। ६० ।।
भैष्मीसत्यामुखाम्भोजमध्वास्वादनलालसः ।
प्रीतोऽस्तु भगवान् कृष्णो ह्यस्मद्गुरुसुपूजितः ।। ६१ ।।
श्रीविठ्ठलार्यवरदेशिकपादपद्म-
सेवापरेण तनुजेन मया ह्यकारि ।
आनन्दतीर्थवरनामजुषा हरेस्तु
सम्प्रीतये स्तवमिदं परमं सुगोप्यम् ।। ६२ ।।

**।। इति श्रीविठ्ठलाचार्यतनूजेन आनन्दतीर्थेन विरचिता तारतम्यस्तुतिः सम्पूर्णा ।।**

---

1. स्थ

# 18. नरसिंहाचार्यरचितः तारतम्यसङ्ग्रहः

।। श्री गुरुभ्यो नमः ।।

प्रणम्य विठ्ठलं श्रीशं पूर्णप्रज्ञं तथा गुरुम् ।
रमादीनां तारतम्यं दर्शयिष्येऽन्यतः स्थितम् ।। १ ।।

समस्तगुणसम्पूर्णसर्वदोषविवर्जितः ।
नारायणः सर्ववन्द्यो मतः सर्वोत्तमोत्तमः ।। २ ।।

ततो रमा हरेर्भार्या नित्यमुक्ता हरिप्रिया ।
अनन्तानन्तगुणतः [1](स्व)भर्तुरधमा मता ।। ३ ।।

ततो ब्रह्मा च वायुश्च श्रियः कोटिगुणाधमौ ।
तत्रेदानीं किञ्चिदूनो वायुर्ब्रह्मत्वमेष्यति ।। ४ ।।

भारत्यादौ न्यूनता तु ज्ञेया वायुवदेव हि ।
श्रियो ब्रह्मा ततो वाणी ततो रुद्रो ततो उमा ।। ५ ।।

एते क्रमाद् ज्ञानगुणैरनन्तांशाधमा मताः ।
उमा यावदनन्तांशान्नीलाद्या एवमेव हि ।। ६ ।।

उमायाः ज्ञानविषये महेन्द्रस्तु शतावरः ।
ततः सरस्वती? श्रद्धा ताभ्यां शतगुणाधमे ।। ७ ।।

सुपर्णशेषरुद्राश्च सरस्वत्याः शतावराः ।
नीला भद्रा मित्रविन्दा कालिन्दी लक्षणा तथा ।। ८ ।।

जाम्बवत्यधिका ताभ्यः तेभ्यः पञ्चगुणाधमाः ।
सौपर्णी वारुणी चोमादयो द्विगुणतोऽधमाः ।। ९ ।।

---

1. स्व इति शुद्धः पाठः

शेषादिभ्यो दशगुणैर्हीना विष्णुपरायणाः ।
ततः शक्रस्तथा कामस्तत्रेन्द्रः [1](किञ्चिदु)त्तमः ।। १० ।।

तेभ्यो दशाधमौ प्रोक्तौ भक्त्यादिगुणतः सदा ।
तथाऽहङ्कारिकः प्राणः इन्द्राद् दशगुणाधमः ।। ११ ।।

ततः स्वायम्भुवो दक्षो ह्यनिरुद्धो बृहस्पतिः ।
शचीरतिह्यहङ्कारप्राणा दशगुणाधमाः ।। १२ ।।

ततस्तु प्रवहो वायुर्गुरोः पञ्चगुणाधमः ।
विवस्वान् यमचन्द्रौ च शतरूपा च मानवी ।। १३ ।।

चत्वार एते प्रवहाद् द्विगुणोनाः प्रकीर्तिताः ।
ततस्तु वरुणः सूर्यात्पादपादार्धतोऽधमः ।। १४ ।।

ततस्तु नारदः प्रोक्तो भृगुवह्निप्रसूतयः ।
नारदादधमाः प्रोक्ता वरुणात् पादतोऽधमाः ।। १५ ।।

मरीचिरत्र्यङ्गिरसो पुलस्त्यः पुलहः क्रतुः ।
वशिष्टश्चेत्यजसुताः विश्वामित्रसमा मताः ।। १६ ।।

अष्ट वन्ह्यवरामित्राच्छ्रेष्ठाश्च परिकीर्तिताः ।
वैवस्वतो मनुश्चाश्विपश्चाद् ज्ञेयो बभूषिभिः ।। १७ ।।

निर्ऋतिर्मित्रतारे च प्रावही च समा मताः ।
चत्वार एते वह्नेस्तु कीर्तिताः द्विगुणाधमाः ।। १८ ।।

विघ्नेशो धनदश्चैव विष्वक्सेनस्तथैव च ।
उक्तशेषाः शतस्थाश्च मित्रपर्जन्यमध्यगाः ।। १९ ।।

---

1. किचदु

परावहो मरुच्चैवं ह्यश्विनौ विघ्नवित्तपौ ।
विष्वक्सेनयुता ह्येते पावनेर्मरुतोऽधिकाः ।। २० ।।

मरुत्पर्जन्ययोर्मध्ये पावको वह्निपुत्रकः ।
विना सनत्कुमारं तु सनकाद्याश्च योगिनः ।। २१ ।।

नासत्यदस्रयोरेव पश्चाद् ज्ञेया बुभुक्षुभिः ।
शामला च (विराट्) एवं सञ्ज्ञा गङ्गा च रोहिणी ।। २२ ।।

पर्जन्यसहिता ह्येते मित्राद् द्विगुणतोऽधमाः ।
ततः (श्वा)हा वह्निजाया पर्जन्याद् द्विगुणाधमा ।। २३ ।।

जल[1]मानिबुधतस्या ह्यधमो ह्युषसोऽधिकः ।
उषा नामात्मिका तस्मादधमा परिकीर्तिता ।। २४ ।।

स्वाहाया अधमा प्रोक्ता गुणैर्दशभिरेव हि ।
ततः [2]शनैश्चरः प्रोक्तो ह्यवरो भूमिपालकः ।। २५ ।।

हिरण्यकशिपोः पुत्रः प्रह्लादस्तु ततोऽवरः ।
शनिपुष्करयोर्मध्ये ह्युक्तान्या देवता मताः ।। २६ ।।

ततः पुष्कर उद्दिष्टो ह्युषसस्तु दशावरः ।
ततोऽनुक्ताश्च मनव एकादश समा मताः ।। २७ ।।

अष्टगन्धर्वाद्व्यधिकनवत्यप्सरसस्तथा ।
पितॄणां सप्तकं चैव मान्धात्रादिशतं तथा ।। २८ ।।

1. मानी
2. शनै

शेषादिभ्यो दशगुणैर्हीना विष्णुपरायणाः ।
ततः शक्रस्तथा कामस्तत्रेन्द्रः [1](किञ्चिदु)त्तमः ।। १० ।।

तेभ्यो दशाधमौ प्रोक्तौ भक्त्यादिगुणतः सदा ।
तथाऽहङ्कारिकः प्राणः इन्द्राद् दशगुणाधमः ।। ११ ।।

ततः स्वायम्भुवो दक्षो ह्यनिरुद्धो बृहस्पतिः ।
शचीरतिह्यहङ्कारप्राणा दशगुणाधमाः ।। १२ ।।

ततस्तु प्रवहो वायुर्गुरोः पञ्चगुणाधमः ।
विवस्वान् यमचन्द्रौ च शतरूपा च मानवी ।। १३ ।।

चत्वार एते प्रवहाद् द्विगुणोनाः प्रकीर्तिताः ।
ततस्तु वरुणः सूर्यात्पादपादार्धतोऽधमः ।। १४ ।।

ततस्तु नारदः प्रोक्तो भृगुवह्निप्रसूतयः ।
नारदादधमाः प्रोक्ता वरुणात् पादतोऽधमाः ।। १५ ।।

मरीचिरत्र्यङ्गिरसो पुलस्त्यः पुलहः क्रतुः ।
वशिष्टश्चेत्यजसुताः विश्वामित्रसमा मताः ।। १६ ।।

अष्ट वन्ह्यवरामित्राच्छ्रेष्ठाश्च परिकीर्तिताः ।
वैवस्वतो मनुश्चाश्विपश्चाद् ज्ञेयो बभूषिभिः ।। १७ ।।

निर्ऋतिर्मित्रतारे च प्रावही च समा मताः ।
चत्वार एते वह्नेस्तु कीर्तिताः द्विगुणाधमाः ।। १८ ।।

विघ्नेशो धनदश्चैव विष्वक्सेनस्तथैव च ।
उक्तशेषाः शतस्थाश्च मित्रपर्जन्यमध्यगाः ।। १९ ।।

---

1. किचदु

परावहो मरुच्चैवं ह्यश्विनौ विघ्नवित्तपौ ।
विष्वक्सेनयुता ह्येते पावनेर्मरुतोऽधिकाः ।। २० ।।

मरुत्पर्जन्ययोर्मध्ये पावको वह्निपुत्रकः ।
विना सनत्कुमारं तु सनकाद्याश्च योगिनः ।। २१ ।।

नासत्यदस्रयोरेव पश्चाद् ज्ञेया बुभुक्षुभिः ।
शामला च (विराट्) एवं सञ्ज्ञा गङ्गा च रोहिणी ।। २२ ।।

पर्जन्यसहिता ह्येते मित्राद् द्विगुणतोऽधमाः ।
ततः (श्वा)हा वह्निजाया पर्जन्याद् द्विगुणाधमा ।। २३ ।।

जल[1]मानिबुधतस्या ह्यधमो ह्युषसोऽधिकः ।
उषा नामात्मिका तस्मादधमा परिकीर्तिता ।। २४ ।।

स्वाहाया अधमा प्रोक्ता गुणैर्दशभिरेव हि ।
ततः [2]शनैश्चरः प्रोक्तो ह्यवरो भूमिपालकः ।। २५ ।।

हिरण्यकशिपोः पुत्रः प्रह्लादस्तु ततोऽवरः ।
शनिपुष्करयोर्मध्ये ह्युक्तान्या देवता मताः ।। २६ ।।

ततः पुष्कर उद्दिष्टो ह्युषसस्तु दशावरः ।
ततोऽनुक्ताश्च मनव एकादश समा मताः ।। २७ ।।

अष्टगन्धर्वाद्व्यधिकनवत्यप्सरसस्तथा ।
पितॄणां सप्तकं चैव मान्धात्रादिशतं तथा ।। २८ ।।

---

1. मानी
2. शनै

ऋषीणां शतके देवसमा[1]न्ये ऋषयस्तथा ।
बल्याद्याः कर्मदेवाश्च पुष्करात्तु शतावराः ।। २९ ।।

राजन्येभ्यः किञ्चिदधिकाः विप्रा राजसमा अपि ।। ३० ।।

बलिपुष्करयोर्मध्ये यशोदा नन्द[2]गाहिनी ।
कर्मजेभ्यो दशगुणैरधिका सम्प्रकीर्तिता ।। ३१ ।।

ततोऽधिका देवकी च तत [3]अनकदुन्दुभिः ।
तत आजानजा देवा गन्धर्वाणां शतं तथा ।। ३२ ।।

सदा ह्यष्टसहस्रमहिष्यः कृष्णवल्लभाः ।
तासां कसे[4]रुरधिका त्वष्ट्रपुत्री हरिप्रिया ।। ३३ ।।

कृष्णाङ्ग सङ्गगो[5]पश्च शतोनऋषयस्तथा ।
महिष्योऽष्टौ विना यास्ता कथिता कृष्णवल्लभाः ।। ३४ ।।

कृष्णाङ्गसङ्गगोपीभ्यः द्विगुणेनाधिका मताः ।
एते कर्मजदेवेभ्यो ह्यूनाः शतगुणेन च ।। ३५ ।।

ततः शतवराश्चैव पितृदेवाः प्रकीर्तिताः ।
ततः शतवरा देवगन्धर्वा उदिताः सदा ।। ३६ ।।

ततो मानुषगन्धर्वाः शतोनाः परिकीर्तिताः ।
क्षितिपास्ततोऽवराः प्रोक्ता गुणानां शतसङ्ख्यया
।। ३७ ।।

1. समा - ये
2. गीहिनी - गे
3. आ
4. शे
5. प्य

ततस्तु मानुषश्रेष्ठाः गुणेन शततोऽधमाः ।
मानुष्योत्तमसङ्घोऽपि वर्णाश्रमविभागतः ।। ३८ ।।

तारतम्यं तु विज्ञेयं भाष्योदाहृतमानतः ।
ततो वर्णावरानां [1]च तेभ्यस्तु पशवोऽवराः ।। ३९ ।।

ततो वृक्षाद्या[2]तृणांतु स्थावरं परिकीर्तितम् ।
एवं तृणादि ब्रह्मान्तस्याऽधिक्यं तारतम्यतः ।। ४० ।।

ततो लक्ष्म्या[3]स्ततो विष्णोर्ज्ञात्वा मुच्येत संसृतेः ।
नृसिंहाचार्यविरचितात् तारतम्यसुसङ्ग्रहात्
प्रीयतां पूर्णबोधार्यहृत्पद्मावासिविठ्ठलः ।। ४१ ।।

**।। नृसिंहाचार्यविरचितः तारतम्यसङ्ग्रहः समाप्तः ।।**

---

1. चा
2. तृणान्तम्
3. क्ष्म्या

## 19. वेदगिरिनारायणाचार्यशिष्यविट्ठलाचार्यकृता

# तारतम्यमणिमाला

प्रणम्य श्रीपतिं व्यासं पूर्णप्रज्ञं निजं गुरुम् ।
शर्वशक्रादिदेवांश्च तारतम्यं प्रकाशये ।। १ ।।
विष्णुस्सर्वाधिकोऽनन्तगुणपूर्णनिजाकृतिः ।
ततो रमाऽनन्तगुणा ततो वेधाः सदागतिः ।। २ ।।
ततो गायत्रिभारत्यौ ततो वीन्द्रा हि भूतपाः ।
ततस्तु जाम्बवत्याद्याः स्त्रियो विष्णोः प्रकीर्तिताः ।। ३ ।।
ततस्सौपर्णिवारुण्यौ उमा च परिकीर्तिताः ।
ततस्त्विन्द्रश्च कामश्च काम इन्द्राधमोऽल्पतः ।। ४ ।।
ततोऽहङ्कारिकः प्राणः कर्मेन्द्रियगणाधिपः ।
ततो मनुर्गुरुर्दक्षः अनिरुद्धो रतिः शची ।। ५ ।।
ततः प्रवह उद्दिष्टो वायुर्भूतनियामकः ।
ततश्च यमसूर्येन्दुशतरूपाः प्रकीर्तिताः ।। ६ ।।
ततश्च वरुणः प्रोक्तः ततः पश्चाच्च नारदः ।
ततः पश्चादग्निगुरुदक्षपत्न्यस्ततः परम् ।। ७ ।।
विश्वामित्रमरीच्याद्याः वैवस्वतमनुस्तथा ।
मित्रस्तारा प्रावही च निर्ऋतिश्च ततः परम् ।। ८ ।।
उक्तेभ्योऽन्ये च पर्जन्या [1]x x x शतसङ्ख्यकाः ।
विष्वक्सेनो गणेशश्च कुबेरश्चैव [2]x x x ।। ९ ।।
एते मित्रावराः प्रोक्ताः गणेशादवरो मरुत् ।
सनकाद्याश्चाश्विपश्चात् मरुतः पावकोऽधमः ।। १० ।।

---

1. कीर्तिताः　　　2. विष्वक्सेनो

पर्जन्यश्च विराट् सञ्ज्ञा गङ्गा धार्मी च रोहिणी ।
एकादशाधमा ये ते देवाः केचित्ततोऽवराः ।। ११ ।।
ततः सहाग्निभार्योक्ता ततो जलमयो बुधः ।
ततो नामात्मिका तूषा शनिः पृथ्व्यात्मकः स्मृतः ।। १२ ।।
नवकोटिदेवा उक्तान्ये ततः पुष्कर उच्यते ।
ततोऽनुक्ताश्च मनवो गन्धर्वाणां तथाऽष्टकम् ।। १३ ।।
ऋष्यशीतिस्तथा सप्त पितरोऽन्यासु जातिषु ।
विंशदप्स[1]रस(श्चात्र) बल्याद्याः कर्मदेवताः ।। १४ ।।
राज्ञां च पृथुपूर्वाणां शतं तत्सम ईरितम् ।
ततः पश्चादनाख्याताः x x x आजानदेवताः ।। १५ ।।
उक्तेभ्योऽन्ये च ऋषयो गन्धर्वाणां शतं तथा ।
ततश्च पितरः सप्तव्यतिरिक्ताश्च चिरा मताः ।। १६ ।।
ततश्च देवगन्धर्वा अष्टोत्तरशतं विना ।
ततो मानुषगन्धर्वा अष्टोत्तरशतं विना ।। १७ ।।
ततो मानुषगन्धर्वा ततश्च क्षितिपा मताः ।
ततश्च मानुषाः श्रेष्ठाः तत्र वर्णानुसारतः ।। १८ ।।
तत्राप्याश्रमभेदेन तारतम्यं विमुक्तिगम् ।
तेभ्योऽपि पशवो नीचाः ततः स्थावरजातयः ।। १९ ।।
एवं तृणादिब्रह्मान्तं ततो लक्ष्म्यास्ततो (हरेः)[2] ।
तारतम्यं तथोत्कर्षं ज्ञात्वा मुच्येत संसृतेः ।। २० ।।
तारतम्यपरिज्ञानात् प्रीतो भवति केशवः ।। २१ ।।

**।। इति श्रीमद्वेदगिरिनारायणाचार्यशिष्येण**
**विट्ठलेन कृता तारतम्यमणिमाला सम्पूर्णा ।।**

---

1. x x x 2. x x

## 20. चट्टी आनन्दाचार्यरचितः

# तारतम्यसङ्ग्रहः

हयग्रीवं तथा वायुं जयार्यं परमं गुरुम् ।
नत्वा सम्यक्तारतम्यं वदिष्ये मध्ववाक्यतः ।। १ ।।

विष्णुः सर्वगुणैः पूर्णः श्रेष्ठः सर्वसुरैस्सदा ।
मुक्तैरमुक्तैरपि यो रमया(नि)त्यमुक्तया ।। २ ।।

विष्णोरनन्तगुणतो रमा नीचा प्रकीर्तिता ।
रमया ब्रह्मवायू च सदाऽनन्तगुणाधमौ ।। ३ ।।

सरस्वती भारती च ततोऽनन्तगुणाधमे ।
ताभ्यामनन्तगुणतो शेषवीन्द्रशिवास्त्रयः ।। ४ ।।

नीचास्तेभ्यो जाम्बवती नीला भद्रा च लक्षणा ।
कालिन्दी मित्रविन्देति षडनन्तगुणाधमाः ।। ५ ।।

सौपर्णी वारुणी चोमा ताभ्योऽनन्तगुणाधमाः ।
उमादिभ्यस्त्विन्द्रकामौ प्रोक्तौ दशगुणाधमौ ।। ६ ।।

प्रायग्रहणतस्त्विन्द्रात्कामोऽध इति वै सुधा ।
प्राणोऽहंनामकस्ताभ्यामुक्तो दशगुणाधमः ।। ७ ।।

ततोऽनिरुद्धश्च मनूरतिर्दक्षश्शची गुरुः ।
xxxxxx दशा विशेषो ह्यवगम्यते ।। ८ ।।

?रतीरतेजयोसम्य xxxxxxxxxxx ।
आश्रयाश्रयिभावस्य तेभ्यः पञ्चगुणाधमः ।। ९ ।।

x x x x x x x x x वायुस्तस्माद् द्विगुणतोऽधमः ।
शतरूपा यमस्सूर्यसोमौ तेभ्यो जलाधिपः ।। १० ।।
पादपादार्धतो न्यूनः तस्मादल्पगुणाधमः ।
नारदोऽग्निस्ततः किञ्चिदधमः सम्प्रकीर्तितः ।। ११ ।।
वरुणात्पादतो न्यूनो भृगुरग्निसमः स्मृतः ।
अग्नेरेकऋषिः किञ्चिन्न्यूनोऽग्नेश्च समा मताः ।। १२ ।।
प्रसूतिरप्येकऋषेः किञ्चिन्न्यूनाः प्रकीर्तिताः ।
मरीचिरत्र्यङ्गिरसः पुलस्त्यः पुलहः क्रतुः ।। १३ ।।
विश्वामित्रो वसिष्ठश्च वैवस्वतमनुस्तथा ।
विष्ण्वावेशान्मरीच्यादिसमो वैवस्वतः स्मृतः ।। १४ ।।
आवेशाभावकाले तु ह्यश्विपश्चात्प्रकीर्तितः ।
मरीच्याद्यैः किञ्चिदूनाः प्रावही निर्ऋतिस्तथा ।। १५ ।।
मित्रतारे द्विगुणतो ह्यधमाग्नेः प्रकीर्तिताः ।
षडशीतिश्च देवांशा विष्वक्सेनो विनायकः ।। १६ ।।
देहमानी मानुषाणां धनेशश्च इति त्रयः ।
शिष्टा मित्रादिभिः किञ्चिन्न्यूनाः सम्यगुदाहृताः ।। १७ ।।
रुद्राणां दशकं प्रोक्तमादित्यानां षडेव तु ।
मरुतां सप्तसहितं चत्वारिंशत् प्रकीर्तितम् ।। १८ ।।
एकः पिता ऋभूणां तु गण एकोऽश्विनोर्द्वयम् ।
विश्वेदेवा दश प्रोक्ताः द्यावाभूम्योर्द्वयं तथा ।। १९ ।।
वसूनां सप्तकं चैव ज्ञेयं ग्रन्थान्तरोक्तितः ।
षडशीतिरिति प्रोक्ताः शतस्थैर्देवतैर्मनुः ।। २० ।।

वैवस्वतो मनुः किञ्चिन्न्यूनः प्रोक्तः स्वरूपतः ।
वैवस्वतेन मनुना सनकाद्याः समाः स्मृताः ।। २१ ।।

ऋते सनत्कुमारं तु कामरूपत्वतोऽस्य तु ।
मनुपर्जन्ययोः मध्ये मरुदादौ प्रकीर्तितः ।। २२ ।।

पावकानन्तरः प्रोक्तः वैवस्वतमनोर्गुणैः ।
पर्जन्यः x x x नः स्यान्मित्रात्तु द्विगुणाधमः ।। २३ ।।

रोहिणी शामला गङ्गा विराट्सञ्ज्ञेति पञ्चषाः ।
पर्जन्य(स्य) समाः प्रोक्ता अप्रसिद्धाश्च केचन ।। २४ ।।

सन्न्यायरत्नावल्युक्तेर्देवाः पर्जन्यतोऽवराः ।
अनुक्तदेवतासाम्यं प्रह्लादस्याऽहुरञ्जसा ।। २५ ।।

स्वाहा त्वनुक्तदेवेभ्यो निकृष्टा द्विगुणाधमा ।
पर्जन्यादवरा स्वाहा उदकात्मा बुधो वरः ।। २६ ।।

बुधान्नामावरं प्रोक्तं स्वाहायाश्च दशावरम् ।
शनिर्नामावरः प्रोक्तः पुष्करस्तु शनैश्चरात् ।। २७ ।।

निबो(ध) दशाधमो नाम्नः पुष्करात्किञ्चिदूनकः ।
प्रह्लादस्तु ततः किञ्चिदूनः कश्यप उच्यते ।। २८ ।।

कश्यपात्किञ्चिदूना स्याद् देवकी नन्दगेहिनी ।
देवक्याः किञ्चिदूना सा पुष्करात्तु दशाधमा ।। २९ ।।

यशोदायाः कर्मदेवाः गुणानां दशतोऽवराः ।
तुम्बुर्वाद्यष्टगन्धर्वाः पितरः सप्त एव च ।। ३० ।।

उक्तेभ्योऽन्ये ह्युत्तमाद्याः मनवो दश चैकयुक् ।
च्यवनोचथ्यपूर्वा ये ह्यशीतित्रिऋऋषयस्तथा ।। ३१ ।।

जात्यन्तरे प्रसिद्धाश्च विंशदल्पाधिकारिणः ।
प्रियव्रतादिराजानः यशोदाया दशाधमाः ।। ३२ ।।
अग्निजानां षोडशकसहस्राणि शतं तथा ।
देवगन्धर्वशतकं शतोनशतकोटयः ।। ३३ ।।
ऋषयः कर्मदेवेभ्यः शतोनाः सम्प्रकीर्तिताः ।
पञ्चांशतो दशांशाद् वा स्वस्वजात्यां परस्परम् ।। ३४ ।।
बृहद्भाष्योक्तितस्त्वेवं विशेषोऽत्र निरूपितः ।
x x x x प्रधानोक्ता त्वष्टृपुत्रीति युज्यते ।। ३५ ।।
शतावराऽजानजेभ्यः पितरश्चिरनामकाः ।
तेभ्यस्तु देवगन्धर्वाः शतोनाः परिकीर्तिताः ।। ३६ ।।
तेभ्यः मानुषगन्धर्वाः शतोनाः परिकीर्तिताः ।
तेभ्यः शताधमाः प्रोक्ताः राजानस्तच्छताधमाः ।। ३७ ।।
नरोत्तमास्तु तन्मध्ये वर्णाश्रमविभागतः ।
विशेषो ह्यवगन्तव्यस्तेभ्यः द्विगुणतोऽवराः ।। ३८ ।।
गजास्तस्माद् द्विगुणतोऽधमा अश्वाः प्रकीर्तिताः ।
तेभ्यो मृगाश्च पशवो द्विगुणोनाः प्रकीर्तिताः ।। ३९ ।।
जलजाः पक्षिणश्चैव तेभ्यो द्विगुणतोऽधमाः ।
तेभ्यो वृक्षा द्विगुणतो ह्यधमास्तेभ्य एव तु ।। ४० ।।
द्विगुणाधमानि ज्ञेयानि लतागुल्मानि वृक्षतः ।
द्विगुणाधमा ह्योषधयस्ताभ्यस्तु द्विगुणाधमाः ।। ४१ ।।
तृणजीवास्ततो नीचाः नित्यसंसारिणो द्विधा ।
अज्ञाश्च नित्यत्रैविद्या अज्ञास्त्रैविद्यतोऽधमाः ।। ४२ ।।

वैवस्वतो मनुः किञ्चिन्यूनः प्रोक्तः स्वरूपतः ।
वैवस्वतेन मनुना सनकाद्याः समाः स्मृताः ।। २१ ।।

ऋते सनत्कुमारं तु कामरूपत्वतोऽस्य तु ।
मनुपर्जन्ययोः मध्ये मरुदादौ प्रकीर्तितः ।। २२ ।।

पावकानन्तरः प्रोक्तः वैवस्वतमनोर्गुणैः ।
पर्जन्यः x x x नः स्यान्मित्रात्तु द्विगुणाधमः ।। २३ ।।

रोहिणी शामला गङ्गा विराट्सञ्ज्ञेति पञ्चषाः ।
पर्जन्य(स्य) समाः प्रोक्ता अप्रसिद्धाश्च केचन ।। २४ ।।

सन्न्यायरत्नावल्युक्तेर्देवाः पर्जन्यतोऽवराः ।
अनुक्तदेवतासाम्यं प्रह्लादस्याऽहुरञ्जसा ।। २५ ।।

स्वाहा त्वनुक्तदेवेभ्यो निकृष्टा द्विगुणाधमा ।
पर्जन्यादवरा स्वाहा उदकात्मा बुधो वरः ।। २६ ।।

बुधान्नामावरं प्रोक्तं स्वाहायाश्च दशावरम् ।
शनिर्नामावरः प्रोक्तः पुष्करस्तु शनैश्चरात् ।। २७ ।।

निबो(ध) दशाधमो नाम्नः पुष्करात्किञ्चिदूनकः ।
प्रह्लादस्तु ततः किञ्चिदूनः कश्यप उच्यते ।। २८ ।।

कश्यपात्किञ्चिदूना स्याद् देवकी नन्दगेहिनी ।
देवक्याः किञ्चिदूना सा पुष्करात्तु दशाधमा ।। २९ ।।

यशोदायाः कर्मदेवाः गुणानां दशतोऽवराः ।
तुम्बुर्वाद्यष्टगन्धर्वाः पितरः सप्त एव च ।। ३० ।।

उक्तेभ्योऽन्ये ह्युत्तमाद्याः मनवो दश चैकयुक् ।
च्यवनोचथ्यपूर्वा ये ह्यशीतित्रृऋषयस्तथा ।। ३१ ।।

जात्यन्तरे प्रसिद्धाश्च विंशदल्पाधिकारिणः ।
प्रियव्रतादिराजानः यशोदाया दशाधमाः ।। ३२ ।।
अग्निजानां षोडशकसहस्राणि शतं तथा ।
देवगन्धर्वशतकं शतोनशतकोटयः ।। ३३ ।।
ऋषयः कर्मदेवेभ्यः शतोनाः सम्प्रकीर्तिताः ।
पञ्चांशतो दशांशाद् वा स्वस्वजात्यां परस्परम् ।। ३४ ।।
बृहद्भाष्योक्तितस्त्वेवं विशेषोऽत्र निरूपितः ।
x x x x प्रधानोक्ता त्वष्टृपुत्रीति युज्यते ।। ३५ ।।
शतावराऽजानजेभ्यः पितरश्चिरनामकाः ।
तेभ्यस्तु देवगन्धर्वाः शतोनाः परिकीर्तिताः ।। ३६ ।।
तेभ्यः मानुषगन्धर्वाः शतोनाः परिकीर्तिताः ।
तेभ्यः शताधमाः प्रोक्ताः राजानस्तच्छताधमाः ।। ३७ ।।
नरोत्तमास्तु तन्मध्ये वर्णाश्रमविभागतः ।
विशेषो ह्यवगन्तव्यस्तेभ्यः द्विगुणतोऽवराः ।। ३८ ।।
गजास्तस्माद् द्विगुणतोऽधमा अश्वाः प्रकीर्तिताः ।
तेभ्यो मृगाश्च पशवो द्विगुणोनाः प्रकीर्तिताः ।। ३९ ।।
जलजाः पक्षिणश्चैव तेभ्यो द्विगुणतोऽधमाः ।
तेभ्यो वृक्षा द्विगुणतो ह्यधमास्तेभ्य एव तु ।। ४० ।।
द्विगुणाधमानि ज्ञेयानि लतागुल्मानि वृक्षतः ।
द्विगुणाधमा ह्योषधयस्ताभ्यस्तु द्विगुणाधमाः ।। ४१ ।।
तृणजीवास्ततो नीचाः नित्यसंसारिणो द्विधा ।
अज्ञाश्च नित्यत्रैविद्या अज्ञास्त्रैविद्यतोऽधमाः ।। ४२ ।।

नित्यसंसारितो नीचं जडं तस्मान्नराधमाः ।
नीचास्तेभ्यो दैत्यभृत्यास्तेभ्यो दैत्यप्रधानकाः ।। ४३ ।।

नीचा नीचो विप्रचित्तिस्तस्मान्नीचतमः कलिः ।
सर्वदोषस्वरूपोऽसौ योग्योऽन्धतमसस्तु यः ।। ४४ ।।

अशेषजीवदुःखानां भोक्ता ज्ञेयो मुमुक्षुभिः ।
विष्णुमारभ्य कल्यन्तं तारतम्यं हि शास्त्रतः ।। ४५ ।।

ज्ञात्वा मुच्येत संसारान्नरो विष्णुप्रसादतः ।
तारतम्यपरिज्ञानान्मुक्तिः करतले स्थिता ।। ४६ ।।

तारतम्यापरिज्ञानादनुत्थानं तमो व्रजेत् ।
तस्मान्नरस्तारतम्यज्ञानी स्याद् हरिभक्तियुक् ।
तेन प्रीतो हरिः सम्यक् स्वपदं सम्प्रयच्छति ।। ४७ ।।

ज्ञानानन्दतनुं वन्दे ज्ञानार्थं तुरगाननम् ।
यस्य श्रीवदनाम्भोजादापुर्विद्याः सुराः सदा ।। ४८ ।।

चट्टीजनार्दनाचार्यतनयो हरिभक्तिमान् ।
चकारेदं तारतम्यमानन्दाचार्यनामकः ।। ४९ ।।

तेन प्रीतो भवेत्सम्यग्वाजिवक्त्रो रमापतिः ।
श्रीमदानन्दतीर्थार्यहृत्पङ्कजनिवासकः ।। ५० ।।

**इति श्रीमच्चट्टीजनार्दनाचार्यवर्याणां पुत्रेण**
**आनन्दाचार्यधीमता रचितं तारतम्यं सम्पूर्णम् ।।**

## 21. रामाचार्यप्रणीतम्

# तारतम्यस्तवनम्

श्रीलक्ष्मीशं सर्वकर्तारं अजं सर्वोत्तमं विभुम् ।
केनादिवन्दितं वन्दे विशेषं पूर्णसद्गुणम् ।। १ ।।
x x x x x x x x x वन्दे तमेव पुरुषोत्तमम् ।
कादिसुज्ञानदं ज्ञानसिद्धौ कलिमलापहम् ।। २ ।।
बादरायणदासस्य पूर्णबोधस्य नित्यशः ।
शर्वादिभ्रमरैः सेव्यं वन्देऽहं पादपङ्कजम् ।। ३ ।।
देवीं विद्यां परगुरून् गुरुं नत्वा यथाक्रमम् ।
वक्ष्याम्यहं तारतम्यं रमादीनामनुक्रमात् ।। ४ ।।
सर्वेशोऽजस्ततो लक्ष्मीः ततः कः पवनस्तथा ।
ततः सरस्वती ब्राह्मी वायवी भारती तथा ।। ५ ।।
ततः सुपर्णः शेषश्च रुद्रश्चैते समास्तथा ।
नीला भद्रा मित्रविन्दा कालन्दी लक्षणा तथा ।। ६ ।।
एता जाम्बवती विष्णुजाया उक्ता समा इति ।
तत्र जाम्बवती किञ्चिद् उत्तमोक्ता स्वभावतः ।। ७ ।।
ततः सुपर्णपत्नी च वारुणी पार्वती समाः ।
ततः शक्रस्तथा कामः तत्रेन्द्रः किञ्चिदुत्तमः ।। ८ ।।
तथाहङ्कारिकः प्राणः ततः स्वायम्भुवो मनुः ।
दक्षानिरुद्ध[1](गु)रवो रतिशच्यौ समा मताः ।। ९ ।।

---

1. x x x

रतेस्तु किञ्चिदाधिक्यं अनिरुद्धात्प्रकीर्तितम् ।
अयं विशेषो द्रष्टव्यो बृहदारण्यभाष्यतः ।। १० ।।
प्रवहोऽथ ततः सूर्यो यमचन्द्रौ च मानवी ।
सोमात्तु शतरूपायाः किञ्चिदाधिक्यमिष्यते ।। ११ ।।
विज्ञेयोऽयं विशेषश्च बृहदारण्यभाष्यतः ।
अनन्तरं जलेशोऽथो नारदः (पद्मजाङ्कजः)[1] ।। १२ ।।
अनन्तरं प्रसूत्यग्नी भृगुरेते त्रयः समाः ।
ततो मनुः श्राद्धदेवो वैवस्वत इतीरितः ।। १३ ।।
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वशिष्ठश्चेत्यजसुताः विश्वामित्रः समाः स्मृताः ।। १४ ।।
निर्ऋतिर्मित्रतारे च प्रावही च समास्ततो ।
विष्वक्सेनो गणेशश्च कुबेरश्चाश्विनौ तथा ।। १५ ।।
उरुक्रमश्च गिरिशः शक्राहङ्कारिकौ गुरुः ।
प्रवहः सूर्यवारीशवह्निमित्रास्तथाश्विनौ ।। १६ ।।
ऋभुत्रयं ह्येकमेव विश्वे देवा दश स्मृताः ।
x x x x सप्त रुद्राश्च दशादित्याः षडेव तु ।। १७ ।।
चत्वारिंशत्तथा सप्त मरुतः पितरस्त्रयः ।
द्यावाभूमी तु पर्जन्यः शतस्था देवता मताः ।। १८ ।।
यद्यप्युक्तं भगवता ब्रह्मणि द्वे शताधिके ।
इत्यत्र शतसङ्ख्याया अधिकत्वं तथाऽपि तु ।। १९ ।।

1. नाभजः

मूलरूपेण भगवान् शतसङ्ख्याबहिर्मतः ।
उरुक्रमेण रूपेण ह्यन्तर्भाव्यस्तु सर्वथा ।। २० ।।
अन्यथा शतसङ्ख्याया अपूर्तेरेवमेव हि ।
कर्तव्यं सर्वथेत्याहुस्तद्व्याख्यानविशारदाः ।। २१ ।।
अत्रैकादशदेवास्तु वराः पूर्वे प्रकीर्तिताः ।
एको नीचो वक्ष्यमाणः पर्जन्यश्चाश्विनौ समौ ।। २२ ।।
उक्तौ द्वौ शिष्टकाः सर्वाः शतस्था देवताः समाः ।
विश्वेदेवादिनामानि प्रोच्यन्तेऽधिकवर्जनम् ।। २३ ।।
क्रियतेऽज्ञप्रतीत्यर्थं नाऽशङ्क्या पुनरुक्तता ।
सत्यो वसुः क्रतुर्दक्षः कामः कालो धनुर्धरः ।। २४ ।।
पुरूरवाथार्द्रवाश्च विश्वेदेवा दश स्मृताः ।
दशस्वेतेषु देवेषु धुरिलोचननामकः ।। २५ ।।
द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषा[1] वस्तुर्विभावसुः ।
अनलानां कुलेन्द्रं तु विना सर्वे समा मताः ।। २६ ।।
रैवतोऽजो भवो भीमो वामो उग्र वृषाकपिः ।
अजैकपादहिर्बुध्निर्बहुरूपो महानिति ।। २७ ।।
एतेषूमापतिं रुद्रं विना सर्वे समा मताः ।
विवस्वानर्यमा पूषा त्वष्टा च सविता भगः ।। २८ ।।
एता पर्जन्यवरुणौ मित्रः शक्र उरुक्रमः ।
एतेषूरुक्रमं शक्रं सूर्यं च वरुणं तथा ।। २९ ।।

---

1. दोषो

अपि मित्रं च पर्जन्यं विना सर्वे समा मताः ।
प्राणोऽपानस्तथा व्यान उदानश्च समानकः ।। ३० ।।
नागश्च कृकलः कूर्मो देवदत्तो धनञ्जयः ।
प्रवहो विवहः शंयुः संवहश्च परावहः ।। ३१ ।।
उद्वहश्चाऽवहः शङ्कुः [1]x x x मरुतोऽमी प्रकीर्तिताः ।
एते सर्वे समाः प्रोक्ताः प्राणं च प्रवहं विना ।। ३२ ।।
तत्रापि पञ्चप्राणाख्या पुनरन्ये च केचन ।
प्रवरा इति विज्ञेया किञ्चिन्मानानुसारतः ।। ३३ ।।
अयं विशेषो विज्ञेयो x x x x x x मानतः ।
विष्वक्सेनो गणेशश्च कथितौ किञ्चिदुत्तमौ ।। ३४ ।।
विज्ञेयोऽयं विशेषश्च श्रीमत्षट्प्रश्नभाष्यतः ।
एते तु तात्विका देवा महाधीकारिणः स्मृताः ।। ३५ ।।
आनन्दह्रासरहिताः विकर्मकरणेऽपि तु ।
अनादिज्ञानभक्त्याद्यैः सृष्ट्यादौ देवतां गताः ।। ३६ ।।
[2]सर्वे x x x x x x x x x x x x सदा श्रुताः ।
क्लृप्तप्राप्तविभेदेन द्विधाऽऽनन्दः प्रकीर्तितः ।। ३७ ।।
क्लृप्तहानिस्तु नास्त्यत्र प्राप्तहानिस्तु विद्यते ।
अयं विशेषो विज्ञेयो ह्यनुव्याख्यानमानतः ।। ३८ ।।
अशुभाभावजोन्नाहो महतामधिकारिणाम् ।
कृते शुभे न भविता तारतम्य x x x x ।। ३९ ।।

---

1. अत्र लुप्तानि त्रीणि श्लोकानि
2. x x x

अयं विशेषो द्रष्टव्यो पञ्चस्कन्धाख्यमानतः ।
ब्रह्मणो मानसाः पुत्राः सनकाद्या महौजसः ।। ४० ।।
सनत्कुमारं कामांशं विना सर्वे समा मताः ।
जयन्तश्च तथा शम्भुर्द्वावेतौ पादमानिनौ ।। ४१ ।।
तत्राऽद्यो यज्ञ x x x x सद्वितीयो ।
आद्यो दक्षिणपादस्य वाममानी द्वितीयकः ।। ४२ ।।
शचीपुरन्दरसुतौ ग्राह्यावत्र मनीषिभिः ।
जयन्तोऽत्र विशेषेण पादमानी प्रकीर्तितः ।। ४३ ।।
यज्ञनाम्नो भगवतो विशेषावेशवान् सदा ।
त्रयस्त्रिंशत्सु देवेषु ह्युक्तो वाजसनेयके ।। ४४ ।।
विनाऽवेशविशेषे x x x x ह्यत्र स्वभावतः ।
गीतातात्पर्यमानेन श्रीभागवतभावतः ।। ४५ ।।
बृहदारण्यभाष्याच्च विशेषो ज्ञेय एव हि ।
हिरण्यकशिपोः पुत्रः प्रह्लादो भगवत्परः ।। ४६ ।।
पूर्वं देवो विरिञ्चस्य शापाद्दैत्यत्वमाप्तवान् ।
अवरस्तात्विकेभ्यश्च नारदादिभ्य एव च ।। ४७ ।।
बलिना तु स्वपौत्रेण स्वस्वाद् उत्तम ईरितः ।
अयं विशेषो विज्ञेयः छन्दोगादिप्रमाणतः ।। ४८ ।।
कालाख्याः ब्रह्मणः पुत्राः समस्ता विष्णुपार्षदाः ।
जयाद्यास्तत्वदेवेभ्यो ह्यवरा अत्र कीर्तिताः ।। ४९ ।।
द्वारपालास्तु कथ्यन्ते वज्रनाभहरीश्वरौ ।
गङ्गातनय इत्युक्तस्ततः शङ्खनिधीश्वरः ।। ५० ।।

जयश्च विजयो धाता विधाता भद्र एव च ।
सुभद्रश्चामृतेशश्च विरूपाक्षोऽन्तिमो मतः ।। ५१ ।।
जयश्च विजयश्चैव प्रवरौ किञ्चिदीरितौ ।
पुनरन्येऽपि वर्तन्ते कालाद्या द्वारपालकाः ।। ५२ ।।
नैवेद्यकर्ता विष्णोऽस्तु चन्द्रका इतीरितः ।
पुष्पकर्ता भगवतो विष्णोर्मार्जनकृत्तथा ।। ५३ ।।
जरूकः सारथिर्विष्णोस्तथाऽन्यो विष्णुपार्षदः ।
विष्वक्सेनं वायुपुत्रं विना सर्वे समा मताः ।। ५४ ।।
देवता नवकोट्यस्तु ग्राह्या अत्र मनीषिभिः ।
सोमपानार्हदेवानां त्यक्त्वा शतकमञ्जसा ।। ५५ ।।
[1]x x x x बल्यादिसप्तेन्द्रा मन्वेकादशकं तथा ।
इन्द्रादीनां तु नामानि प्रोच्यन्तेऽधिकवर्जनम् ।। ५६ ।।
क्रियतेऽज्ञप्रतीत्यर्थं नाऽशङ्क्या पुनरुक्तता ।
यज्ञस्तथा रोचनश्च सत्यजिद्विशिखो विभुः ।। ५७ ।।
मन्द्रद्युम्नाह्वयश्चैव पुरन्दर इतीरितः ।
बलिरद्भुतशम्भू च विधृतिस्त्वृतनामकः ।। ५८ ।।
x x x x x x पूर्वान् सप्त विना समाः ।
स्वायम्भुवो मनुश्चैव स्वारोचिष उतोत्तमः ।। ५९ ।।
तापसो रैवतश्चैव चाक्षुषो भास्करिस्तथा ।
सावर्णिर्ब्रह्मसावर्णिः रुद्रसावर्णिरेव च ।। ६० ।।

1. तथा

देवेन्द्रदक्षसावर्णिर्धर्मसावर्णिनामकाः ।
एषु स्वायम्भुवमृते * x x x x x x समाः ।। ६१ ।।
एतेषु कर्मजाः प्रोक्ताः कथ्यन्ते तत्समास्तथा ।
कार्तवीर्यः पृथुश्चैव दौष्यन्तिर्भरतस्तथा ।। ६२ ।।
ककुस्थश्च गयश्चैव शशबिन्दुः प्रियव्रतः ।
प्राज्ञैरत्र शतं ग्राह्यं मान्धातेत्यादयो नृपाः ।। ६३ ।।
विशेषावेशसंयुक्ताः महाकार्यकृतो हरेः ।
प्रसादपात्रभूताश्च ग्राह्या अत्र विशेषतः ।। ६४ ।।
वृषभाद्धरिणाद् विप्राच्चोत्पन्नो भरतस्तथा ।
अग्निपुत्रः पावको वा उचथ्यचवनावृषी ।। ६५ ।।
चिराश्च पितरः सप्त तथाऽष्टौ देवगायकाः ।
महायोगाऽपि विष्णौ ते मनश्चाञ्चल्यवर्जिताः ।। ६६ ।।
तत्र देववशा एते वरा अल्पाधिकारिषु ।
समा एते विशेषोऽस्ति विप्रराजन्यलक्षणः ।। ६७ ।।
x x x ततो गङ्गा श्यामला रोहिणी तथा ।
उषा सञ्ज्ञा च पर्जन्यः समा ह्येते ह्यनन्तरम् ।। ६८ ।।
केचित्ततोऽग्निजायाऽथ बुधस्तत उषास्ततः ।
आचार्यकृतग्रन्थेषु यद्यप्येवं तथाऽपि तु ।। ६९ ।।
सन्न्यायरत्नावलितः पद्मनाभाख्ययोगिनः ।
उषा स्वाहा च पर्जन्यो मित्रोऽग्निर्वरुणो विधुः ।। ७० ।।

---

* सर्वे च मनवः इति स्यात् ।

अनुव्याख्योदाहृतस्य (ज्ञान)मानस्याऽ(कृति)कृतकीर्तनम् ।
पर्जन्यस्वाहयोर्मध्ये वर्तन्ते केचिदेव तु ।। ७१ ।।
इत्युक्त्वोदाहृतं मानं तद्वलादभिधीयते ।
शनिस्ततः पुष्करश्च मध्य अन्याधिकारिषु ।। ७२ ।।
केचिदित्यत्र x x x स्पष्टं न प्रतिभासते ।
अनाख्याता देवतास्तु जाता देवकुले च याः ।। ७३ ।।
आजानदेवतास्तास्स्युरित्थं वेदविदो विदुः ।
शतं तथा सहस्राणि वह्निपुत्रास्तु x x x ।। ७४ ।।
आजानजा इति ज्ञेयाः पूर्वोक्तं पञ्चकं विना ।
एतत्समास्तु कथ्यन्ते ऋषीणां शतमेव च ।। ७५ ।।
पितॄणां शतमेवात्र असुरास्त्रिंशदेव च ।
गन्धर्वाणामप्सरसां पृथक्त्वं समुदीरितम् ।। ७६ ।।
सप्ततिर्यज्ञरक्षांसि त्रिंशच्चारणजातयः ।
शतं सिद्धा [1]x x x सप्ततिः सर्वजातिषु ।। ७७ ।।
सर्वेष्वेषु विशेषश्च विप्रराजन्यलक्षणः ।
पुष्करादधमा ह्येते ह्यंशावतरणाः स्मृताः ।। ७८ ।।
एतेऽधिकारिणो व्याप्तदर्शनेऽन्ये न तु क्वचित् ।
अल्पाधिकारिष्ववरा अप्रतीकसमाश्रयाः ।। ७९ ।।
एभ्योऽन्ये सर्वदेवाश्च ह्यनधीकारिणः स्मृताः ।
x x x पदेनोक्ता प्रतीकालम्बना मताः ।। ८० ।।

---

1. स्तथान्याश्च इति स्यात् ।

ततस्तु पितरो ज्ञेयाः सप्तोत्तरशतं विना ।
ततस्तु देवगन्धर्वा अष्टोत्तरशतं विना ।। ८१ ।।
ऋषयोऽत्र तथा ग्राह्याः शतोनशतकोटयः ।
सहस्रमप्सरस्त्रीणां शतोनं परिकीर्तितम् ।। ८२ ।।
विद्याधरसहस्रं [1]x x x x x x x x x x x x ।
ततो मानुषगन्धर्वा एते देवपदोदिताः ।। ८३ ।।
देवर्षिपुत्रपौत्राश्च प्रपौत्राश्च सभार्यकाः ।
?असवर्गेण सहिताः देवर्षित्वेन सम्मताः ।। ८४ ।।
असुरा राक्षसा यज्ञभूतप्रेतपिशाचकाः ।
विद्याधराश्च सिद्धाश्च चारणाः किन्नरादयः ।। ८५ ।।
वासुक्यग्रेसराः सर्वा जरितर्यादयः ।
सारमेयास्तदन्ये च यमदूताश्च सर्वशः ।। ८६ ।।
राजाह्वयाः पर्वताश्च x x x वृक्षाश्च वैदिकाः ।
विश्वकर्मादयश्चैव मयाद्या भौमभार्गवौ ।। ८७ ।।
[2]देव x xयो मयः सर्वे ग्राह्या अत्र मनीषिभिः ।
आजानजाश्च पितरो देवमानुषगायकाः ।। ८८ ।।
एवं चतुर्षु देवेषु तेऽन्तर्भाव्या यथा x x x ।
विशेषतः प्रमाणस्य दर्शनं न भवेद्यदा ।। ८९ ।।
तावत्सम्भावना ग्राह्या विशेषस्य च दर्शने ।
विनिश्चयो हि कर्तव्यो जानीयामल्पचेतनः ।। ९० ।।

---

1. तु पितृभ्यश्च शतावरम् इति स्यात् ।
2. x x x

अल्पज्ञो ह्यल्पशक्तिश्च स्वबुध्यैव तु कथ्यते ।
विशेषतो निर्णयितुं जानन्त्येवामराः सदा ।। ९१ ।।
स्वतन्त्रचिद्धनो व्यासः सर्वशक्तश्च केशवः ।
पूर्णबोधाश्च तच्छिष्या व्यासशिष्यास्तथाऽपरे ।। ९२ ।।
ततश्च क्षितिपाः पश्चाद् मानुषा वर्णभेदतः ।
नीचोच्चा इति विज्ञेयाः ब्राह्मणस्तेषु चोत्तमः ।। ९३ ।।
ततो वै क्षत्रियः पश्चात् वैश्योऽवान्तरभेदवान् ।
ततः शूद्राश्च ते वर्णबाह्यास्ते बहु[2](धा) मताः ।। ९४।।
नीचोच्चा इति विज्ञेयाः तत्रोच्चः परहंसकः ।
पश्चाद् हंसादिसन्न्यासी वनी पश्चात्ततो वटुः ।। ९५ ।।
ततो गृहस्थ इत्येवमशेषमतिमङ्गलम् ।
एते सर्वे प्रसीदन्तु मे[1](शा)द्याः सर्वदेवताः ।। ९६ ।।
स्वगुरूक्तं तारतम्यं रामाख्यविदुषा कृतम् ।
मध्वशास्त्रानुसारेण मेशादीनामनुग्रहात् ।। ९७ ।।
तारतम्याख्यरत्नस्य मालेयं सर्वदा हृदि ।
ध्रियतां कमलेशेन विष्णुनाऽतिदयालुना ।। ९८ ।।
समस्तहेतवे सर्ववन्द्यायापि नमो नमः ।
गुणपूर्णाय मापाय विशेषाय प्रियाय मे ।। ९९ ।।

**।। इति रामाचार्यकृत तारतम्यस्तवनं सम्पूर्णम् ।।**

---

1. x x x

# 22. बाणन्दूरु अप्पणाचार्यसुतरामाचार्यकृतम्

## तारतम्याष्टकम्

श्रीमान् विष्णुः सुपूर्णोऽखिलगुणगणैः श्रीस्ततोऽनन्तहीना
कोट्यूनौ ब्रह्मवायू जलनिधिदुहितुस्तन्महिष्यौ शतोने ।
ताभ्यां शेषेशवीशाः शतगुणमवराः षण्महिष्यस्तु शौरेः
पञ्चोनाः पान्तु तेभ्यः फणिपविपमृडस्त्रीभ्य उच्चा युगांशात्
।। १ ।।

रुद्रादिभ्यो दशोना हिमगिरितनया वारुणी वीन्द्रपत्नी
ताभ्यः कामो बलारिर्दशगुणमवरौ तैजसस्तद्दशोनः ।
तस्मात् कामिर्दशोनाः रतिमनुगुरवो दक्षशच्यौ च वायुः
षड्भ्यः पञ्चावरस्तद्द्विगुणमथ इनस्सोममृत्यू मनुस्त्री
।। २ ।।

पादात्पादार्धतोऽब्जाज्जलपतिरवरो नारदोऽधस्ततोऽग्निः
पादाधोप्पात्प्रसूतिर्भृगुरजनिसुताः सप्त वैवस्वताख्यः ।
विश्वामित्रोऽथ उक्ता नवदहनपतेर्मित्रतारे युगांशा
त्रायन्तां पावकोना वरनिर्ऋतिपदः प्रावही च प्रसन्नाः
।। ३ ।।

विष्वक्सेनो धनेशो गणपतिरितरे सोमपानार्हदेवा
उक्तेभ्यो मित्रनीचास्तदवर उदिताः कोटिगाः के च देवाः ।
आजानेभ्यः शतोच्चाः कृतिविबुधगणा अष्ट गन्धर्वमुख्याः
ऊर्वश्याद्याश्च काश्चिन्मुनिमनुपितरश्चाप्रतीकावलम्बाः
।। ४ ।।

गङ्गापर्जन्यसंज्ञे शशियमदयिते कामिजायायुगांशा -
न्मित्राधोऽन्ये ततोऽधो द्युसरित उदिताधोऽग्निजाया युगांशात्।
स्वाहाधश्चन्द्रसूनुर्दशगुणमवरा स्वाहयोषास्ततः क्ष्मा
नीचान्ये सर्वदेवा दशगुणमवरश्चोषसः कर्मदेवः ।। ५ ।।

कृष्णस्पृग्गोपिकाभ्यो द्विगुणमथशताष्टसाहस्रपत्न्यः
ताभ्यः कृष्णस्य माता दशशतसमिता शूरसूनुस्तदुच्चः ।
देवेभ्यः कर्मदेवाः शतगुणमवराः कर्मजेभ्यश्शताध -
स्त्वाजानेयाः शतोना ऋषय उपसुरा अप्सरस्त्रीगणाश्च
।। ६ ।।

आजानेभ्यः शताधश्चिरपितृनिकरा देवगन्धर्वसङ्घा -
स्तेभ्यस्तावद् द्विनीचाः शतगुणमवराः मर्त्यगन्धर्वसङ्घाः ।
तेभ्यो भूचक्रपालाः शतगुणमवरास्तेभ्य उक्ता मनुष्या
वर्णाचाराश्रमाढ्याः शतगुणमवरा मन्दमध्योच्चभेदाः
।। ७ ।।

विष्णुः श्रीब्रह्मवाणीगिरिशगिरिसुतेन्द्रासुजीवानिळेन
अप्पग्नीमित्रगङ्गाहुतवहवनितादस्रजाया धरात्मा ।
कृद्देवाऽजानदेवाश्चिरपितृमुखराखामिनोमेनरीताः
प्रीता दद्युर्विरक्तिं रतिमतिविशदां दृष्टिमिष्टां च भक्तिम्
।। ८ ।।

अप्पण्णाचार्यपुत्रेण रामेण रचितं शुभम् ।
तारतम्याष्टकं भूयात् प्रीत्यै माधवमध्वयोः ।। ९ ।।

**।। इति बाणन्दूरुरामाचार्यकृतं तारतम्याष्टकं सम्पूर्णम् ।।**

# 23. देव-पूर्वदेवतारतम्यप्रकाशः
# गूढकर्तृकः

**हयाननं मध्वगुरुं जयराजादिसद्गुरून् ।**
**प्रणम्याऽदौ तारतम्यं करिष्येऽहं यथामति ।।**

अत एव **'तारतम्यापरिज्ञानादनुत्थानं तमो व्रजेत्'** इत्युक्तत्वात् तदपरिज्ञानस्यानर्थहेतुत्वात् तज्ज्ञानमावश्यकम् । अत एव श्रीमन्महाभारततात्पर्यनिर्णये -

**तारतम्यं ततो ज्ञेयं सर्वोच्चत्वं हरेस्तथा ।**
**एतद् विना न कस्यापि विमुक्तिः स्यात् कथञ्चन ।।**

इति ।

1. आदौ सकलमुक्तामुक्तनियामकः सकलगुणपरिपूर्णः स्वतन्त्रः श्रीनारायणः सर्वोत्तमः 'ततोऽनन्तगुणो हरिः' इति वचनात् । 'ततः श्रेष्ठतमो विष्णुः श्रेष्ठः श्रेष्ठतमः स च' इति छान्दोग्यभाष्यं मानम् ।

2. ततोऽनन्तानन्तगुणैर्न्यूना महालक्ष्मीः ।

**'ततोऽनन्तांशहीना च वलज्ञप्तिसुखादिभिः'** ।

इति बृहद्भाष्यं मानम् ।

3. ततो महत्तत्वाभिमानिनौ ब्रह्मवायू अनन्तांशहीनौ । **अन्यत्र-कोटिशतादिपदमनन्तपरम्** ।

**उमा यावदनन्तांशान् पूर्वदृष्टेभ्य एव तु ।**
**विशेषान् वासुदेवस्य पश्चादुक्ता विचक्षते ।।**

इत्यनुव्याख्याननिरवकाशप्रमाणसद्भावात् । न च गुणगतविशेषज्ञान एवाऽनन्त्यतारतम्यं न तु गुणज्ञान इति वाच्यम् । मूले 'वासुदेवस्य विशेषान्' इत्युक्तेः । व्याख्यातं च सन्न्यायरत्नावल्यां -

**लक्ष्मीर्भगवतो वासुदेवस्य यावतो गुणान् पश्यति ।**
**तावतामनन्तधा विभक्तानाम् एकमेव भागं ब्रह्मा पश्यति ।।**

**तस्यापि भागस्यानन्तधा विभक्तस्यैकमेव भागं सरस्वती पश्यति। एवं रुद्रोमयोः भगवद्गुणदर्शने तारतम्यमवगन्तव्यम् ।।इति।।**

4. ततोऽनन्तांशन्यूने ब्रह्माणीभारत्यौ ।

5. ततो गरुशेषरुद्रा अनन्तांशन्यूनाः ।

6. ततः कृष्णषण्महिष्यः जाम्बवती कालिन्दी मित्रविन्दा नीला लक्षणा भद्रा इत्यनन्तांशन्यूनाः । तासां मध्ये प्रधाना जाम्बवती । अन्याः किञ्चिदधमाः । अत एव श्रीनिर्णये -

**तयैताः सर्वदाऽनुप्रविष्टाः तासां मध्ये जाम्ववती प्रधाना ।**
**रामेण तुल्या जाम्ववती प्रियत्वे कृष्णस्यान्याः किञ्चिदूनाश्च तस्याः ।।**
**यदाऽऽवेशो वहुलः स्याद् रमायास्तदा तासु प्रीयते केशवोऽलम् ।**
**यदाऽऽवेशो ह्रासमुपैति तत्र प्रद्युम्नतो विंशगुणाधिकाः स्युः ।।**

इति । अत्र तासाम् अवस्थात्रयं प्रतीयते सामान्यावेशः विशेषावेशः आवेशाभावश्च इति । अत्र सर्वदा इत्यस्य स्वरूपेणान्वये यदावेशो ह्रासमुपैति इति प्रोक्तावेशाभावोऽनुपपन्नः स्यात् । तस्मात्सर्वदा इत्यवताररूपेणान्वेतव्यम् । ह्रासस्तु मूलरूपे इति ज्ञेयम् । ततश्च समभिव्याहारबलात्सामान्यावस्थायाम् एव रामतुल्यत्वं ज्ञेयम् ।

7. ताभ्यः सौपर्णीवारुणीपार्वत्योऽनन्ताधमाः । 'उमा यावद्' इति मानम् । ज्ञानानुसारेण इतरगुणानामप्यावश्यकत्वात् । **'यावद् ज्ञानं तावती भक्तिः यावती भक्तिः तावाननुग्रहः यावाननुग्रहः तावान्मौक्तिक आनन्दः'** इति श्रुतेः । तस्मादुमापर्यन्तमनन्त-गुणतासिद्धिः । सजातीयविजातीयविवक्षया अनन्तगुणतारतम्यम् इति केचित् । अनन्तगुणवत्वं च महाकालसंवत्सरघटिकाक्षण-लवाद्यानन्त्यवत् सम्भावनाभिप्रायेण ।

8. उमादिभ्यः शक्रकामौ दशाधमौ ज्ञाने शताधमौ । 'शतांशानेव चक्षत' इत्यनुव्याख्यानं मानम् ।

इन्द्रात् काम ईषन्न्यूनः । प्राय 'इन्द्रवत् कामः' इत्युक्तत्वात् प्रायोग्रहणेनेषन्न्यून इति सुधायाम् उक्तम् ।

9. ताभ्यामहङ्कारिकप्राणो दशाधमः 'सर्वे त्वेते दशोत्तराः' इति छान्दोग्यभाष्यं मानम् ।

10. तस्मादनिरुद्धस्वायम्भुवमनुदक्षप्रजेशबृहस्पतिशचीरतयः दशाधमाः । **'सर्वे त्वेते'** इति मानम् । एतेषां परस्परसाम्ये 'मनुर्दक्षः बृहस्पतिः । शचीरतिश्चानिरुद्धसमाः' इत्यनुव्याख्यानं मानम् ।

11. तेभ्यः प्रवहवायुः पञ्चगुणाधमः । 'अनिरुद्धोऽनिलात् पञ्चगुणाधिकः' इति छान्दोग्यभाष्यं मानम् ।

12. प्रवहात् सोमसूर्ययमशतरूपाः द्विगुणाधमाः । शतरूपा स्वायम्भुवपत्नी **'पर्जन्यमित्रशशिनो भूतवायुस्तथैव च'** । **द्विगुणा एव** इति छान्दोग्यभाष्यं मानम् । अपवादाभावे सामान्यस्य प्रमाणत्वात्।

13. सोमादिभ्यो जलाभिमानी वरुणः पादपादार्धन्यूनः 'पादोनो-वरुणादग्निरध्यर्धोनः स सोमतः' इति छान्दोग्योक्तेः ।

14. ततः नारदः किञ्चिदवरः । 'वरुणाग्न्यन्तरा तत्र नारदः' इत्यनुव्याख्यानं मानम् ।

15. नारदात् प्रधानाग्निभृगुप्रसूतयः पादोनाः । प्रसूतिर्दक्षपत्नी-'प्रसूतिर्वह्निवत्' इत्यनुव्याख्यानम् । 'भृगुरग्निसमः' इति तत्रैव । 'पादोनो वरुणादग्निः' इति छान्दोग्यं मानम् । अग्नेरेकर्षिः किञ्चिदवरः । 'अथर्वाङ्गिरसामग्निरेकर्षिश्चापि अथर्वणाम्' इति ऋग्भाष्योक्तेः ।

16. एकर्षेः मरीच्यङ्गिरपुलस्त्यपुलहक्रतुवशिष्ठाः इति सप्त ब्रह्मपुत्राः विश्वामित्रश्चैते किञ्चिन्न्यूनाः । अत एव अनुव्याख्याने 'मित्र तन्मध्ये ब्रह्मपुत्रकाः' इति । तत्र सुधायां **'तन्मध्ये मित्राग्न्योः मध्य'** इति । विश्वामित्रस्य मरीच्यादिसाम्ये 'विश्वामित्रः कसूनुवत्' इत्यनुव्याख्यानम् । 'विश्वामित्रो ब्रह्मपुत्रसमो मुनिरुदाहृतः' इति बृहद्भाष्ये ।

17. तेभ्यो मित्रनामकः सूर्यः । बृहस्पतिपत्नी तारा । कोणाधिपो निर्ऋतिः । भूतवायुपत्नी प्रावही । एते चत्वारः किञ्चिदधमाः । 'अग्नेः द्विगुणाधमाः पर्जन्यमित्रशशिनः' इत्युक्तमेव मानम् ।

18. तेभ्यो वायुपुत्रः पार्षदो विष्वक्सेनः रुद्रपुत्रो गणेशः कुबेरः उक्तशेषाः शतस्थाः सोमपानार्हाः देवाः मित्राद्यपेक्षया किञ्चिन्नीचाः । सोमपास्तु 'नवकोट्यो हि देवानां तेषां मध्ये शतस्य तु । सोमाधिकारो वेदोक्तो ब्रह्मणी द्वे शताधिके' इति द्रष्टव्याः । शतस्थास्तु 'प्रधानवायुः वसवो रुद्रादित्या मरुद्गणाः । बृहस्पतिर्ऋभुर्द्यावापृथिव्यावश्विनौ तथा । विश्वेदेवाश्च पितरः शतस्थाः देवता मताः' इति । एतेषां सङ्ख्या तु प्रधान वायुरेकः **'द्रोणः प्राणो ध्रुवोऽर्कोग्निर्दोषो वस्तुर्विभावसुः'** इत्यष्टवसवः । **'रैवतोऽजो भवो भीमः वाम उग्रो वृषाकपिः । 'अजैकपादहिर्बुध्नो बहुरूपो महान्'** इत्येका(द)शरुद्राः । विवस्वानर्यमा पूषा त्वष्टा च सविता भगः । धाता पर्जन्यो वरुणो मित्रः शक्र उरुक्रमः इति द्वादशादित्याः । प्राणोऽपानस्तथाव्यान उदानश्च समानकः । नागश्च कृकलः कूर्मो देवदत्तो धनञ्जयः । प्रहवो विवहः शम्भुः संवहश्च परावहः । उद्वहश्चावहः शङ्कुः कालः श्वासोऽनलोऽनिलः । प्रतिभः कुमुदः कान्तः शुचिः श्वेतोऽजितो गुरुः । सञ्ज्ञा प्रवर्तकः कालो जितः सौम्यः कपिर्जडः । मण्डूकः संहतः सिद्धो रक्तः कृष्णः पिकः शुकः । यतिर्भूमो हनुः पिङ्गोऽहंप्राणः कम्पनस्तथा ।। इत्येकोनपञ्चाशन्मरुतः । बृहस्पतिरेकः । ऋभुगणस्त्वेकः । द्यावापृथिव्यौ द्वे । अश्विनौ द्वौ पुरूरवः आर्द्रवः कामः कालश्च धूरिविरोचनौ । दक्षः क्रतुर्वसुः सत्य इति दश विश्वेदेवाः ।

कव्यवाहो यमः सोम इति त्रयः पितर इति । एतेषूक्ताः शेषाः । शेषाश्च 'प्रधानवायुः । वसुषु प्रधानाग्निः रुद्रेषु भवनामकः आदित्येषु भगवदवतार उरुक्रमः । सोमसमो विवस्वान्नामकः मित्रनामकः वरुणः शक्रः गङ्गाकक्षस्थः पर्जन्यः मरुत्सु अहंकारप्राणप्रवहौ बृहस्पतिः द्युलोकाभिमानिनी भारती पितृषु यमः सोमः' । इति पञ्चादश उक्ताः शेषाः । पञ्चाशीत्यश्विसमाः । एतेषु 'पञ्चाशतो दशांशाद्वा स्वस्वजायां परस्परम्' इत्युक्तत्वादवान्तरविशेषोऽवगन्तव्यः । 'ऋभवो नाम तपसा सोमं प्राप्ताः सहस्रशः' इति भागवते ऋभूणां सहस्र-त्वोक्तावपि गणविवक्षया एक इत्युक्तम् । पुरूरवार्द्रवौ श्राद्धे । कालकामौ सपिण्डीकरणादौ । धूर्लोचनौ नैमित्तिके हिरण्यश्राद्धादौ । दक्षक्रतू यज्ञादौ । सत्यवसू विवाहादाविति तेषाम् उपयोगोऽवगन्तव्यः । पञ्चाशीतेः परस्परसाम्ये 'मित्रपर्जन्य-मध्यस्थावश्विनौ विघ्नवित्तपौ' इति । तदन्याः शतदेवताः पर्जन्य-मित्रान्तराले' इत्यनुव्याख्यानं मानम् । 'विष्वक्सेनो वायुजः खेन तुल्यः' इति भारततात्पर्यनिर्णयं मानम् । एतेषु 'मरुतश्च समाः सर्वे सप्त तेषु प्रधानकाः' इति भारततात्पर्यनिर्णये । 'पवनगण-वरांशौ श्वेतसम्पातिनौ च' 'प्राणादयः पञ्चमरुत्प्रवीराः । सकत्थनो वित्तपतिश्च जघ्नुः' 'प्रवरमथ मरुत्सु' इत्यादिकमुपपन्नम् ।

19. तेभ्यो वैवस्वतमनुः कामांशसनत्कुमारं विना सनक-सनन्दनसनत्सुजाताद्याः भूतवाय्वंवान्तराभिमानी मरीचिः प्रधानाग्निपुत्रः पावकः । एते किञ्चिन्नीचाः । वैवस्वतमनोरत्र प्रवेशे नयचन्द्रिकावाक्यं मानम् 'वैवस्वतमनुश्चाश्विपश्चाद् ज्ञेयः' इत्युक्तत्वात् । सुधायां तु आवेशविशेषाभिप्रायेण सप्तर्षिसाम्य-

मुक्तम् । **बृहद्भाष्ये** 'वैवस्वतो मुनिर्नित्यं विष्ण्वावेशी ततोऽधिकः' इत्याधिक्यस्य आवेशनिमित्तत्वोक्तेः । अन्यथा आवेशवैय्यर्थ्यात् सन्न्यायरत्नावलीविरोधाच्च । तत्र 'तदन्ये तु ततोऽवराः' इत्यनु-व्याख्यानव्याख्यानदशायाम् **अन्ये** स्वायम्भुवतापसव्यतिरिक्ताः वैवस्वतमनोरवराः अश्विभ्याम् अनन्तराः' इत्युक्तेः । यदि वैवस्वत-मनुः कसूनुसमः स्यात् तदा अश्विभ्यामनन्तरा इत्येतावता पूर्तेः वैवस्वतमनोरवरा इत्यस्य व्यर्थत्वात् । मूले ततोऽवरा इत्यस्य व्यर्थत्वात् सुधायाम् अपि अयमेवाभिप्रायः । अन्यथा तत्रापि इतरमनूनां वैवस्वताधम्यकथनस्य व्यर्थत्वात् ।

सनकादीनामत्र प्रवेशे बृहद्भाष्यं मानम् । 'सनकाद्याः नारदश्च भृग्वादयोऽपि च देवावराः' इति । अत्र देवशब्देन शतस्थपर्यन्तदेवा विवक्षिताः । किं च श्रीतात्पर्यनिर्णये 'नासत्यदस्रौ क्रमशः प्रसूताः' इत्युक्त्वा 'ततः सनाद्याश्च मरीचिमुख्याः' इति सनकादीनामुत्पत्ति-कथनाद् अपवादाभावे सृष्टिक्रमस्यैव तारतम्यसूचकत्वात् ।

मरीचिशब्देन प्रधानवायुपुत्रो विवक्षितः । 'प्रधानवायुजो भूतवायुर्नाम्ना मरीचिकः' इति गीतातात्पर्ये । 'मरीचिः मरुतामस्मि' इति गीतायां च । 'आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत् । तस्मादग्निः पावकाख्यः प्रथमोऽग्नेः सुतस्तथा' इति षट्प्रश्नभाष्ये।

20. तेभ्यो मेघाभिमानी पर्जन्यः । वरुणभार्या गङ्गा । यमभार्या शामला । चन्द्रभार्या रोहिणी । विवस्वन्नामकसूर्यपत्नी सञ्ज्ञा । ब्रह्माण्डाभिमानिनी अनिरुद्धभार्या विराट् किञ्चिन्नीचा । मित्राद् द्विगुणाधमा । 'ततः पर्जन्य उद्भूतः' इति षट्प्रश्ने । 'पर्जन्य-

मित्रशिखिनः' इति छान्दोग्यम् । एतेषां परस्परसाम्ये 'विराट् पर्जन्यवद् वारुणी च तथा सञ्ज्ञा च रोहिणी धार्मी च' इत्यनु-व्याख्यानम् ।

21. पर्जन्यादिभ्यः कूर्ममुख्या अनधिगतपदाः अप्रसिद्धाधिकाराः किञ्चिन्नीचाः । अत एवानुव्याख्याने 'तदन्याः शतदेवताः 'पर्जन्यमित्रान्तराले तदन्ये तु ततोऽवराः' इत्युक्तम् ।

22. अप्रसिद्धदेवेभ्योऽग्निभार्या स्वाहा नीचा । पर्जन्याद् द्विगुणाधमा । 'पर्जन्यमित्रे'ति छान्दोग्यम् मानम् ।

23. स्वाहायाः जलावान्तराभिमानी बुधो नीचः । द्वित्रिगुणतः सम्भावितः ।

24. बुधान्नामाभिमानिनी अश्विभार्योषा नीचा । 'स्वाहायाः दशाधमा' । 'सर्वे त्वेते दशोत्तराः' इति छान्दोग्यभाष्यम् । 'उदात्मको बुधस्तस्मादुषा नामात्मिका' इति षट्प्रश्नभाष्ये ।

25. उषसः भूम्यभिमानी शनैश्चरो द्विगुणतो नीचः । 'ततः शनिः पृथिव्यात्मा' इति मानम् ।

26. ततः पुष्करो नीचः द्विगुणतः नाम्नो दशादधमः । 'कर्मणो नाम दशोत्तरम्' इति **व्यासतीर्थोक्तेः** । चरमदेवः । एते सर्वे तत्त्वाभिमानिनः ।

27. पुष्करात् प्रह्लादः किञ्चिदधमः । अत एव सप्तमतात्पर्ये 'ऋते तु तात्त्विकान् देवान् नारदादींस्तथैव च । प्रह्लादादुत्तमः कोऽनु विष्णुभक्तौ जगत्त्रये' इति ।

28. प्रह्लादात् कश्यपः किञ्चिन्नीचः ।

29. कश्यपाद्देवकी किञ्चिन्नीचा ।

30. देवक्याः किञ्चिन्नीचा यशोदा । पुष्कराद् दशगुणनीचा ।

31. यशोदायाः च्यवनउचथ्यबलिजडभरतकार्तवीर्यपृथुशशिबिन्दुप्रियव्रतगयककुस्थलक्ष्मणमान्धात्रादिव्याप्तदर्शिनः शतराजानः कर्मदेवाः चतुर्दशमनुषु उक्तव्यतिरिक्ता रैवतक चाक्षुषस्वारोचिषोत्तमसावर्णिब्रह्मसावर्णिरुद्रसावर्णिइन्द्रसावर्णिदक्षसावर्णिदेवसावर्णिधर्मसावर्णि इत्येकादशमनवः चतुर्दशेन्द्रेषु भगवदवतारं यज्ञं वाय्ववताररोचनं यमावतारं सत्यजितम् अश्विनोरवतारौ त्रिशिखिविभू इन्द्रावतारौ पुरन्दरंदर?मन्द्रद्युम्नाविति सप्तेन्द्रान् विना बलिशम्भुदिवस्पतिऋतधाम विधृतशुचिरद्भुत इति सप्तेन्द्राः । तुम्बुरुचित्ररथ हाहाहूहू इत्याद्यष्टगन्धर्वाः । सप्त पितरः । उर्वशीरम्भामेनकाघृताचीतिलोत्तमाद्याः शतमप्सरसः । शतमृषयः जयविजयमुखाः द्वारपालकाः । चित्रगुप्तः शुक्रमङ्गलविश्वकर्म मयादयो दशगुणेन नीचाः । पुष्करात् शताधमाः । अत एवोक्तं 'कर्मदेवगणा अष्टगन्धर्वाः तत्परे शतम् । आजानदेवाः' इति बृहद्भाष्ये । 'तुम्बुरुप्रमुखा ये च तथोर्वश्यादिका अपि । विश्वामित्र ब्रह्मपुत्रान् ऋते चाप्यृषयोऽखिलाः' इति तत्रैव । 'अप्रतीका देवतास्तु ऋषीणां शतमेव च । राज्ञां तु शतमुद्दिष्टं गन्धर्वादिशतं तथा' इति भाष्यम्। 'पितॄणां सप्तकं यत्तत्कर्मदेवसमं मतम्' इति बृहद्भाष्यं मानम् । 'च्यवनोचथ्यवैन्याश्च शशबिन्दुश्च हैहयः' इत्यनुव्याख्यानं 'देवावरा यथा तद्वत् मनवोऽपि प्रकीर्तिताः' इति । 'कार्तवीर्यः पृथुश्चैव

**दौष्यन्तिर्भरतस्तथा । शशिविन्दुश्च मान्धाता ककुस्थाद्यास्तथापरे। सर्वे ते विष्णुनाऽऽविष्टा विष्णोर्भिन्नाः सदैव च । शतावराश्च देवेभ्यः कर्मदेवा इतिरिताः' इति बृहद्भाष्यम् । 'प्रियव्रतो गयश्चैव कर्मदेवसमौ मतौ' इति भागवततात्पर्यं मानम् । देवेष्ववरवद् ज्ञेयम्** ऋषीणां चक्रवर्तिनाम्' इति **गीतातात्पर्यम्** । 'बल्याद्याः अन्तराप्राप्तदेवताः कर्मदेवताः' इति **तैत्तिरीयभाष्यम् । सुधायां** पुष्करोत्तमत्वं आवेशविशेषाभिप्रायेणोक्तम् । 'आविष्टा हरिणा जीवाः ब्रह्मा दक्षो मनुः पृथुः । शक्राद्या ऋषयश्चैव मत्स्यव्यासादयो हरिः । प्रियव्रतोत्तानपादप्रमुखेषु हरिः स्वयम् । आविष्टः' इति चतुर्थतात्पर्ये आवेशविशेषोक्तेः । श्रीमत्तात्पर्यनिर्णये च - 'भरतः कार्तवीर्यश्च वैन्याद्याश्चक्रवर्तिनः । गयश्च लक्ष्मणाद्याश्च त्रयो रोहिणिनन्द x x । प्रद्युम्नो रौग्मिणेयश्च तत्पुत्रश्चानिरुद्धकः । नरः फल्गुन इत्याद्याः विशेषावेशिनो हरेः' इति च । अन्यथा 'ताभ्यः सहस्रगुणिता यशोदा, नन्दगेहिनी । ततोऽप्यभ्यधिका देवी देवकी भक्तितस्ततः । वसुदेव इत्येकादशतात्पर्यविरोधात् । विरोधप्रकारस्तु अग्निपुत्राणामाजानदेवतासाम्यस्य श्रीनिर्णयोक्तेः। अग्निपुत्रेभ्यो यशोदायाः सहस्रोत्तमत्वोक्तौ आजानजापेक्षया सहस्रोत्तमत्वं प्राप्तम् । यशोदा च नन्दगोपपत्नी नन्दस्तु वस्ववतारत्वात् च शतान्तर्गतः । शतदेवानां च आजानजापेक्षया एकोत्तरशतोच्चत्वं प्राप्तम् । एवं च भार्यायाः पत्युराधिक्यप्रसङ्ग इति । कर्मजादिष्वपि तारतम्यमङ्गीकरणीयम् । **'विप्रराजन्यता यत्र विशेषोऽत्रापि कश्चन'** इत्युक्तत्वात् मुक्तावपि विप्रत्वादेः भावादिति सुधायाम् ।

32. तेभ्यः देववंश्या अनाख्याता जयन्ताद्या आजानजाः । शतोत्तरषोडशसहस्राग्निपुत्राः शतदेवगन्धर्वाः शतोनशतकोटिऋषयः शताधमाः ।

33. तेभ्यः कृष्णाङ्गसङ्गयोग्यगोपिकास्त्रियो भक्तितो द्विगुणाधमाः । अत एव - 'अनाख्याता देवतास्तु जाता देवकुले च याः। आजानदेवास्ते प्रोक्ताः' इति तैत्तिरीयम् । 'द्व्यष्टौ सहस्राणि शतं च रूपशीलोदारा अक्षतास्सद्व्रतस्थाः । अग्नेः पुत्राः पूर्वमासंश्च तेऽथ आजानदेवैः सर्वगुणैस्समस्ताः । स्वभावतोऽथ इन्दिरावेशतोऽतः' इति निर्णयवचनम् । 'कर्मदेवगणा अष्टगन्धर्वास्तत्परे शतम् आजानदेवाः' इति **बृहद्भाष्यम्** । 'नवकोट्यस्तु देवानां ऋषीणां शतकोटयः' इति **भारततात्पर्यम्** । 'कार्तवीर्यादिराजभ्यो देवभृत्याः शतावराः आजानदेवास्ते प्रोक्ताः' इति बृहद्भाष्यम् । तासां मध्ये त्वष्टृपुत्री कशेरुरुत्तमा ।

34. तेभ्यश्चिरपितरः शताधमाः ।

35. तेभ्यः पितरः किञ्चिदधमाः 'आजानेभ्यस्तु पितरो ह्यष्टभ्योऽन्ये शतावराः' इति बृहद्भाष्यम् ।

36. तेभ्यो देवगन्धर्वाः शतोनाः 'तेभ्योऽन्ये पितृभ्यश्च शतावराः' इति गीतातात्पर्यम् ।

37. तेभ्यः मानुषगन्धर्वाः शतोनाः ।

38. तेभ्यो व्याप्तदर्शिव्यतिरिक्तराजानः शतोनाः ।

39. तेभ्यो मनुष्योत्तमाः शतन्यूनाः । तेष्वपि वर्णाश्रमभेदेन विशेषोऽवगन्तव्यः । 'मानुषा वर्णभेदेन तथैवाऽश्रमभेदतः' इति सूत्रभाष्ये ।

40. तेभ्यो गजाः द्विगुणाधमाः ।

41. तेभ्योऽश्वाः द्विगुणोनाः ।

42. तेभ्यः पशवो मृगाश्च द्विगुणावराः ।

43. तेभ्यः पक्षिणो जलजाश्च द्विगुणाधमाः ।

44. तेभ्यो वृक्षाः द्विगुणावराः ।

45. तेभ्यो लतागुल्मानि द्विगुणाधमानि ।

46. तेभ्यः ओषधयो द्विगुणाधमाः ।

47. तेभ्यः तृणजीवाः द्विगुणोनाः । अत एव विष्णुरहस्ये 'तृणादेस्तादृशानन्दः' इत्यादि । ऐरावतोच्चैःश्रवःकामधेनुकल्पवृक्ष-चिन्तामणिनन्दिप्रभृत्युत्तमवाहनादीनां नदीनामुत्तममध्यमेष्वन्तर्भावः।

48. तेभ्यो नित्यसंसारिणो नीचाः । तेऽपि द्विविधाः नित्य-त्रैविद्याः अज्ञाश्च **'राजसतामसाश्चैव मध्याः राजसराजसाः'** इति गीता ।

49. तेभ्यो जडं नीचम् । जडेऽपि तारतम्यमङ्गीकरणीयम् । सर्वा चेतनापेक्षया जडप्रकृतेरुत्तमत्वात् । तथाचोक्तं न्यायदीपिका-याम् 'एवं चेत्प्रकृत्यादिमूलं स्यात् । ऊर्ध्वमूलः कथमित्यत आह - उत्तमत्वान्मूलानामिति । विष्णोः सर्वोत्तमत्वाद् रमायाः परतन्त्रे-

षूत्तमत्वात् प्रकृतेः चेतनेषूत्तमत्वादिति । किञ्च मणिरत्नादीनां सालग्रामादीनामुत्तमत्वस्य सर्वसिद्धत्वात् ।

जडापेक्षया तमोयोग्याः नीचाः । अत एवोक्तम् 'अथ च तरवो ये तु विमुखाश्चेतना हरेः । नित्यदुःखैकयोग्यत्वात् न ह्येतत्स्यादचेतने' इति गीतातात्पर्यम् । तमोयोग्यास्तु मनुष्या-धमाद्याः 'दैत्यरक्षः पिशाचकाः मर्त्याधमाः' इत्युक्ताः ।

50. तेभ्योऽप्रसिद्धाः दैत्याः नीचाः ।

51. तेभ्यो दैत्यभृत्याः नीचाः ।

52. तेभ्यः कर्ममान्यसुरो नीचः ।

53. तस्मात् शिश्नाभिमानी शताधमः ।

54. तस्माद् वागभिमानी शताधमः ।

55. तस्मात् स्पर्शमानी शताधमः ।

56. तस्मात् श्रोत्रभिमानी शताधमः ।

57. तस्मात्पादाभिमानी शतन्यूनः ।

58. तस्माद् हस्ताभिमानी शताधमः ।

59. तस्माद् वेनः कालकेयश्च शताधमौ ।

60. ताभ्यां किर्मीरशतधन्वानौ शताधमौ ।

61. ताभ्यां क्रव्यः शताधमः ।

62. तस्मात् कूपकर्णः शताधमः ।

63. तस्मादेकगुणहीनौ कुम्भाण्डकूपकणौ ।

64. ताभ्यां हंसडिबिकौ अष्टगुणहीनौ ।

65. ताभ्यां दुन्धुमारश्चतुर्गुणहीनः ।

66. तस्माल्लवणो दशाधमः ।

67. ततस्तृणावर्तकेशिनौ ।

68. ततो धेनुकासुरः ।

69. ततो वातापि इल्वल पावक नमुचि द्वापर बाण हिडिम्ब शम्बर साल्व तारक बक मणिमद्धिरण्याक्ष हिरण्यकशिपुकाल-नेम्यात्मककंस जरासन्धात्मकविप्रचित्तय एते क्रमेण पञ्चगुणेन दशगुणेन नीचाः ।

70. विप्रचित्तेर्मन्थरात्मकाऽलक्ष्मीः दशाधमा ।

71. तस्याः सर्वाधमो दुर्योधनात्मककलिः शताधमः । स एव सर्वावलक्षणयुक्तो दुःखानन्त्यस्वरूपवानित्यशेषमतिमङ्गलम् ।

**।। इति देवपूर्वदेवतारतम्यप्रकाशः सम्पूर्णः ।।**

## 24. मुद्गलानन्दतीर्थकृतः

# तारतम्यसङ्ग्रहः

।। श्री गुरुभ्यो नमः ।।

विष्णुः पूर्णस्ततः श्रीरमितमध इतो कोटितोऽधो विधीरौ
तद्भार्ये तच्छताधः गरुडशिवफणीन्द्रास्तु ताभ्यां शताधः ।
पञ्चाधः कृष्णपत्न्यः षडत इत उमावारुणीगारुडी च
द्विर्न्यूनास्तद्दशोनावमररतिपतीप्राण आभ्यां दशाधः ।। १ ।।

जीवो दक्षोऽनिरुद्धो रतिमनुशचिकास्तद्दशाधः ततस्तु
पञ्चाधः प्रावहोऽस्माद् द्विदशगुणमधो मानवीनेन्दुधर्माः ।
येभ्योऽप्पः सार्धपादात्सुरऋषिरमुतोऽर्वागतोऽधः प्रसूति-
र्भृग्वग्नी पादतोऽप्पादध इत ऋषयः सप्तगाध्यर्कजौ च ।। २ ।।

न्यूनास्तेभ्योऽधमाः स्युः निर्ऋतिसहिताः प्रावही मित्रतारा-
श्चाग्नेर्विंशत्त्वधस्तास्तत उदित सुरान्ये शतस्था धनेशः ।
विष्वक्सेनो गणेन्द्रोऽल्पगुणितमधमाः केचिदेभ्यः शतस्थाः
देवान्ये उक्तवर्जाः मनव इतर इन्द्राः प्रियादिव्रतश्च ।। ३ ।।

वैन्यो यः कार्तवीर्यो गय उत शशबिन्द्वादिरेवं शतं ये
राजोत्कृष्टास्तथाऽष्टौ उपसुरपतयः काश्चिदेवाप्सरोऽग्र्याः ।
पित्रग्र्याः सप्त चोक्तान्यदृषिवरशतं चावनोचथ्य पूर्वं
चैते कर्मामराख्याः इह मनुमुखराः मित्रतः पञ्चतोऽधः ।। ४ ।।

पर्जन्यश्चानिरुद्धाप्पतियमरविचन्द्राङ्गनास्तच्चतुर्भागोना
एभ्योऽधमा स्युः प्रथितसुरजनाः अग्निभार्या ततोऽधः ।
पर्जन्याद् विंशदूनास्तदध उत बुधोऽस्मादधो दस्रभार्या स्वाहा-
यास्सा दशोना तदध उत शनिः पुष्करः स्यात्ततोऽधः ।। ५ ।।

सोश्विस्त्रीतो दशाधः तदवधि कथिताः येषु पर्जन्यतोऽधः
प्रायस्त्वाजानजास्ते ज्वलनसुतगणः कृष्णपत्नीत्वमाप्तः ।
आजानेयैः समानो कथित ऋषिगणांश्चोचुरत्रैव गोप्यो
द्वैगुण्येनोत्तमा स्युः ज्वलनसुतगणान्नन्दपत्नी तु तस्मात् ।। ६ ।।

साहस्रोच्या तदुच्चात्वदितिरथ शताधः पितॄणां गणः
स्यादाजानेभ्यः पितृभ्यः शतगुणमधमो देवगन्धर्ववर्गः ।
गन्धर्वा मानुषास्तच्छतगुणमधमास्तच्छताधः क्षितीशाः
मर्त्याग्र्यास्तच्छताधस्त्विह मम गुरवः सर्वदा मामवन्तु ।। ७ ।।

सप्तश्लोकीं मूलटीकोदितानि विमृश्येमां मुद्गलानन्दतीर्थः ।
चक्रे सम्यक् तारतम्यस्य वित्यै विरोधभानस्य तथाऽपनुत्यै
।। ८ ।।

**।। इति मुद्गलानन्दतीर्थकृततारतम्यसङ्ग्रहः समाप्तः ।।**

**।। श्रीप्राणान्तर्गतकृष्णार्पणमस्तु ।।**

# 25. प्रज्ञाचार्यकृतः तारतम्यसङ्ग्रहः

प्रणम्य रमणं लक्ष्म्याः पूर्णबोधादिकान् गुरून् ।

रमादीनां तारतम्यं वक्ष्ये श्रीगुर्वनुग्रहात् ।

विष्णुः सर्वैर्गुणैः पूर्णः ।

तदनन्तरं रमा अनन्तगुणाधमा ।

तदनु ब्रह्मवायू कोटिगुणन्यूनौ ।

तदनु ब्रह्माणीभारत्यौ शतगुणन्यूने ।

तदनु गरुडशेषरुद्राः शतगुणन्यूनाः ।

तदनन्तरं नीलाद्याः पञ्चगुणाधमाः । एतासु षट्सु रमावेशः सर्वदाऽस्ति । तत्रापि जाम्बवत्यां यदा बाहुल्येन भवति ; तदा सा शेषसमा । अन्याः पञ्च तदा ततः किञ्चिन्नीचाः ।

सौपर्णीवारुणीपार्वत्यः नीलाद्यपेक्षया द्विगुणाधमाः । रुद्रादेस्तु दशगुणाधमाः । ब्रह्माणमारभ्योमापर्यन्तं सर्वेऽपि ज्ञानेनानन्तोनाः । तदन्यगुणेषु उक्त एव क्रमः ।

पार्वत्यपेक्षया शक्रकामौ दशगुणन्यूनौ । इन्द्रतः कामः किञ्चिन्न्यूनः । एवं वायुभारती ज्ञाने शतोने । रुद्रपार्वत्यौ ब्रह्मवाणी शेषवारुणीभ्यः क्रमात् किञ्चिन्न्यूनाः ।

अहङ्कारिकः प्राणः इन्द्रकामाभ्यां दशगुणन्यूनः ।

तदनु अनिरुद्धबृहस्पतिस्वायम्भुवरतिदक्षशच्यः ।

तदनु प्रवहः ।

तदनु शतरूपा, सूर्य, चन्द्र, यमाः द्विगुणन्यूनाः ।

ततो वरुणः पादपादार्धतोऽधमः ।

ततो नारदः किञ्चिन्न्यूनः । अग्नेः किञ्चिदधिकः । "वरुणाग्न्यन्तरा तत्र नारदः" इत्यनुव्याख्याने सामान्यत एवोक्तत्वात् ।

ततोऽग्निभृगुप्रसूतयो वरुणात् पादन्यूनाः ।

ततो मरीच्यादयः सप्त विश्वामित्रश्चेत्यष्टौ अग्नितः किञ्चिन्न्यूनाः । मित्रात्किञ्चिदुच्चाः । "तन्मध्ये ब्रह्मपुत्रकाः" इत्यनुव्याख्याने सामान्यत एवोक्तत्वात् ।

तदनु प्रावही, निर्ऋतिः, तारा, मित्राख्यादित्यश्चेत्येते किञ्चिन्न्यूनाः । अग्नेर्द्विगुणाधमाः ।

तदनु शतस्थाः सोमाधिकारिदेवाः । ते च - अष्टौ वसवः, एकादश रुद्राः दश विश्वेदेवाः, द्वादशादित्याः, पञ्चाशन्मरुतः । अग्निर्यमश्चन्द्र इति पितृपतयस्त्रयः, अश्विनौ, ऋभूणां गण एकः । ऋभवो नाम तपसा सोमाधिकारं प्राप्ताः सहस्रसङ्ख्याकाः देवाः । तेषां गणविवक्षया एकत्वम् । द्यावापृथिव्यौ, गुरुः इत्येते शतस्थाः । तत्र वसुषु अग्निरुक्तः । रुद्रेषु शिवः । आदित्येषु उरुक्रमाख्यो विष्णुः, इन्द्रः, मित्रः, सूर्यः, वरुणः, पर्जन्यः एते षट् । पञ्चोक्ताः । पर्जन्यो निकृष्टतया वक्ष्यते । मरुत्सु प्रधानवायुः, अहङ्कारिकः प्रवह इति त्रयः उक्ताः । पितृपतयस्त्रय उक्ताः । गुरुश्चोक्तः । एवं चतुर्दशोक्तेभ्यो वक्ष्यमाणपर्जन्याच्च शिष्टाः पञ्चाशीतिदेवाः, विष्वक्सेनः, कुबेरः, विनायकः, सनत्कुमारान्यसनकादयः, वैवस्वतमनुश्चेत्येते सर्वे मित्रात् किञ्चित् न्यूनाः । पर्जन्यादुत्तमाः । अन्योन्यं समाः । अत्रापि - प्राणादयः पञ्च अन्यमरुद्भ्यः किञ्चिदुच्चाः । अन्यमरुत्स्वपि अन्तरिक्षाद् गन्धर्वाख्यः,

तस्मात् चक्राख्यः अपि किञ्चिन्नीचः । ऋभूणां पृथिव्यां लयोक्तेः किञ्चिन्नीचत्वम् । पृथिवी विघ्नेशात्किञ्चिन्न्यूना । एषामन्योन्य-साम्येऽपि प्रमाणेन किञ्चिन्नीचोच्चभावोऽपि ज्ञेयः । सनकादयः वैवस्वतमनोः, अश्विभ्यां च किञ्चिन्न्यूनाः इति ।

अग्नेः ज्येष्ठपुत्रः पावकः वायुपुत्रः मरुद्भ्यः किञ्चिन्न्यूनाः ।

तदनु रोहिणी, गङ्गा, शामला, सञ्ज्ञा, उषाः, पर्जन्य इति षट् मित्राद् द्विगुणाधमाः ।

तदनु केचन देवाः किञ्चिन्नीचाः ।

तदनु स्वाहा किञ्चिन्नीचा । पर्जन्याद् द्विगुणोना ।

ततः बुधः किञ्चिदधमः ।

ततः अश्विभार्योषा तथा स्वाहातो दशन्यूना ।

ततः तात्विकेषु अन्त्यश्शनिरधमः ।

तदनु प्रह्लादः, नवकोटिदेवेषु अवशिष्टाः सर्वे देवाः शनेरधमाः।

तदनु पुष्कराद् वसुदेवः देवक्या उत्तमः ।

देवकी यशोदाया उत्तमा ।

यशोदा कर्मजदेवेभ्यो दशोत्तमा ।

आजानाः शतऋषिषु उक्तान् ऋषीन् विना नवतिऋषयः तुम्बुर्वाद्यष्टगन्धर्वाः ऊर्वश्यादिव्यधिकनवत्यप्सरसः, सप्त पितरः, षडिन्द्राः एकादश मनवः, इत्येते सर्वे पुष्करात् शताधमाः । अन्योन्यं समाः । अत्रापि राज्ञां जात्या ऋषिभ्यः किञ्चिदूनत्वं ज्ञेयम् ।

अनाख्याताः देववंशे जाताः आजानजदेवाः ।

पूर्वमग्निपुत्रास्तपसा स्त्रीत्वं प्राप्ताः शताधिकषोडशसहस्र-सङ्ख्याकाः शतकोटिगन्धर्वेषु शतगन्धर्वाः, शतोनशतकोटिऋषयश्च इत्येते कर्मदेवेभ्यः शतन्यूनाः । शताधिकषोडशसहस्रस्त्रीषु इतराभ्यः कशेरुरुत्तमा ।

तदनन्तरं कृष्णाङ्गसङ्गयोग्याः पूर्वमप्सरसः गोपिकास्त्रियः द्विगुणोनाः ।

ततोऽधमा वर्णबाह्याः ।

तेभ्यः पश्वाद्या जङ्गमा अधमाः ।

ततो वृक्षाद्याः स्थावरा अधमाः ।

तेभ्यः नित्यसंसारिणः अधमाः । तेऽपि त्रिविधाः स्वर्गभूमिनिरयप्रचुरभेदेन । तत्र स्वर्गप्रचुरेभ्यः भूप्रचुराः, तेभ्यः निरयप्रचुरा नीचाः ।

अचेतनं ततोऽधमम् ।

तमोयोग्यास्ततोऽधमाः ।

तेषु अत्यधमो विप्रचित्तिः ।

ततोऽधमः कलिः ।

**।। इति श्रीप्रज्ञाचार्यकृतः तारतम्यसङ्ग्रहः समाप्तः ।।**

## 26. वेदगर्भानन्तपद्मनाभाचार्यकृतः

# तारतम्यसारः

मोक्षयोग्येषु सर्वावराः स्थावरजीवाः ।

तेभ्यः पशुपक्षिणो जङ्गमा उत्तमाः । तेभ्यो मानुषा उत्तमाः । तेभ्यो विप्रमानुषा उत्तमाः । तदुक्तं तृतीयस्कन्धतात्पर्ये -

**'तत्र स्थावरमुक्तेभ्यो वरा जङ्गममुक्तिगाः ।**
**तेभ्यो मानुषमुक्ताश्च विप्रमुक्तास्ततोऽधिकाः ।।'** इति

तेभ्यः शतगुणोत्तराश्चक्रवर्तिनः । **'अन्येभ्यस्तु विमुक्तेभ्य आनन्दश्चक्रवर्तिनाम् । मुक्तानां तु शतोद्रिक्तः'** इति बृहद्भाष्योक्तेः । चक्रवर्तिभ्यो मनुष्यगन्धर्वाः शतगुणोत्तमाः ।

**'यस्तु साधुगुणैर्युक्तस्तस्यैवाप्यखिला मही ।**
**त्रेतायुगे चक्रवर्तीत्यारभ्य -**

**'एकानन्दस्वरूपोऽसौ मानुषो मुक्त इष्यते ।**
**तस्माच्छतगुणानन्दाः गन्धर्वाः मानुषात्मकाः'** ।।

इति तैत्तिरीयभाष्योक्तेः । तत्र चक्रवर्तिषु मानुषपदप्रयोगस्तु प्रियव्रतादिकर्मजदेवतासमानचक्रवर्तिव्यावृत्त्यर्थं पृथुकार्तवीर्यादिकर्मजदेवताव्यावृत्त्यर्थं चेति बोध्यम् । 'एकानन्द' इत्यत्रैकशब्दार्थस्तु उत्तमानन्दं शतधा विभज्य तत्रैको भागो यावत्परिमितस्तत्समानानन्दोऽधमदेवानन्द इति सर्वत्र बोध्यम् ।

मनुष्यगन्धर्वेभ्यो देवगन्धर्वाः शतगुणोत्तमाः । अत्र देवगन्धर्व-मनुष्यगन्धर्वस्वरूपकथनपूर्वकं शतगुणोत्तरत्वप्रतिपादकं बृहद्भाष्यं मानम् । तथा हि -

**'स्वमुखेनैव देवैर्य आज्ञाप्यास्सर्वदा गणाः ।**
**आख्याता देवगन्धर्वाः ये त्वन्यमुखगोचराः ।**
**मानुषास्ते तु गन्धर्वास्तेभ्यः ते च शतावराः ।**
**तेभ्यः शतावराश्चैव मनुष्येषूत्तमा गणाः ।।'**

इति । अत्रेदं बोध्यम् । सिद्धचारणकिन्नरकिम्पुरुषविद्याधरयक्ष-नागवेतालादीनां देवगन्धर्वसाम्यम् । न च ते मुक्तियोग्या एव न भवन्तीति वाच्यम् ।

**'ये यक्षरक्षोरगनागनाथा दैत्येन्द्रसिद्धेश्वरदानवेशाः ।**
**अन्ये च ये प्रेतपिशाचभूतकूश्माण्डयादोमृगपश्वधीशाः ।'**

इत्याद्युक्त्वा **'तत्तत्पदं रूपवदस्य रूपम्' इति** तेषां भगवत्सन्निधानपात्रत्वस्य द्वितीयभागवतोक्तेः ।

सप्तमस्कन्धभागवतेऽपि - **'सिद्धाः वेतालाः किन्नराः'** इति प्रत्येकं नरसिंहस्तावकत्वोक्तेः । तथा च **'मध्यमा ऋषिगन्धर्वाः'** इति भाष्योक्तदिशा तेषां मध्यमाधिकारिषु देवगन्धर्वेषु प्रवेशस्य न्यायप्राप्तत्वादिति ।

देवगन्धर्वेभ्यश्चिरपितरः शतगुणाधिकाः । अत्र **'पितृभ्यश्च शतावराः । स्वमुखेनैव देवैर्य आज्ञाप्याः सर्वदा गणाः । आख्याता देवगन्धर्वाः'** इति बृहद्भाष्यं मानम् ।

चिरपितृभ्य आजानजदेवाः शतगुणोत्तराः । **'आजानेभ्यस्तु पितरो ह्यष्टभ्योऽन्ये शतावराः'** इति बृहद्भाष्योक्तेः । अष्टपितृष्वेको विश्वामित्रः । स च ब्रह्मपुत्रैर्वसिष्ठादिभिः समः ।

**'विश्वामित्रो ब्रह्मपुत्रैः समो मुनिरुदाहृतः ।**
**आचार्यः पितृणां चासौ पितृभिः सह पठ्यते ।। '**

इति बृहद्भाष्योक्तेः । 'विश्वामित्रः कसूनुवत्' इत्यनुव्याख्यानोक्तेश्च । अत्राऽजानजदेवतासमानाः शतोनशतकोटिऋषयः **'नवकोट्यो हि देवानामृषयः शतकोटयः'** इति षष्ठस्कन्धतात्पर्योक्ताः ज्ञेयाः । तथा द्विनवतिगन्धर्वाः काश्चनाप्सरसश्चाऽजानजदेवतासमाः । तथा - अग्निपुत्रास्तपसाऽप्सरस्त्वं प्राप्य श्रीकृष्णभार्यात्वं प्राप्ताः शताधिकषोडशसहस्रसङ्ख्याकाः । तथा कृष्णाङ्गसङ्गयोग्या अप्सरस्वरूपा गोपिकास्त्रियश्चाऽजानजदेवतासमाः ज्ञेयाः ।

अत्र प्रमाणानि तु -

**'व्यष्टौ सहस्राणि शतं सुरूपशीलोदारा अक्षताः सद्व्रतस्थाः। पुत्रा अग्नेः पूर्वमासंश्च तेऽथ स्त्रीत्वप्राप्त्यै चक्रुरुग्रं तपश्च । भार्यात्वार्थे वासुदेवस्य ।' 'तथा नारायणं तत्र शिश्रूषमाणाः प्राप्याप्सरस्त्वं राजकुलेषु जाताः । केचित्स्वर्गे । तथा आजानदेवैः सर्वगुणैः समास्ताः** इति निर्णयोक्तिः । **तथा गोपाङ्गना अपि पुरा वरमापिरे यत् । संस्कारतः प्रथममेव सुसङ्गमो नो भूयात्तव'** इति **'परमाप्सरसः पुरा याः'** इति निर्णयोक्तिश्च ।

आजानजदेवेभ्यः शतगुणोत्तमाः कर्मजदेवाः । तदुक्तं बृहद्भाष्ये - **'कार्तवीर्यादिराजभ्यो देवभृत्याः शतावराः । आजानदेवास्ते प्रोक्ताः'** इति । तैत्तिरीयभाष्येपि - **'तेभ्यः शतगुणानन्दा देवप्रेष्यास्तु मुख्यतः । ये ते हि देवगन्धर्वा मुक्तेभ्यः तेभ्य एव च । शताधिका हि पितरस्तेभ्य आजानदेवताः । अनाख्याता देवतास्तु जाता देवकुले च याः । आजानदेवतास्ता हि ताभ्योऽग्र्याः कर्मदेवताः । बल्याद्या अन्तराप्राप्तदेवताः कर्मदेवताः'** इति । कर्मजदेवताश्च बृहद्भाष्योक्ताः ज्ञेयाः ।

**'कार्तवीर्यः पृथुश्चैव दौष्यन्तिर्भरतस्तथा ।**
**शशविन्दुश्च मान्धाता ककुत्स्थाद्यास्तथापरे'** ।। इति ।
**'सर्वे ते विष्णुनाऽऽविष्टाः विष्णोर्भिन्नाः सदैव तु ।**
**शतावराश्च देवेभ्यः कर्मदेवा इति स्मृताः ।।**

इति । तथा बलिः अद्भुतः शम्भुः विधृतः ऋतुधामा बृहस्पतिः शुचिरिति सप्त च कर्मदेवाः पुराणादौ प्रसिद्धाः । **'कर्मदेवसमाः सप्त पितरः'** । **'पितृणां सप्तकं यत्तत्कर्मदेवसमं मतम्'** इति बृहद्भाष्योक्तेः । सप्त पितरश्च पुराणादितोऽवगन्तव्याः । एवं नवकोटिदेवगणाः पावकप्रह्लादाद्याश्च कर्मजदेवतासमानाः । तथा तापसस्वायम्भुववैवस्वतमनुव्यतिरिक्ता रैवतचाक्षुषादय एकादश-मनवश्च्यवनोचथ्यौ च ऋषी प्रियव्रतगयौ राजानौ च कर्मज-देवतासमानाः । तत्र प्रमाणानि तु - **'अन्ये ततोऽवराः । च्यवनोचथ्यवैन्याश्च शशविन्दुश्च हैहयः । तद्वच्च विप्रराजन्य-विशेषोऽत्रापि कश्चन । तद्वत्प्रियव्रतश्चापि'** इत्युपासनापादीया-

नुव्याख्यानम् । **प्रियव्रतो गयश्चैव कर्मदेवसमौ** गुणैरिति पञ्चमभागवततात्पर्यम् । **अनुक्तदेवाश्चेति** सुधा एवमष्टगन्धर्वाः कर्मजदेवतासमानाः । **'कर्मदेवगणा अष्टगन्धर्वाः'** इति बृहद्भाष्योक्तेः । अष्टगन्धर्वाश्च तुम्बरुधृतराष्ट्रचित्ररथहाहाहूहूप्रभृतयः। **'गन्धर्वपतिः स तुम्बुरुः।' 'गन्धर्वराट् पवनावेशयुक्तः।' 'गन्धर्वाणां चित्ररथः'** । **'हूहूगन्धर्वसत्तमः'** इत्यादौ तेषां गन्धर्वोत्तमत्वप्रतीतेः । तथा द्विनवतिसङ्ख्याका अप्सरसश्च कर्मजदेवतासमाः ज्ञेयाः । पञ्चमतात्पर्ये - **'अप्सरसां शतम् । गन्धर्वाणां तथा'** इति मिलितानामेव शतसङ्ख्या ज्ञेया । ताश्चोर्वशीमेनकाघृताचीरम्भाद्याः प्रसिद्धा ज्ञेयाः । **'ऊर्वशी पूर्वचित्तिश्च सहजन्या च मेनका ।' 'विश्वाची च घृताची च षडेता ह्यप्सरोवराः'** इत्यादिमहाभारतवचनात् । एवं सनकाद्याश्च कर्मजदेवतासमानाः । **'सनकाद्या नारदश्च दक्षभृग्वादयोऽपि च'** इति बृहद्भाष्ये सनकादीनां देवावरत्वमुक्त्वा नारददक्षभृगूणां तत्र तत्रापवाददर्शनेन सनकादीनां तददर्शनेन च शतस्थावरकर्मजदेवतासाम्यसिद्धेः । किञ्चैकादशस्कन्धतात्पर्ये सनकादीनां ज्ञानयोगित्वं देवानां भक्तियोगित्वं चोक्त्वा **'तस्मात्तेभ्योधिका ह्येषु देवा एव विशेषतः'** इति सनकादीनां देवावरत्वकथनात् । किं च वैकुण्ठे भगवद्धामगमनजयादिशापदानादिसामर्थ्यान्यथानुपपत्त्या पुष्कराद्यपेक्षयाऽऽधिक्यस्य वक्तव्यत्वात् ।

अत्र चाऽजानजदेवेभ्योऽधिकाः कर्मजदेवेभ्यो न्यूना मध्ये केचन देवाः बोध्याः । तथा हि - आजानजदेवेभ्य उत्तमः पुष्करः ।

**'कलाभ्यश्चान्यदेवेभ्यः कर्म प्रत्यवरं यतः । कलाभ्यः पृथगुक्तं तत्पुष्करः कर्म चोच्यते'** इत्याथर्वणभाष्योक्तेः।

ततः शनैश्चरोऽधिकः **'पृथिव्यात्मा शनिश्च'** इति षट्प्रश्न-भाष्योक्तेः ।

तत उषा अश्विभार्या दशगुणोत्तमा । **'बुधस्तस्या उषा नामात्मिका तथा'** इति षट्प्रश्नभाष्योक्तेः ।

ततो बुध उत्तमः **'उदकात्मको बुधः'** इति षट्प्रश्नभाष्योक्तेः।

ततः स्वाहाऽग्निभार्योषसो दशोत्तरा । छान्दोग्यभाष्ये - **'नामादि प्राणपर्यन्तं सर्वे त्वेते दशोत्तराः'** इति सामान्यत उक्तत्वेन पर्जन्यादिवदपवादाविषयत्वात् ।

स्वाहातः पर्जन्यो द्विगुणोत्तमः । **'पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च । द्विगुणा एव'** इति दशोत्तरदेवेष्वपवादोक्तेः छान्दोग्यभाष्ये । एवं पर्जन्यसमा वरुणभार्या गङ्गा सूर्यभार्या सञ्ज्ञा चन्द्रभार्या रोहिणी यमभार्या शामला अनिरुद्धभार्या विराट् चेति पञ्चस्त्रियः । तदुक्तमुपासनापादीयानुव्याख्याने - **'पर्जन्यवद् वारुणी च तथा सञ्ज्ञाच रोहिणी । धार्मी चेति । विराड-निरुद्धभार्या'** इति सुधोक्तिश्च । अत्रेदं बोध्यम् । पर्जन्यादवराः स्वाहात उत्तमाः केचन जयविजयादयः सन्ति । **'अनतिप्रसिद्धा-धिकारिदेवाः केचन पर्जन्यादवराः'** इति सन्न्यायरत्नावल्यामुक्तेः।

पर्जन्यादिभ्यः कर्मजदेवा उत्तमाः । तथैव सुधोक्तेः - कर्मज-देवेभ्य उत्तमाः विष्वक्सेनाश्विगणपतिकुबेरा उक्तशेषाः शतस्थाश्च।

अत्र मानं तु **'मित्रपर्जन्यमध्यस्थावश्विनौ विघ्नवित्तपौ'** इत्यनुव्याख्यानम् । **'विष्वक्सेनो वायुजः खेन तुल्यः'** इति निर्णयोक्तिः। **'तदन्याः शतदेवताः । पर्जन्यमित्रान्तराले'** इत्यनुव्याख्यानं च । तदर्थस्तु सुधायामुक्तः - **'तदन्या उक्ताभ्योऽन्याः शतदेवताः सोमार्हशतदेवतान्तर्गतदेवाः पर्जन्यमित्रान्तराले । पर्जन्यादधिका मित्रादधमा इत्यर्थः'** इति । सोमार्हशतदेवाश्च तत्त्वप्रदीपिकायामुक्ताः **'मरुद्रुद्रादित्यवसुविश्वेदेवा बृहस्पतिः । ऋभ्वश्विनौ च रोदस्यौ पितृपाश्च शतं सुराः'** इति । तदर्थस्तु पञ्चाशन्मरुतः एकादशरुद्राः द्वादशादित्याः अष्टौ वसवः दश विश्वेदेवाः बृहस्पतिरेकः ऋभुगण एकः द्यावापृथिव्यौ द्वे अश्विनौ द्वौ पितृपास्त्रय इत्येताः सोमार्हशतदेवताः । तदुक्तं सूत्रे भाष्ये च - विभागः शतवत् । **'नवकोट्यो हि देवानां तेषां मध्ये शतस्य तु । सोमाधिकारो वेदोक्तो ब्रह्मणी द्वे शताधिके'** इति । तत्र मरुत्सु प्रधानवायुः । आहङ्कारिकप्राणः प्रवह इति त्रय उत्तमकक्ष्यात्वेनोक्ताः । तथा - एकादशरुद्रेषु प्रधानरुद्र उत्तमत्वेनोक्तः । द्वादशादित्येषु विवस्वान्-पर्जन्यमित्रवरुणशक्राश्चोक्ताः । उरुक्रमो भगवानुक्तः । अष्टवसुष्वर्काग्नी उक्तौ । बृहस्पतिश्चोक्तः । ततश्चैतद्व्यतिरिक्ताः शतसङ्ख्यान्तर्गता अश्विसमा इति ।

नन्वेवं **'मरुतश्च समाः सर्वे सप्त तेषु प्रधानकाः'** इति दशमतात्पर्ये मरुत्सु सप्तानां प्राधान्योक्तेः । **'प्राणादयः पञ्च मरुत्प्रवीराः'** इति पञ्चानां प्राधान्योक्तेर्निर्णये । **'आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत्'** इति षट्प्रश्नभाष्ये शतस्थान्तर्गतवायुसून्वपेक्षया गणेशस्याऽधिक्योक्तेश्च । **'पृथिव्यामृभवो विलीयन्ते'** इति

ऋभ्वपेक्षया पृथिव्या आधिक्योक्तेः । **'पञ्चभूतावरा या यस्यां जज्ञे नरकः श्रीवराहात्'** इति निर्णये । आकाशाभिमानि-गणेशापेक्षया पृथिव्या न्यूनत्वोक्तेः कथमुक्तशेषाः सर्वे समा इति चेन्न । किञ्चिन्न्यूनाधिक्यसद्भावेऽपि तदविवक्षया **'काम इन्द्रा-धमोऽल्पतः'** इतिवत्साम्यव्यपदेशोपपत्तेः ।

विघ्नेशादिभ्यो मित्रो द्वादशादित्यमध्ये कश्चन तथा बृहस्पति-भार्या तारा तथा कोणाधिपो निर्ऋतिः भूतवायुप्रवहपत्नी च आहत्य चत्वार उत्तमाः । तत्र **'उषाः स्वाहा च पर्जन्यो मित्रोऽग्निर्वरुणो विधुः । प्रवहोऽनिरुद्ध इन्द्रोमे रुद्रो वाणी च मारुतः । उत्तरोत्तरत-श्चैते गुणैः । सर्वैश्च मुक्तिगाः'** इत्युक्त्वा 'मित्रवत्त्वेव प्रावही परिकीर्तिता' । **'तारा च मित्रवत्'** । **'निर्ऋतिर्मित्रसदृशः'** इत्यनुव्याख्यानोक्तिर्मानम् ।

अत्रेदं बोध्यम् -

पर्जन्यापेक्षया मित्रो द्विगुणाधिकः । **'पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च । द्विगुणा एव'** इत्यपवादछान्दोग्यभाष्योक्तेः । **'पर्जन्यात्किञ्चिदधिका मित्रात्किञ्चिन्न्यूनाः विघ्नेशादयः'** इति ।

मित्रादिभ्यो **'मरीचिरत्रिरङ्गिराः पुलस्त्यः पुलहः क्रतुर्वसिष्ठः'** इति सप्तर्षयो ब्रह्मपुत्राः तथा **'विश्वामित्रो वैवस्वतमनुश्च'** इति नवोत्तमाः । अत्र **'मित्रतन्मध्ये ब्रह्मपुत्रकाः'** इति मित्राग्निमध्ये मरीच्यादीनुक्त्वा **'विश्वामित्रः कसूनुवद् वैवस्वतमनुश्च'** इत्यनु-व्याख्यानोक्तिर्मानम् । सुधायामपि - **'विश्वामित्रः कसूनुवत् ।**

**ब्रह्मपुत्रैर्मरीच्यादिभिः समानो वैवस्वतो मनुश्च कसूनुवत्'** इति सम्बन्ध इत्युक्तम् ।

मरीच्यादिभ्यो भृगुऋषिः प्रधानाग्निर्दक्षभार्या प्रसूतिश्चेति त्रय उत्तमाः । **'अत्र उषाः स्वाहा च पर्जन्यो मित्रोऽग्निः'** इति मित्रोत्तममरीच्याद्युत्तमत्वमग्नेरुक्त्वा **'भृगुरग्निसमः । प्रसूतिर्वह्निवत्'** इत्यनुव्याख्यानोक्तिर्मानम् । अत्रेदं बोध्यम् । मित्राद्यपेक्षयाऽग्न्यादयो द्विगुणाधिकाः । **'पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च । द्विगुणा एव'** इति छान्दोग्यभाष्योक्तेः । तथा च मित्राद्यपेक्षया किञ्चिदधिका अग्न्याद्यपेक्षया किञ्चिन्न्यूना मरीच्यादय इति ।

अग्न्यादिभ्यो नारद उत्तमः । **'वरुणाग्न्यन्तरा तत्र नारदः'** इत्यनुव्याख्यानोक्तेः ।

नारदाद् वरुण उत्तमः । **'मित्रोऽग्निर्वरुणो विधुः'** इत्युक्तेः । अत्राग्न्याद्यपेक्षया वरुणस्य पादगुणाधिक्यं बोध्यम् । **'पादोनो वरुणादग्निरध्यर्धोनः समो मतः'** इति छान्दोग्यभाष्योक्तेः ।

वरुणात्सूर्यश्चन्द्रो यमः स्वायम्भुवपत्नी शतरूपा चेति चत्वारोऽध्यर्धोत्तमाः । अत्र **'मित्रोऽग्निर्वरुणो विधुः'** इति चन्द्रस्य वरुणादुत्तमत्वमुक्त्वा **'सूर्यधर्मौ यथा सोमः'** इति **सोमवच्छतरूपा** **त्वित्यनुव्याख्यानोक्तिर्मानम्** । **'पादोनो वरुणादग्निरध्यर्धोनः समो मतः'** इति छान्दोग्यभाष्यं च ।

सूर्यादिभ्यः प्रवह उत्तमः । अत्र **'मित्रोऽग्निर्वरुणो विधुः प्रवहोऽनिरुद्ध इन्द्रोमा'** इत्यनुव्याख्यानं मानम् । अत्रेदं बोध्यम् । **'अग्न्यपेक्षया प्रवहो द्विगुणाधिकः'** इति । **'पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च । द्विगुणा एवानिरुद्धः'** इति छान्दोग्यभाष्योक्तेः।

प्रवहाद् बृहस्पतिर्दक्षः कामपुत्रोऽनिरुद्धः स्वायम्भुवमनुरिन्द्रभार्या शची कामभार्या रतिरिति षड्देवा उत्तमाः । अत्र **'प्रवहोऽनिरुद्ध इन्द्रोमे रुद्रो वाणी च मारुतः'** इति प्रवहापेक्षयाऽनिरुद्धस्योत्तमत्व-मुक्त्वा **'मनुर्दक्षो बृहस्पतिः । शचीरतिश्चानिरुद्धसमाः'** इत्यनु-व्याख्यानोक्तिर्मानम् । अत्र **'प्रवहापेक्षया अनिरुद्धादयः पञ्च गुणाधिकाः'** इति बोध्यम् । **'अनिरुद्धोऽनिलात् पञ्च गुणाधिकः'** इति छान्दोग्यभाष्योक्तेः ।

अनिरुद्धादिभ्य आहङ्कारिकः प्राण उत्तमः । अत्र **'अन्न-नामाऽनिरुद्धकः'** । **'अन्ननामाऽनुनादित्वात्तैजसाहम्भवस्ततः । तथा वरिष्ठः प्राणाख्यो वायुः सोऽपाञ्च देवता'** इति छान्दोग्य-भाष्योक्तिर्मानम् । **'अनिरुद्धादिभ्य आहङ्कारिकप्राण उत्तमः'** इत्युपासनापादीयसुधाऽपि । एवमनिरुद्धादिभ्य आहङ्कारिकप्राणस्य दशोत्तरत्वं बोध्यम् । **'सर्वे त्वेते दशोत्तराः'** इति सामान्य-न्यायविपयत्वात् ।

आहङ्कारिकप्राणादिन्द्रकामौ दशोत्तरौ । **'प्रवहोऽनिरुद्ध इन्द्रोमे'** इत्यनिरुद्धोत्तमाहङ्कारिकप्राणोत्तमत्वमुक्त्वा **'प्राय इन्द्रवत्कामः'** इत्यनुव्याख्यानोक्तेः । **'सर्वे त्वेते दशोत्तराः'** इति छान्दोग्य-

भाष्योक्तेश्च । अत्र **'प्रायः'** इत्यनेन कामस्येन्द्रापेक्षया किञ्चि-न्यूनत्वमभ्युपैति । सुधायां तथैवोक्तेः ।

'इन्द्रकामाभ्यां गरुडपत्नी सौपर्णी शेषपत्नी वारुणी रुद्रपत्नी पार्वती चेति तिस्रो दशोत्तराः' । **'इन्द्रोमे रुद्रो वाणी च मारुतः'** इत्युक्त्वा **'सौपर्णी चोमावत्'** इत्यनुव्याख्यानोक्तेः । **'उमात्म-कत्वाच्छेषभार्या चेति'** सुधोक्तेश्च । **'सर्वे त्वेते दशेत्तराः'** इति छान्दोग्यभाष्योक्तेश्च ।

सौपर्ण्यादिभ्यो नीलाभद्रामित्रविन्दाकालिन्दीलक्षणाजाम्बवती चेति विष्णोः षण्महामहिष्यो द्विगुणोत्तमाः । अत्र प्रमाणं तु **'यदावेशो बहुलः स्याद् रमायाः । रामेण तुल्या जाम्बवती प्रियत्वे कृष्णस्यान्याः किञ्चिदूनाश्च तस्याः'** इति । **'यदावेशो ह्रासमुपैति तत्र प्रद्युम्नतो विंशगुणाधिकाः स्युः'** इति निर्णयो-क्तिर्मानम् । तथा हि छान्दोग्यभाष्ये - **'सर्वे त्वेते दशोत्तराः'** इतीन्द्रकामापेक्षयोमादेर्दशोत्तरत्वं उमापेक्षया च रुद्रादेर्दशोत्तरत्वं चोक्तम् । निर्णये **'प्रद्युम्नतो विंशगुणाधिकाः स्युः'** इति षण्म-हिषीणां कामावतारप्रद्युम्नापेक्षया विंशतिगुणाधिक्यमुच्यमान-मिन्द्रकामापेक्षया दशगुणोमाद्यपेक्षया षण्महिषीणां द्विगुणाधिकत्व एव घटते नान्यथेति । न च **'तासां मध्ये जाम्बवती प्रधाना'** इति । **'जाम्बवत्या नीलाद्यपेक्षया प्राधान्योक्तेः कथं तासां साम्यम्'** इति वाच्यम् । किञ्चिन्न्यूनाधिकभावस्याविवक्षितत्वेन साम्यव्यवहारोपपत्तेः ।

जाम्बवत्यादिषण्महामहिषीभ्यो गरुडशेषरुद्राः पञ्चगुणाधिकाः।

तत्र मानं तु **'प्रद्युम्नतो विंशगुणाधिकाः स्युः'** इति निर्णयोक्तिः। तथा हि - उक्तरीत्या वारुण्यादीनां शेषादिभ्यो दशावरत्वम् । शेषादिवारुण्यादिमध्यस्थानां षण्महिषीणां वारुण्याद्यपेक्षया द्विगुणाधिकानां शेषादिभ्यः पञ्चावरत्वं सम्पादयतीति सूक्ष्मदृष्ट्याऽऽकलनीयम् । अत्र रुद्रापेक्षया शेषस्य किञ्चित्पदकृताधिक्यं बोध्यम् । **'शर्वादिवन्द्यचरणो यदपाङ्गलेशम्'** इति द्वादशस्तोत्रोक्तेः । गरुडशेषरुद्रेभ्यः सरस्वतीभारत्यौ ब्रह्मवायुभार्ये शतगुणोत्तरे । अत्र **'प्रवहोऽनिरुद्ध इन्द्रोमे रुद्रो वाणी च मारुतः'** इत्यनुव्याख्याने रुद्राद्यपेक्षया वाण्या आधिक्योक्तिः **'शिवादाशा तथैवास्याः मुख्यवायुः शतोत्तरः'** इति छान्दोग्यभाष्ये शिवादिभ्य आशायाः शताधिकत्वोक्तिश्च मानम् ।

सरस्वतीभारतीभ्यां ब्रह्मवायू शताधिकौ । अत्र **'रुद्रो वाणी च मारुतः'** इत्यनुव्याख्यानोक्तिः **'शिवादाशा तथैवास्या मुख्यवायुः शतोत्तरः'** इति छान्दोग्यभाष्यं च मानम् । अत्र मारुतग्रहणेन ब्रह्माऽपि गृह्यते । **'ततो मुख्यवायुस्तदात्मकत्वाद् ब्रह्माऽपि'** इति सुधोक्तेः । वायुपदापेक्षया ब्रह्मपदस्य किञ्चिदाधिक्यं बोध्यम् । **'वायुत्वे किञ्चिदूनता'** इति तृतीयतात्पर्योक्तेः।

ब्रह्मवायुभ्यां लक्ष्मीः कोटिगुणोत्तमा । तदुक्तमुपासनापादीयानुव्याख्याने - **'एतेभ्योऽभ्यधिका श्रीस्तु सदा मुक्ता विशेषतः'** इति । कोटिगुणाधिकत्वे तु बृहद्भाष्यं मानम् - **'हिरण्यगर्भा येऽतीता ये भाव्या यश्च वर्तते । सर्वे विष्णुवशा नित्यं विमुक्तेरप्यनन्तरम् । एतेभ्यः श्रीस्तु मुक्तेभ्यो गुणैः कोटिगुणोत्तरा'**

इति । तथा **'विष्णोः प्रियत्वे तद्भक्तौ तज्ज्ञाने च श्रियस्तु ते। मुक्ता अप्यवरा नित्यं सर्वे कोटिगुणेन च'** इति । ऋग्भाष्येऽपि श्रीब्रह्मवाय्वादिप्रकरणे - **'अनन्तकोटिशतकदशार्धाद्यंशतः क्रमात्'** इति ।

लक्ष्म्याः लक्ष्मीपतिरनन्तगुणोत्तमः । तदुक्तं गीताभाष्ये - **'विष्णुमाहात्म्यलेशस्य विभक्तस्य च कोटिधा । पुनश्चानन्तधा तस्य पुनश्चापि ह्यनन्तधा । नैकांशसममाहात्म्याः श्रीशेषब्रह्म-शङ्कराः'** इति । परमात्मा तु तारतम्यान्तग एव न तु ततोऽधिकः कश्चन । **'सा काष्ठा सा परा गतिः'** इति श्रुतेः । **'तत्समो नास्ति परमो हरिरेव न चापरः'** इत्यनुव्याख्यानोक्तेश्च ।

अत्र विक्षिप्योक्तस्य सङ्ग्रहायानुव्याख्यानमेव पठ्यते ।

**'उषाः स्वाहा च पर्जन्यो मित्रोऽग्निर्वरुणो विधुः ।**
**प्रवहोऽनिरुद्ध इन्द्रोमे रुद्रो वाणी च मारुतः ।**
**उत्तरोत्तरतश्चैते गुणैः सर्वैश्च मुक्तिगाः ।**
**सूर्यधर्मौ यथा सोमो मनुर्दक्षो बृहस्पतिः ।**
**शचीरतिश्चानिरुद्धसमास्तारा च मित्रवत् ।**
**सोमवच्छतरूपा तु प्रसूतिर्वह्निवद्विराट् ।**
**पर्जन्यवद् वारुणी च तथा सञ्ज्ञा च रोहिणी ।**
**धार्मी च मित्रवत्त्वेव प्रावही परिकीर्तिता ।**
**मित्रपर्जन्यमध्यस्थावश्विनौ विघ्नवित्तपौ ।**
**भृगुरग्निसमो मित्रतन्मध्ये ब्रह्मपुत्रकाः ।**
**वरुणाग्न्यन्तरा तत्र नारदः प्राय इन्द्रवत् ।**

**कामः सुपर्णी चोमावद् वीन्द्रो रुद्रवदीरितः ।**
**निर्ऋतिर्मित्रसदृशो विश्वामित्रः कसूनुवत् ।**
**वैवस्वतो मनुश्चाश्विपश्चादन्ये ततोऽवराः ।**
**च्यवनोचथ्यवैन्याश्च शशिबिन्दुश्च हैहयः ।**
**तद्वच्च विप्रराजन्यविशेषोऽत्रापि कश्चन ।**
**तद्वत्प्रियव्रतश्चापि तदन्याः शतदेवताः ।**
**पर्जन्यमित्रान्तराले तदन्ये तु ततोऽवराः ।**
**एतेभ्योऽभ्यधिका श्रीस्तु सदा मुक्ता विशेषतः ।**
**तत्समो नास्ति परमो हरिरेव न चापरः' ।। इति ।**

ननु **'उमा यावदनंतांशान् पूर्वदृष्टेभ्य एव तु । विशेषान् वासुदेवस्य पश्चादुक्ता विचक्षते'** इति ज्ञानपादीयानुव्याख्याने उमापर्यन्तं रमाद्यपेक्षया विरिञ्चादीनामनन्तन्यूनत्वोक्तेर्हरिभक्ति-तत्प्रियत्वयोरपि ज्ञानानुसारित्वेन अनन्तन्यूनत्वस्य वक्तव्यत्वात् । एतत्त्रितयानुसारेणाऽनन्दादिसर्वगुणानामप्यनन्तांशन्यूनत्वावश्यं-भावात्कथं कोटिगुणत्वदशगुणत्वमवरतायामुक्तमिति चेदुच्यते । भवत्येवोमापर्यन्तं ज्ञानभक्तिहरिप्रियत्वेष्वनन्तांशन्यूनत्वम् । न चैवमानन्दादिष्वपि तदनुसारेणानन्तांशन्यूनत्वं स्याद् इति वाच्यम्। **'भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति'** इति सूत्रतद्भाष्या-नुसारेणोपास्यसर्वगुणेषु प्रत्येकं पूर्णत्वस्योपास्यतया पूर्तिज्ञाना-वश्यम्भावात् । आनन्दादिगुणपरिमाणस्य पूर्तिज्ञानानुसारित्वेन पूर्तिज्ञानस्य च **'शब्दोऽनुमा तथैवाक्षो योग्यताभेदतः सदा । ब्रह्मादीनामेकमर्थं बहुधा दर्शयन्ति हि । अतः पूर्णत्वमीशस्य नानैवैषां प्रदृश्यते । अतः फलस्य नानात्वं नानैवोपासनं यतः'**

इति सूत्रभाष्योदाहृतप्रमाणानुरोधेन योग्यतानुसारितया कोट्या-द्यंशन्यूनत्वेनाऽनन्दादिगुणेष्वपि कोट्यादिन्यूनत्वोपपत्तेः । न चैव-मनन्तभगवद्विशेषज्ञानाङ्गीकारवैकल्यप्रसङ्गः । **'नैव सर्वगुणाः सर्वैरुपास्या मुक्तिभेदतः'** इति प्रमाणेनानन्तगुणज्ञानस्यापि यथा-योग्यानन्दलाभार्थत्वात् । **तस्माज्ज्ञानभक्त्यादिकं विहायाऽनन्दादिष्वेव कोटिशतादिन्यूनत्वम्** । अथवा । उदाहृतानुव्याख्याने **'अनन्तांशान् विचक्षते'** इति ज्ञाने एवानन्तांशन्यूनत्ववचनाज्ज्ञानव्यतिरिक्तसर्व-गुणेषु युक्तम् । न चैवं **'विष्णोः प्रियत्वे तद्भक्तौ तज्ज्ञाने'** चेत्यादि बृहद्भाष्येण **'यथाऽऽनन्दे तथा ज्ञानेन'** इत्यादि तैत्तिरीय-भाष्येण च विरोध इति वाच्यम् । निरवकाशानुव्याख्यानानुसारेण तत्र कोट्यादिशब्दस्य ज्ञानांशेऽनन्तार्थत्वेनाविरोधात् ।

केचित्तूदाहृतानुव्याख्याने 'विशेषान् वासुदेवस्य' इति विशेष-पदप्रयोगबलेन भगवदीयगुणगतविशेषज्ञान एवानन्तांशन्यूनत्वं गुणादिज्ञाने तु कोट्यादिन्यूनत्वमेवेत्याहुः ।

अपरे तूक्तरीत्या ज्ञानादिगुणानामनन्तांशन्यूनत्वात्तदनुसारित्वा-च्चेतरगुणानां पूर्तिज्ञानस्यापि कोट्यादिन्यूनत्वस्य स्पष्टमप्रमितत्वेन तत्राप्यनन्तांशन्यूनत्वसम्भवादुमापर्यन्तं सर्वेष्वपि गुणेष्वंनतांशन्यूनत्व-मेव । बृहद्भाष्यादिगतकोट्यादिशब्दास्त्वनन्तपराः । उमामारभ्य तु शताद्यवरत्वमिति मन्यन्त इत्यलम् ।

अत्र केचित् - वैवस्वतमनोः सप्तर्षिसाम्यं न मन्यन्ते । तथा गङ्गापर्जन्याद्युत्तमत्वं कर्मजदेवानां न मन्यन्ते । किं तु पुष्करावर-त्वमेव । तथा हि भाष्ये - **'क्षितिपा मनुष्यगन्धर्वा देवाश्च**

**पितरश्चिराः । आजानजाः कर्मजाश्च तात्विकाश्च शचीपतिः। रुद्रो ब्रह्मेति क्रमशस्तेषु चैवोत्तरोत्तराः । नित्यानन्दे च भोगे च ज्ञानैश्वर्यगुणेषु च । सर्वे शतगुणोद्रिक्ताः पूर्वस्मादुत्तरोत्तरम्' इति** । पुष्करान्ततात्विकदेवापेक्षया कर्मजदेवानां शतावरत्वमुक्तम्। तत्कथं गङ्गापर्जन्यादिपुष्करान्तदेवोत्तमत्वम् । तथा **'शतावराश्च देवेभ्यः कर्मदेवाः'** इति बृहद्भाष्ये कर्मजदेवानां देवशब्दवाच्य-पुष्करान्तदेवावरत्वमुक्तम् । तथा तैत्तिरीयभाष्ये - **'आजानदेवतास्ता हि ताभ्योऽग्र्याः कर्मदेवताः । बल्याद्याः अन्तरा प्राप्तदेवताः कर्मदेवताः । ताभ्यश्च तात्विका देवाः सृष्ट्यादौ देवताङ्गताः । तेभ्यो दक्षश्चेन्द्रनामेति पुष्करादिदेवाधमत्वमुक्तं कर्मजदेवानाम्'**। तथा गीतातात्पर्येऽपि - **'भूपा मनुष्यगन्धर्वा देवाः पितर एव च। आजानेयाः कर्मदेवास्तत्वरूपाः पुरन्दरः । शिवो विरिञ्च इत्येते क्रमाच्छतगुणोत्तराः'** इति पुष्करान्ततत्त्वाभिमानिभ्यः कर्मजदेवानां शतावरत्वमुक्तम् ।

किञ्च पुष्करान्तदेवानां तत्त्वाभिमानित्वेन कर्मजदेवानां तत्त्वा-भिमानित्वाभावेन च पर्जन्याद्युत्तमत्वमयुक्तम् । अपि च 'सृष्ट्यादौ देवतां गताः' इति पुष्करान्तदेवानामादिसृष्टौ जातत्वेन कर्मजाना-मन्तराप्राप्तदेवत्वेन च पुष्करान्तावरत्वमेव युक्तम् ।

किञ्च कार्तवीर्यप्रियव्रतादीनां स्वायम्भुवमन्वन्तर एव देहादुत्क्रम्य गतत्वेन पुष्करान्तदेवानां च प्रलय उत्तमदेवताप्रवेशद्वारा देह-लयवत्त्वेनोत्तमतया कर्मजावरत्वमयुक्तम् ।

किञ्च पुष्करान्तदेवानां सांशजीवत्वेन निरंशप्रियव्रताद्यधमत्वं

कथं स्यात् । किञ्च द्वितीयस्कन्धतात्पर्ये **'स्वोत्पत्त्यङ्गेषु देवानामन्येषां पादमूलतः । मुक्तिस्तु विहिता विष्णोः निर्दिष्टेषु यथावचः'** इति पुष्करान्तदेवानामङ्गसायुज्यरूपमुक्तिफलमुक्त्वा **'भेजे खगेन्द्रध्वजपादमूलम्'** इति परीक्षितः पादमूलमुक्तिरभिहिता । तत्समानन्यायेन प्रियव्रतादीनामपि पादमूलमुक्तिरेव । तत्कथं पुष्कराद्युत्तमत्वं कर्मजदेवानाम् ।

किञ्चैकादशस्कन्धतात्पर्ये **'महिष्योष्टौ विना यास्ताः कथिताः कृष्णवल्लभाः । ताभ्यः सहस्रसमिता यशोदा नन्दगेहिनी । ततो ह्यभ्यधिका देवी देवकी भक्तितस्ततः । वसुदेवस्ततो जिष्णुस्ततो रामो महाबलः'** इत्याजानजदेवतासमानाग्निपुत्रात्मककृष्णवल्लभाभ्यो यशोदायाः सहस्रगुणोत्तमत्वमुक्तम् । तच्च पर्जन्यमित्रान्तरालिकत्वे कर्मजदेवानामनुपपन्नं स्यात् । तथा हि ।। आजानजदेवेभ्यः कर्मजदेवाः शतोत्तरा इति हि तेषां पक्षः । कर्मजेभ्य उक्तशेषशतस्थानामेव किञ्चिदाधिक्यम् । तदन्तर्गतद्रोणनामकवस्ववताररूपनन्दगोपस्यापि किञ्चिदाधिक्यमेव । तथा च यशोदायाः सहस्रोत्तमत्वे स्वभर्त्रपेक्षया आधिक्यं स्यात् । अतो बहुबाधकसद्भावात्साधकाभावाच्च न कर्मजदेवानां गङ्गापर्जन्याद्युत्तमत्वमिति ।

**अत्रोच्यते** । पर्जन्यादिपुष्करान्तदेवापेक्षया कर्मजदेवानामुत्तमत्वमङ्गीकर्तव्यमेव । न च 'आजानजाः कर्मजाश्च तात्त्विकाः' इत्याद्युदाहृतप्रमाणेषु देवशब्दस्य पुष्करान्तदेवपरत्वात्कथमुत्तमत्वमिति वाच्यम् । देवशब्दस्य पुष्करान्तदेवपरत्वे मानाभावात् ।

प्रत्युत देवशब्दस्य कर्मजदेवापेक्षया शतगुणाधिकबृहस्पत्यादिपरत्वस्यैव वक्तव्यत्वात् । अत एव गीतातात्पर्यटीकायां तत्त्वरूपास्तत्त्वाभिमानिनो बृहस्पत्यादय इत्युक्तम् । यदप्युक्तं पुष्करान्तदेवानां तत्त्वाभिमानित्वं न कर्मजदेवानामिति । तदप्ययुक्तं पुष्करान्तदेवानां तत्त्वाभिमानित्वे प्रमाणाभावात् । न च षट्प्रश्नभाष्ये 'ततः पर्जन्य उद्भूतः स्वाहाऽतो मन्त्रदेवता । उदकात्मको बुधस्तस्मादुषा नामात्मिका ततः । ततः शनिः पृथिव्यात्मा कर्मात्मा पुष्करः स्मृतः' इति बुधादीनामुदकादितत्त्वाभिमानित्वमुक्तमिति वाच्यम् । अण्डान्तर्वर्त्युदकाभिमानित्वोपपत्त्याऽण्डाद्बहिर्विद्यमानोदकाद्यभिमानित्वाभावात् । अण्डाद्बहिर्विद्यमानानामेवोदकादीनां 'महानहम् । बुद्धिर्मनः खानि दशमात्रा भूतानि पञ्च च' इति तत्त्वसङ्ख्यानादौ तत्त्वशब्देन व्यवहारात् । षट्प्रश्नभाष्येऽपि नामकर्मसमभिव्याहारेणोदकादीनां तत्त्वरूपत्वाभावात् ।

किञ्च मरीच्यादीनामपि देवशब्दवाच्यत्वाभावेन तत्त्वाभिमानित्वाभावेन च पुष्करावरत्वापातात् । यच्चोक्तं 'सृष्ट्यादौ देवतां गताः' इति । तन्न । पर्जन्यादिपुष्करान्तानामादिसृष्टावुत्पत्तौ मानाभावात् । प्रियव्रतादीनामपि मूलरूपेणाऽदिसृष्ट्यङ्गीकारे बाधकाभावात् । रूपान्तरेण भूमावुत्पद्य कर्मणा देवत्वप्राप्तिसम्भवाच्च । यदप्युक्तं प्रियव्रतादीनां देहलयाभावादिति । तन्न । विंशन्ति ये मनवो राजमुख्या मनुं प्रविश्यात्र गता महेन्द्रम्' इत्यनुव्याख्याने पृथुप्रियव्रतादीनामपि लयोक्तेः । न च 'वर्णाश्रमाचाररता मनुष्या धर्मं मनुं सोऽपि समेति काले' इत्यत्र मनुष्याणां यथा धर्मे प्रवेशमात्रं तथा प्रियव्रतादीनामपि प्रवेशमात्रमुक्तमिति वाच्यम् । पूर्वत्र

'भृग्वादयो दक्षमवाप्य तेन प्राप्येन्द्रमेतेन सुपर्णपत्नीम्' इति भृग्वादीनां लयस्योक्तत्वेन तथा' आकाश उर्वी च गुरुं प्रविश्य तेनैव यातः पुरुहूतदेवम्' इत्युत्तरत्र लयस्यैवोक्तत्वेन सन्दंशन्यायेन तन्मध्यपतितानामपि लयस्यैव वक्तव्यत्वात् । न चैवं मनुष्याणामपि धर्मे लयः स्यादिति वाच्यम् । सुधासन्न्यायरत्नावल्योरुक्तस्यापवादमाह वर्णाश्रमेतीत्यवतारिकां दत्वा, 'एतच्च प्रसङ्गादुक्तम्। मनुष्योत्तमानामुत्क्रान्तिमत्त्वादित्युक्तत्वात् ।

किञ्च पर्जन्यादिपुष्करान्तानां देहलयसद्भावे प्रमाणाभावः । न च 'उत्क्रम्य मानुषा मुक्तिं यान्ति देहक्षयात्सुराः' इत्यणुभाष्ये देवानां सर्वेषां लयोक्तिरिति वाच्यम् । तत्र देवशब्दस्याऽजानजदेवपर्यन्तदेवपरत्वेन तदुत्तमकर्मजदेवपरत्वस्यापि सम्भवात् । न च तत्र देवशब्दस्य पुष्करान्तदेवमात्रपरत्वमिति वाच्यम् । साधकाभावात् । शतस्थदेवमात्रपरत्वमित्यपि वक्तुं शक्यत्वात् । न च प्रियव्रतादीनां स्वायम्भुवप्रलय एव देहनाशात्कथं तेषां प्रलये देहलय इति वाच्यम् । मूलरूपगतदेहस्य प्रलये लयाङ्गीकारात् । न च तेषां मूलरूपे प्रमाणाभाव इति वाच्यम् । तर्हि प्रतिदिनं प्रियव्रतादीनां भिन्नभिन्नानामेवोत्पत्तिरित्यस्याप्रामाणिकस्य स्वीकारापत्तेः । यदपि चोक्तं पुष्करान्तदेवानामेव सांशजीवत्वं न कर्मजानामिति । तदप्यसारम् । 'न देवानां न देवीनां सामस्त्येन जनिर्भुवि । अंशांशेनैव जायन्ते सर्वे त्वाजानजादयः' इति प्रथमतात्पर्ये आजानजदेवमारभ्य तदवराणामेवानंशत्वस्योक्तत्वेनाऽजानजदेवोत्तमकर्मजदेवानां सांशत्वे बाधकाभावात् । किञ्च बृहद्भाष्ये

‘तुम्बुरुप्रमुखा ये च तथोर्वश्यादिका अपि’ इत्यारभ्य ‘कर्मदेवगणा अष्ट गन्धर्वास्तत्परे शतम्’ इति तुम्बुर्वाद्यष्टगन्धर्वाणां कर्मजदेवता-साम्यमुक्तम् । तस्यैव तुम्बुरोर्निर्णयेंऽश उक्तः । ‘अंशेन पुंस्त्व-भावार्थं पूर्वदेहे समास्थितः’ इत्यादिना शिखण्डिदेहप्रवेशार्थम् । तथा च तुम्बुरुसमानकर्मजदेवानामप्यंशसिद्धेः । यदप्युक्तं पाद-मूलमुक्तेः स्वोत्पत्त्यङ्गसायुज्यमुक्त्यपेक्षया न्यूनत्वमिति । तद्युक्त-मेव । अथापि पुष्करान्तदेवानां स्वोत्पत्त्यङ्गानां क्वाप्यनुक्त-त्वेनेनाङ्गसायुज्यमुक्तौ मानाभावात् । सूर्येण सह प्रतिसूर्यतया-गमनरथावृत्त्या सप्तसमुद्रनिर्माणसप्तद्वीपसप्तसमुद्राधिपत्यवतां प्रिय-व्रतादीनामुत्तमत्वेन तदपेक्षयाऽत्यन्तावरस्याल्पसामर्थ्यवतः परीक्षितः पादमूलमुक्तावपि तन्न्यायस्य प्रियव्रतादिष्वनुचितत्वात् ।

यच्चोक्तं **‘ताभ्यः सहस्रगुणिता यशोदा नन्दगेहिनी’** इत्यत्र भर्तुरधिकत्वं यशोदायाः स्यात् इति । तदपि न । सहस्रशब्दस्य यथायोग्यबहुगुणपरत्वात् । अन्यथा भवत्पक्षेऽपि कर्मजदेवानां पुष्करावरत्वे द्विशताधिक्यापत्त्या सहस्रसङ्ख्याया अप्राप्तेः । तस्मात्कर्मजदेवानां पुष्कराद्युत्तमत्वेन न किञ्चिद् बाधकम् । यच्चोक्तं साधकाभावादिति । तदप्ययुक्तम् । **तदन्ये तु ततोऽवराः । च्यवनोचथ्यवैन्याश्च शशबिन्दुश्च हैहयः । तद्वच्च विप्रराजन्य-विशेषोऽत्रापि कश्चन । तद्वत्प्रियव्रतश्चापि तदन्याः शतदेवताः। पर्जन्यमित्रान्तराले तदन्ये तु ततोऽवराः** इत्यनुव्याख्यानस्य तथा ‘पर्जन्यादुत्तमा मित्रादवराः’ इति सुधायाश्च मानत्वात् । अधिकं **तु गुरुपादकृततारतम्यटीकायां द्रष्टव्यम्**।

यदपि वैवस्वतमनुरपि पुष्कराधम इति । तदपि न । **विश्वामित्रः कसूनुवत् । वैवस्वतो मनुश्च इत्यनुव्याख्यानविरोधप्रसङ्गात् । न च 'वैवस्वतो मनुश्चाश्विपश्चाद्'** इत्यत्र वैवस्वतो मनुश्चाश्विपश्चादित्युत्तरत्रान्वय इति वाच्यम् । **'वैवस्वतो मनुश्च कसूनुवदि'ति सम्बन्ध** इति सुधाविरोधप्रसङ्गात् । किञ्च वैवस्वतमनोरश्विपश्चात्तनत्वे पर्जन्याद्यपेक्षयोत्तमत्वापत्त्या पुष्करावरत्वालाभात्। न चाश्विपश्चादित्यस्याश्विभ्यामव्यवहितानन्तर्यं न विवक्षितम् । किन्तु व्यवहितानन्तर्यम् । तथा च पुष्कारावरत्वलाभ इति वाच्यम्। असङ्गतस्य पुष्करावरदेवस्य मध्ये कथने मानाभावात् । अन्यथाऽऽजानजानामपि मध्ये कथनप्रसङ्गात् । किञ्च गुरूपदेशगम्यतारतम्ये महात्मभिष्टीकाकारैः सम्यगुपपादितेऽनाश्वासे तद्द्रोहप्रसङ्गः । तदुक्तं कैश्चित् । **'वैवस्वतो मनुश्चैव विष्ण्वावेशी ततोऽधिकः'** इति बृहद्भाष्ये वैवस्वतमनोर्विष्ण्वावेशनिमित्ताधिक्योक्तेर्न स्वरूपाधिक्यम् । सुधायामपि कर्मजदेवानां विष्ण्वावेशनिबन्धनमेव तारतम्यकथनमित्याहुः । तन्न । इन्द्रकामादावपि विष्ण्वावेशस्याऽविशिष्टत्वेन स्वरूपतारतम्यस्यानिर्णयापत्तेरित्यलम् ।

**।। इति वेदगर्भानन्तपद्मनाभाचार्यकृतः तारतम्यसारः ।।**

## 27. महाभाष्यरघूत्तमाचार्यकृतम्

# अणुतारतम्यस्तोत्रम्

श्रीविष्णुः सकलोत्तमोऽमितगुणोऽनन्तावराऽतो रमा
तस्याः कोटिगुणाधमौ विधिहरी ताभ्यां शतोने गिरौ ।
वीशाहीशशिवास्तथैतदवरा वीशादिपञ्चावराः
षड्विष्णोर्दयिता विपादिवनिता युग्मावराः षट्कतः
।। १ ।।

सौपर्ण्यादिदशावरौ हरिहयानङ्गौ तथा तैजस -
स्ताभ्यां कामरतीशचीगुरुमनूदक्षस्तथा तैजसात् ।
तेभ्यः पञ्चगुणावरो मरुदितो युग्मावरा मानवी
चन्द्रार्कौ यम एभ्य ऊन उदधिः स्यात्पादपादार्धतः ।। २ ।।

वारीशादवरस्तु नारद इतो वह्निर्भृगुः कप्रिया
पादोना सलिलेशतो विधिसुता गाधेयवैवस्वतौ ।
एते वन्ह्यवरा नवानळयुगन्यूनास्ततो मित्रका -
स्तारा निर्ऋतिभूतवायुदयिताश्चत्वार एते समाः ।। ३ ।।

विष्वक्सेनगणेशदस्रधनपाश्शेषाः शतस्थाः सुराः
मित्रोना नवकोटिदेवगणगा उक्तेतरे केचित् ।
उक्तान्ये मनवोऽपराश्च्यवनकोचथ्यौ च पृथ्वादयो
उक्ताः कर्मजदेवता ऋषिमुखा ज्ञेयाः शतस्थाः सुराः
।। ४ ।।

पर्जन्यो वरुणार्कसोमशमनानङ्गप्रिया मित्रतो
युग्मोना कतिचिच्च देवगणगाः पर्जन्यमु(ख्या)वराः ।
पर्जन्याद् द्विगुणावराऽनलसती तस्या बुधोऽस्मादुषा
स्वाहातस्तु दशावरा शनिरतो तत्कर्मकः पुष्करः ।। ५ ।।

तन्न्यूनाकृतिदेवता शतगुणन्यूनास्ततोऽजानजाः
तन्न्यूनाः पितरस्तथैतदवरास्ते देवगन्धर्वगाः ।
तन्न्यूनाः शतभागतो मनुजगन्धर्वास्ततो भूमिपाः
तावन्तो मनुजोत्तमाः शत इमे रक्षन्तु मां सर्वदा ।। ६ ।।

विष्णुश्रीर्विधिगीर्गिरीशगिरिजादेx xहंप्राणका
स्वर्काः पाx xमित्रवारिपरिसत्स्वाहोषतत्पुष्कराः ।
आजानाभिध(देवता) त्र्यमरगन्धर्वास्ततो भूमिपाः
मध्यस्थांश्च भजामि सन्ततमहं (सु)ज्ञानभक्त्याप्तये ।। ७ ।।

श्रीमत्पूर्णमतिप्रवोढहृदयप्र(स्थाप)नप्रोल्लस -
त्रैलोक्ये(श)जयार्यसत्कृतिसुधाग्रन्थादिसद्वर्त्मना ।
व्याख्याऽऽकार्यणुतारतम्यनमनस्येयं बुधैः सेव्यतां
श्रीविष्णु(र्गुरुरा)जहृत्कमलगः प्रीतोऽस्तु मे विट्ठलः ।। ८ ।।

**।। इति महाभाष्यरघूत्तमाचार्यविरचितं**
**अणुतारतम्यस्तोत्रं सम्पूर्णम् ।।**

# 28. गोपालाचार्यकृतः

# तारतम्यस्तोत्रप्रकाशः

श्रीमन्मध्वमते हरिः परतरः सत्यं जगत्तत्त्वतो
भेदो जीवगणा हरेरनुचराः नीचोच्चभावं गताः ।
मुक्तिर्नैजसुखानुभूतिरतुला भक्तिस्तु तत्साधनं
ह्यक्षादित्रितयं प्रमाणमखिलाम्नायैकवेद्यो हरिः ।। १ ।।

अहोभाग्यमहोभाग्यं मध्वमार्गानुवर्तिनाम् ।
दैवतं श्रीपतिर्येषां यद्गुरुर्भारतीपतिः ।। २ ।।

जीवेशयोर्भिदा चैव जीवभेदः परस्परम् ।
जडेशयोर्जडानां च जडजीवभिदा तथा ।। ३ ।।

पञ्चभेदा इमे नित्याः सर्वावस्थासु सर्वदा ।
मुक्तानां च न हीयन्ते तारतम्यं च सर्वशः ।। ४ ।।

नमोऽस्तु तात्त्विका देवा विष्णुभक्तिपरायणाः ।
धर्ममार्गे प्रेरयन्तु भवन्तः सर्व एव हि ।। ५ ।।

पृथ्वीमण्डलमध्यस्थाः पूर्णबोधमतानुगाः ।
वैष्णवा विष्णुहृदयास्तान्नमस्ये गुरून् मम ।। ६ ।।

प्रथमो हनुमान्नाम द्वितीयो भीम एव च ।
पूर्णप्रज्ञस्तृतीयोऽसौ भगवत्कार्यसाधकः ।। ७ ।।

**विष्णुः सर्वोत्तमोऽथ प्रकृतिरथ विधिप्राणनाथावथोक्ते ।**
**व्रह्माणी भारती च द्विजफणिपमृडाश्च स्त्रियः षट् च विष्णोः।।**

ॐ विष्णुः सर्वोत्तमः। सकलचेतनाचेतनेभ्यः श्रेष्ठः ।। १ ।।

**।। इति प्रथमकोटिः ।।**

अथ अनन्तरं प्रकृतिः महालक्ष्मीः । विष्ण्वपेक्षया न्यूना । चतुर्मुखरुद्रादिकापेक्षया उत्तमा ।। २ ।।

**।। इति द्वितीयकोटिः ।।**

अथ अनन्तरं विधिप्राणनाथौ । चतुर्मुखमुख्यप्राणौ । इमौ महालक्ष्म्यपेक्षया न्यूनौ । रुद्रादिकापेक्षया उत्तमौ ।। ३ ।।

**।। इति तृतीयकोटिः ।।**

अथ अनन्तरं ब्रह्माणी चतुर्मुखस्य पत्नी सरस्वती । भारती मुख्यप्राणपत्नी । उक्ते ।। ४ ।।

**।। इति चतुर्थकोटिः ।।**

च अनन्तरं द्विजफणिपमृडाः द्विजः गरुडः । फणिपः शेषः । मृडः शिवः ।। ५ ।।

**।। इति पञ्चमकोटिः ।।**

च अनन्तरं विष्णोः षट्स्त्रियः पत्न्यः । जाम्बवती कालिन्दी सत्या मित्रविन्दा भद्रा लक्षणा ।। ६ ।।

**।। इति षष्ठकोटिः ।।**

**सौपर्णीवारुणीपर्वतपतितनया चेन्द्रकामावथास्मान् ।**
**प्राणोऽथो योऽनिरुद्धो रतिमनुगुरवो दक्षशच्यौ च पान्तु**
**।। १ ।।**

रुक्मिणीसत्यभामे लक्ष्म्याः यद्रूपद्वयं श्रीदेवीभूदेवीसञ्ज्ञकं तदवतारौ । अतस्ते द्वितीयकोटिप्रविष्टे ।। एवमेव अष्टौ या मुख्यगोप्यः तासु या राधा सा रुक्मिणी । या चन्द्रावली सा सत्यभामा । याः षड्गोप्यः ताः जाम्ववत्यादिवत् । एवमेव रामकृष्णपरशुरामनृसिंहादयो ये विष्णोरवताराः ते प्रथमकोटयः । हनुमान् भीमसेनः मध्वाचार्यः मुख्यप्राणावताराः । तृतीयकोटयः। एवमग्रेऽपि । च अनन्तरं सौपर्णी गरुडपत्नी । वारुणी शेषपत्नी । पर्वतपतितनया पार्वती ।। ७ ।।

**।। इति सप्तमकोटिः ।।**

च अनन्तरम् इन्द्रः । कामः मदनः ।। ८ ।।

**।। इति अष्टमकोटिः ।।**

अथ अनन्तरं प्राणः । एकोनपञ्चाशन्मरुत्सु मूलप्राण इति जयतीर्थाचार्यशिष्यश्रीनिवासाचार्याः ।। 'तैजसाहङ्कारादुत्पन्नः द्वितीयः प्राणः' इति सुधायाम् ।। ९ ।।

**।। इति नवमकोटिः ।।**

अथ अनन्तरं यः प्रसिद्धः अनिरुद्धः कामपुत्रः । रतिः कामपत्नी। मनुः स्वायम्भुवः । गुरुः बृहस्पतिः । दक्षः । शची इन्द्रपत्नी ।।10।।

।। इति दशमकोटिः ।।

**त्रायन्तां नः सदैते प्रवह उत यमो मानवी चन्द्रसूर्यौ चाप्पोऽथो नारदोऽथो ।**

अस्मान् सर्वान् । त्यदादीनि सर्वैर्नित्यमित्येकशेषः । सदा पान्तु रक्षन्तु । स्रग्धरावृत्तम् । म्रौभ्नौयौय्त्रिसप्तकाः । इति छन्दःसूत्रात्। सप्तसप्तसु यतिः । यतिर्विच्छेद इति सूत्रे क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत् । यथा 'पर्याप्तं तप्तचामीकर-कटकतटेश्लिष्टशीतेतरांशौ' इति हलायुधवृत्तौ । अतो वारुणीपर्वत इति पदमध्ये यतिर्न दोषाय ।

एते वक्ष्यमाणाः । नः अस्मान् सर्वान् पूर्ववदेकशेषः । त्रायन्तां रक्षन्तु । अनन्तरं प्रवहः । मरुत् कोणाधिपो वायुः । 'मरीचिनामा-न्तरवान् प्रवहो मुख्यवायुजः । कोणाधिपः स एवोक्तो नासिक्यो भौतिकस्तथा । मुमुक्षुभिर्गम्यतया सूत्रे प्रोक्तोऽर्चिरादिषु । अतिवा-हिक इत्युक्तो गुरोः पञ्चगुणाधमः' । इति छलार्याचार्यकृततार-तम्यकौस्तुभे । सप्तवायुषु आद्य इति श्रीनिवासाचार्याः ।। ११।।

।। इति एकादशकोटिः ।।

उत अनन्तरं यमः । मानवी । स्वायम्भुवपत्नी शतरूपा । चन्द्रः । सूर्यः ।। १२ ।।

**।। इति द्वादशकोटिः ।।**

च अनन्तरम् अप्पः । अपः उदकानि पाति रक्षति । कप्रत्ययः। वरुणः ।। १३ ।।

**।। इति त्रयोदशकोटिः ।।**

अथो अनन्तरं नारदः ।। १४ ।।

**।। इति चतुर्दशकोटिः ।।**

**भृगुरनलकुलेन्द्रः प्रसूतिश्च नित्यम् । विश्वामित्रो मरीचिप्रमुख विधिसुताः सप्तवैवस्वताख्याश्चैवं वै मित्रतारे वरनिर्ऋतिनामा प्रावही च प्रसन्नाः ।।**

अथो अनन्तरं भृगुः । अनलकुलेन्द्रः । अनलानाम् अग्नीनां कुलं समुदायः तस्य इन्द्रः स्वामी यो मूलाग्निः सः । प्रसूतिः दक्षपत्नी ।। १५ ।।

**।। इति पञ्चदशकोटिः ।।**

च अनन्तरं विश्वामित्रः । मरीचिप्रमुखविधिसुताः मरीचिः। अत्रिः । अङ्गिराः । पुलस्त्यः । पुलहः । क्रतुः । वसिष्ठः एते विधेश्चतुर्मुखस्य सुताः सप्त वैवस्वताख्यः वैवस्वतमनुः ।। १६ ।।

**।। इति षोडशकोटिः ।।**

च अनन्तरम् एवं वक्ष्यमाणप्रकारेण वै निश्चयेन मित्रः द्वादशादित्यान्तःपाती आद्यः । तारा बृहस्पतिपत्नी । वरनिर्ऋतिनामा । वरः श्रेष्ठः। निर्ऋतिः ---- कोणपः राक्षस-देहः सात्त्विको जीवः । प्रावही प्रवहस्य कोणाधिपस्य वायोः पत्नी ।। १७ ।।

**।। इति सप्तदशकोटिः ।।**

**विष्वक्सेनोऽश्विनौ तौ गणपतिधनपावुक्तशेषाः शतस्था देवाश्चोक्तेतरे ये तदवरमनवश्चावनोचथ्यसञ्ज्ञौ । वैन्यो यः कार्तवीर्यक्षितिपतिशशबिन्दुः प्रियादिव्रतोऽथो ।।**

विष्वक्सेनः । वायुपुत्रः । अश्विनौ तौ अश्विनीकुमारौ । गणपतिः हेरम्बः । धनपः कुबेरः । उक्तशेषाश्शतस्था ये देवाः ।

**।। इति अष्टादशीकोटिः ।।**

कर्मदेवाः । इतरा येत्यपपाठः । इतरशब्दस्य सर्वनामत्वात्। तदवरमनवः प्रसिद्धेभ्यः भगवदवतारतापसमनुस्वायम्भुवमनुवैवस्वत-मनुभ्यः अवरे न्यूना एकादशमनवः । च्यावनः च्यवनभार्गवः । उचथ्यः बृहस्पतिपुत्रः । वैन्यः वेनस्य पुत्रः पृथुः । गर्गादित्वाद्यञ्। कार्तवीर्यः सहस्रार्जुनः । क्षितिपतिः शशबिन्दुः । क्षितिपतिसहितः शशबिन्दुः । मध्यमपदलोपीसमासः । 'मर्यादाभिविधौ च य' इत्यत्र यथा तत्सहिताऽभिविधाविति व्याख्यातं शब्दरत्ने । क्षितिपतिः गयः शशबिन्दुः । प्रियशब्दः आदिः यस्य प्रियव्रतः ।। १९ ।।

**।। इति एकोनविंशतिकोटिः ।।**

उत अनन्तरं यमः । मानवी । स्वायम्भुवपत्नी शतरूपा । चन्द्रः । सूर्यः ।। १२ ।।

**।। इति द्वादशकोटिः ।।**

च अनन्तरम् अप्पः । अपः उदकानि पाति रक्षति । कप्रत्ययः। वरुणः ।। १३ ।।

**।। इति त्रयोदशकोटिः ।।**

अथो अनन्तरं नारदः ।। १४ ।।

**।। इति चतुर्दशकोटिः ।।**

**भृगुरनलकुलेन्द्रः प्रसूतिश्च नित्यम् । विश्वामित्रो मरीचिप्रमुख विधिसुताः सप्तवैवस्वताख्याश्चैवं वै मित्रतारे वरनिर्ऋतिनामा प्रावही च प्रसन्नाः ।।**

अथो अनन्तरं भृगुः । अनलकुलेन्द्रः । अनलानाम् अग्नीनां कुलं समुदायः तस्य इन्द्रः स्वामी यो मूलाग्निः सः । प्रसूतिः दक्षपत्नी ।। १५ ।।

**।। इति पञ्चदशकोटिः ।।**

च अनन्तरं विश्वामित्रः । मरीचिप्रमुखविधिसुताः मरीचिः। अत्रिः । अङ्गिराः । पुलस्त्यः । पुलहः । क्रतुः । वसिष्ठः एते विधेश्चतुर्मुखस्य सुताः सप्त वैवस्वताख्यः वैवस्वतमनुः ।। १६ ।।

**।। इति षोडशकोटिः ।।**

च अनन्तरम् एवं वक्ष्यमाणप्रकारेण वै निश्चयेन मित्रः द्वादशादित्यान्तःपाती आद्यः । तारा बृहस्पतिपत्नी । वरनिर्ऋतिनामा । वरः श्रेष्ठः। निर्ऋतिः ---- कोणपः राक्षस-देहः सात्त्विको जीवः । प्रावही प्रवहस्य कोणाधिपस्य वायोः पत्नी ।। १७ ।।

**।। इति सप्तदशकोटिः ।।**

**विष्वक्सेनोऽश्विनौ तौ गणपतिधनपावुक्तशेषाः शतस्था देवाश्चोक्तेतरे ये तदवरमनवश्चावनोचथ्यसञ्ज्ञौ । वैन्यो यः कार्तवीर्यक्षितिपतिशशबिन्दुः प्रियादिव्रतोऽथो ।।**

विष्वक्सेनः । वायुपुत्रः । अश्विनौ तौ अश्विनीकुमारौ । गणपतिः हेरम्बः । धनपः कुबेरः । उक्तशेषाश्शतस्था ये देवाः ।

**।। इति अष्टादशीकोटिः ।।**

कर्मदेवाः । इतरा येत्यपपाठः । इतरशब्दस्य सर्वनामत्वात्। तदवरमनवः प्रसिद्धेभ्यः भगवदवतारतापसमनुस्वायम्भुवमनुवैवस्वत-मनुभ्यः अवरे न्यूना एकादशमनवः । च्यावनः च्यवनभार्गवः । उचथ्यः बृहस्पतिपुत्रः । वैन्यः वेनस्य पुत्रः पृथुः । गर्गादित्वाद्यञ्। कार्तवीर्यः सहस्रार्जुनः । क्षितिपतिः शशबिन्दुः । क्षितिपतिसहितः शशबिन्दुः । मध्यमपदलोपीसमासः । 'मर्यादाभिविधौ च य' इत्यत्र यथा तत्सहिताऽभिविधाविति व्याख्यातं शब्दरत्ने । क्षितिपतिः गयः शशबिन्दुः । प्रियशब्दः आदिः यस्य प्रियव्रतः ।। १९ ।।

**।। इति एकोनविंशतिकोटिः ।।**

**गङ्गापर्जन्यसञ्ज्ञे शशियमदयिते मा विराट् चाशु पान्तु ।।३।।**

अथो अनन्तरं गङ्गा भागीरथी । पर्जन्यः द्वादशादित्यान्तर्गतः पर्जन्याभिमानी । सञ्ज्ञा सूर्यपत्नी । शशियमदयिते शशी तस्य दयिता पत्नी कान्तिः रोहिण्यपरपर्याया तस्याः प्रधानत्वात् । यमदयिता यमपत्नी श्यामला । विराट् ब्रह्माण्डाभिमानिनी अनिरुद्धभार्या । मा माम् । आशु शीघ्रं पातु ।। २० ।।

**।। इति विंशतिकोटिः ।।**

**एभ्योऽन्ये चाग्निजाया च जलमयबुधश्चापि नामात्मिकोषा चैवं भूमौ तथात्मा शनिरपि कथितः पुष्करः कर्मपोऽपि ।**

**येऽथाथो चाप्युतानामिह कथितसुरा मध्यभागे समास्ते**
**विष्ण्वाद्या नः पुनन्तु क्रमगदितमहातारतम्येन युक्ताः ।।४।।**

अनन्तरम् एभ्यः उक्तेभ्यः । अन्या वक्ष्यमाणाः । अग्निजाया अग्निपत्नी स्वाहा ।। २१ ।।

**।। इति एकविंशतिकोटिः ।।**

च अनन्तरं जलमयः जलनियामकः बुधः ।। २२ ।।

**।। इति द्वाविंशतिकोटिः ।।**

च अनन्तरं नामात्मिका नामनियामिका उषा नासत्यपत्नी ।। २३ ।।

**।। इति त्रयोविंशतिकोटिः ।।**

चैवं भूमौ तथात्मा च अनन्तरं तथा पूर्वोक्तप्रकारेण भूमौ भूमिविषये आत्मा नियामकः शनिः शनैश्चरः ।। २४ ।।

**।। इति चतुर्विंशतिकोटिः ।।**

अपि अनन्तरं कर्मपः कर्मणां नियामकः । पुष्करः तत्सञ्ज्ञको देवः कथितः ।। २५ ।।

**।। इति पञ्चविंशतिकोटिः ।।**

अपिशब्दः पादपूरणे इह अस्मिन् सार्धपद्यत्रये ये अथ अथो च अपि उत एषां शब्दानां मध्ये उक्ताः ते समाः क्रमेण --- । उक्तं यत् महातारतम्यं x x x x अव्युत्पन्नः । तस्माद् ब्राह्मणादित्वात् ष्यञ् । तेन युक्ताः विष्ण्वाद्यीनाः पुनन्तु ।। ४ ।।

**वन्दे विष्णुं नमामि श्रियमथ च भुवं ब्रह्मवायू च वन्दे**
**गायत्रीं भारतीं तामपि गरुडमनन्तं भजे रुद्रदेवम् ।**
**देवीर्वन्दे सुपर्णीमहिपतिदयितां वारुणीमप्युमां ताम्**
**इन्द्रादीन् काममुख्यानपि सकलसुरांस्तद्गुरून् मद्गुरूंश्च ।।५।।**

विष्णुं वन्दे । श्रियं नमामि । तद्रूपां भुवं भूदेवीं नमामि । परं ब्रह्मवायू वन्दे । तां प्रसिद्धां गायत्रीं भारतीं अनन्तरं गरुडम् शेषं रुद्रदेवं महादेवं भजे । देवीः षट्विष्णुपत्नीः । सुपर्णीं अहिपतिदयितां शेषपत्नीं वारुणीम् अपि च परम् । तां प्रसिद्धाम् उमाम् । इन्द्रादीन् काममुख्यान् अपि च परं सकलसुरान् ते च ते गुरवः तान् मद्गुरूंश्च वन्दे ।। ५ ।।

**सर्वोत्तमो विष्णुरथो रमा च ब्रह्मा च वायुश्च तदीयपत्नौ ।**
**येऽन्ये च देवाः सततं प्रसन्ना हरौ सुभक्तिं मयि सन्दिशन्तु ।।**

**।। इति तारतम्यस्तोत्रं समाप्तम् ।।**

सर्वोत्तमो विष्णुः । अत एव नारायणाथर्वशीर्षे - 'नारायण एवाग्र आसीत् । न ब्रह्मानेशानः' इत्युक्तम् । नैतादृशी श्रुतिः विष्णोः पुरस्कारेणान्यदेवतोत्थानं प्रलये ब्रवीति । एतदेकवाक्यतया विष्णुं लिङ्गसहिताः शिवादिपदघटिताः श्रुतयः विष्णुपरा एव । नारायणशब्दस्य सञ्ज्ञाशब्दस्य अन्यपरत्वासम्भवात् । शेषं स्पष्टम्। विस्तरस्तु सुधादौ द्रष्टव्यः ।

**।। इति श्रीकरहाटकक्षेत्रवासिमहामहोपाध्याय**
**गोपालाचार्योद्धृतः तारतम्यस्तोत्रप्रकाशः ।।**

## 29. यलमेलिविठ्ठलाचार्यप्रणीतम्

# कक्ष्यातारतम्यम्

प्रथमकक्ष्यास्थिताय सर्वदेवर्ष्यादिभ्यः सर्वैः गुणैश्चोत्तमाय भारतीरमणमुख्यप्राणान्तर्गतश्रीविष्णवे नमः ।। १ ।।

द्वितीयकक्ष्यास्थितायै विष्ण्वपेक्षयाऽनन्तगुणन्यूनायै रमायै नमः ।। २ ।।

तृतीयकक्ष्यास्थिताभ्यां रमापेक्षया सजातीयकोटिगुणन्यून-विजातीयानन्तगुणन्यूनाभ्यां ब्रह्मवायुभ्यां नमः ।। ३ ।।

चतुर्थकक्ष्यास्थिताभ्यां ब्रह्मवाय्वपेक्षया सजातीयशतगुणावर-विजातीयानन्तगुणावराभ्यां सरस्वतीभारतीभ्यां नमः ।। ४ ।।

पञ्चमकक्ष्यास्थितेभ्यो सरस्वतीभारत्यपेक्षया ज्ञानानन्दादिसर्व-गुणैः शतांशन्यूनेभ्यो गरुडशेषरुद्रेभ्यो नमः ।। ५ ।।

षष्ठकक्ष्यास्थिताभ्यो गरुडाद्यपेक्षया पञ्चगुणाधमाभ्यो नीला-भद्रामित्रविन्दाकालिन्दीलक्षणैतत्किञ्चिदधिकजाम्बवतीभ्यो नमः ।। ६ ।।

सप्तमकक्ष्यास्थिताभ्यो जाम्बवत्याद्यपेक्षया द्विगुणाधमसौपर्णी-वारुणीपार्वतीभ्यो नमः ।। ७ ।।

अष्टमकक्ष्यास्थिताभ्यां सौपर्ण्याद्यपेक्षया दशगुणाधमेन्द्रैत-त्किञ्चिन्न्यूनत्वोपेतसनत्कुमारावतारकामाभ्यां नमः ।। ८ ।।

नवमकक्ष्यास्थिताय इन्द्रकामापेक्षया दशगुणाधमाहङ्कारिकप्राणाय नमः ।। ९ ।।

दशमकक्ष्यास्थिताभ्य अहङ्कारिकप्राणापेक्षया दशगुणाधमानिरुद्ध-रतिस्वायम्भुवमनुबृहस्पतिदक्षशचीभ्यो नमः ।। १० ।।

एकादशकक्ष्यास्थिताय अनिरुद्धाद्यपेक्षया पञ्चगुणाधमप्रवहवायवे नमः ।। ११ ।।

द्वादशकक्ष्यास्थितेभ्यो प्रवहापेक्षया द्विगुणाधमयमसोमैतत्किञ्चि-दधिकशतरूपाविवस्वन्नामसूर्येभ्यो नमः ।। १२ ।।

त्रयोदशकक्ष्यास्थिताय यमाद्यपेक्षया पादार्धयुतपादगुणाधम-वरुणाय नमः ।। १३ ।।

चतुर्दशकक्ष्यास्थिताय वरुणापेक्षया किञ्चिदधमनारदाय नमः ।। १४ ।।

पञ्चदशकक्ष्यास्थिताभ्यो नारदापेक्षया किञ्चिद्गुणाधमभृगु-प्रधानाग्निप्रसूतिभ्यो नमः ।। १५ ।।

षोडशकक्ष्यास्थितेभ्यो भृग्वाद्यपेक्षया किञ्चिद्गुणाधमविश्वा-मित्रमरीच्यत्र्यङ्गिरः पुलस्त्यपुलहक्रतुवसिष्ठवैवस्वतमनुभ्यो नमः ।। १६ ।।

सप्तदशकक्ष्यास्थिताभ्यो विश्वामित्राद्यपेक्षया किञ्चिद्गुणाधमेभ्यो मित्रबृहस्पतिपत्नितारानिर्ऋतिप्रावहीभ्यो नमः ।। १७ ।।

